दिपरित्यागेनघटादेःस्थानांतरेअदर्शनादितिभावः । ननुभेर्यादिप्रदेशोत्पन्नःशब्दःस्थानांतरेउपलभ्यतइत्यसिद्धं । शब्दश्रवसोः सन्निकर्षाभावात् । सहिनतावच्छ्रोत्रस्यगमनेनसंभवति । तस्यामूर्तस्यगत्यभावात् । नापिशब्दस्यागमनेन । सहिनतावच्छंखादिकमाश्रयंपरित्यज्यागंतुमलं । गुणत्वात् । नापिशंखाद्यागमनेनश्रोत्रप्रत्यासत्तिः । तदनुपलंभादित्यतआह ॥शब्दोहीति॥ स्थानांतरंस्थानांतरे गत्वाउत्पद्य श्रुतिंश्रुतिंप्रतिप्रतिश्रुतितस्यभावःप्रतिश्रुतित्वं श्रोत्रविषयत्वं । भेर्यादिप्रदेशोत्पन्नःशब्दःदेशांतरेशब्दांतरमुत्पादयतिसचशब्दांतरमितिश्रोत्रप्रदेशोत्पन्नःशब्दःश्रोत्रविषयोभवतीतियावत् । यद्वादुंदुभ्यादिप्रदेशोत्पन्नएवशब्दोदेशांतरंकर्णशष्कुल्यवच्छिन्नप्रदेशंगत्वाश्रुतिविषयत्वमुपैति । नचगुणत्वात्तदनुपपत्तिः । गंधादिवदुपपत्तेरित्यंगीकारवादेनेदंव्याख्येयं । ननुयदिभगवतएवजगत्कारणत्वेअयंदृष्टांतस्तर्हियथादुंदुभेरितिदुंदुभेस्तुग्रहणेनेत्येतावतापूर्तेर्हन्यमानस्याघातस्यवेतिकिमर्थमुक्तंइत्यतआह ॥ **भगवदिच्छायाइति** ॥ भगवतोजगत्कारणत्वेदुंदुभ्यादिदृष्टांतः । तदिच्छायाःतत्कारणत्वे तदाघातादिदृष्टांतइत्यर्थः । उक्तार्थेकथमयंदृष्टांतइत्यतोदुंदुभेर्हन्यमानस्यनबाह्याञ्शब्दान्शक्नुयात्ग्रहणायेतिवाक्यंव्याचष्टे ॥ **नहीति** ॥ दुंदुभिंपश्यन्नपिमुरजशब्दोयमितिगृह्णात्येवकदाचिदित्यतउक्तं ॥ **दुंदुभ्याघातइति** ॥ दृश्यमानइतिशेषः । अयंगृह्यमाणःशब्दः बाह्यानित्यस्यार्थोमुरजशब्दइति । मुरजजन्यःतदधीनश्चेत्यर्थः । किंतुदुंदुभ्यादिजन्यःतदधीनश्चेतिगृह्णा

भाष्यं ॥ शब्दोहिस्थानांतरंगत्वाप्रतिश्रुतित्वमुपैति । भगवदिच्छायादृष्टांतोदुंदुभ्याघातादिः । नहिदुंदुभिंपश्यन्पुरुषोदुंदुभ्याघातेमुरजशब्दोयमितिगृह्णाति ।

तीतिशेषः । एवंदृष्टांतवाक्यंव्याख्यायदार्ष्टांतिकंस्वयमाह ॥ एवमिति ॥ भगवदिच्छांचेतिशेषः । अन्याधीनं अन्यजन्यंचेत्यपिग्राह्यं । भगवदिच्छाधीनं तज्जन्यंचेत्यपिग्राह्यं । मायावादिभिरुत्पत्तिकालेजगतोब्रह्मात्मकत्वमवगमयितुंकार्याणामुत्पत्तेः प्राक्कारणादभिन्नत्वेदृष्टांतमाह । सयथार्द्रैंधनाग्नेरिति प्रलयकालेप्यस्यप्रपंचस्यब्रह्मात्मकत्वमितिदृष्टांतपूर्वकमाह । सयथासर्वासामपामितिउत्तरप्रकरणतात्पर्यमुक्तं । तदसदितिभावेनतत्तात्पर्यमाह ॥ तदेवेति ॥ भगवज्जन्यत्वंभगवदधीनत्वंचेत्यर्थः। एवकारेणपरोक्ततात्पर्यंव्यावर्तयति । कुतोव्यावर्तनीयमित्यतआह ॥ नह्यग्निरेवेति ॥ ननूदकराशिरेवसमुद्रइत्युच्यतइतिनचापएवसमुद्रइतिकथमुक्तमित्यतआह ॥ नहीति ॥ यदिसमुद्रशब्देनोदकराशिरेवोच्येत तर्हिसर्वासामपांसमुद्रएकायनमितिसमुद्रस्यावाश्रयत्वोक्तिर्विरुध्येत । अपामेवावाश्रयत्वाभावादित्यर्थः कस्तर्ह्यपामाश्रयइतिपृच्छति ॥ किंत्विति ॥ उत्तरमाह ॥ वरुणइति ॥ वरुणस्यसर्वप्रत्यक्षत्वाभावात् सर्वप्रत्यक्षसिद्धमेवाश्रयंदर्शयितुंअपांखातोवेत्युक्तं तर्हिश्रुतौवरुणएकायनमित्याद्युक्तिःस्यादित्यतआह ॥ सएवेति ॥ ननुएवंवाअरेइदंमहद्भूतमनंतमपारमितिदार्ष्टांतिकवाक्योक्तस्यदृष्टांतोनोपलभ्यते । नचसयथासैंधवखिल्यइत्युक्तसैंधवखिल्यस्यैवतत्रदृष्टांतत्वमितिवाच्यं । तस्यानंतापारत्वाद्यभावात् । अनुक्तेश्च । विज्ञानघनएवैतेभ्यइति तदुपमेयस्यवक्ष्यमाणत्वाच्च । नापिउदकइत्युक्तं जलमेव । तस्यवरुणाद्याश्रितत्ववत् । परमात्मनोपिअन्याश्रितत्वप्र

भाष्यं ॥ एवंभगवंतंजानन्नान्याधीनंजगदितिगृह्णाति । किंतुभगवदिच्छाधीनमित्येव । तदेवदर्शयति । सयथार्द्रैंधाग्नेःसयथासर्वासामपामित्यादिना । नह्यग्निरेवधूमः । नचापएवसमुद्रः । नह्यपामापएवाश्रयः । किंतुवरुणोपांखातोवा । सएवचसमुद्रइत्युच्यते ।

संगादित्यतोवरुणापांखात्तयोरेवतत्रदृष्टांतत्वंवक्तुमुक्तमर्थमतिदिशति ॥ एवमेवेति ॥ अनेनलवणमेवेत्यनंतरंसैंधवखिल्यस्य विलीनस्यसर्वासामपांसमुद्रएकायनमितिवाक्यमध्याहर्तव्यमित्युक्तंभवति । इदानीमनंतमपारंइत्युक्तःकइतिशंकांवारयन्एवं वाइतिवाक्यंव्याचष्टे ॥ वरुणवदिति ॥ एवमित्यस्याभिप्रायोवरुणवदित्यादि । सयथासैंधवखिल्यइत्युक्तसैंधवखिल्यदृष्टांत स्यदार्ष्टांतिकप्रतिपादकतयाविज्ञानघनएवैतेभ्यइतिवाक्यंव्याचष्टे ॥ जीवएवेति ॥ तल्लयमनु भूतसंबंधलयानंतरमित्यर्थः ॥ भगवंतप्राप्नोतीति ॥ अनेनविज्ञानघनोजीवएवैतेभ्यःभूतेभ्यःसमुत्थायतान्येवानुविनश्यति ततइदंमहद्भूतमनंतमपारंभग वंतंप्राप्नोतीतिसंबंधःसूचितोभवति । समुद्रेसमुद्रोदके । प्राप्तःसैंधवखिल्यःयथासमुद्रंप्राप्नोतीत्यर्थः । ननुयदिएवंवाअरेइदंम हद्भूतमित्युक्तभगवतोवरुणोपांखातोवादृष्टांतत्वेनाभिप्रेतस्तर्हिंवरुणाद्याश्रितोदकस्थानीयंभगवदाश्रितंकिमित्यतआह ॥ समु द्रेति ॥ मुक्ताःपूर्वमुक्ताः । यतोयतस्त्वाददीतलवणमेवेतिसमुद्रजलस्यैकस्वभावत्वोक्त्यनुरोधादुक्तं ॥ एकस्वभावाइति ॥ मुक्तस्यैकत्वेनैकस्वभावत्वशंकाभावादेकस्वभावत्वोक्तिर्व्यर्थास्यादित्यतउक्तं ॥ वह्वइति ॥ ननुतर्हिंवहूनांमुक्तानांएकसमुद्र जलस्थानीयत्वंकथमित्यतआह ॥ वह्वइति ॥ ननुबहुत्वेसामुद्रंजलमित्येकवचनप्रयोगःकथमित्यतआह ॥ सामुद्रमिति ॥

भाष्यं ॥ एवमेवसैंधवखिल्यस्यविलीनस्यसमस्तांभसश्चवरुणोपांखातोवासमुद्राख्यआश्रयः । वरुणवदपांखातवद्वानंतोपारोभगवान् । जीवएवविज्ञानघनाख्योभूतसंबंधाज्जातःसंस्तल्लयमनुभवंतमाप्नोति । समुद्रेप्राप्तसैंधवखिल्यवत् । समुद्रजलस्थानीयामुक्ताःवह्वएकस्वभावाः । वह्वोहिजलपरमाणवः । सामुद्रंजलमेकाश्रयं ।

303

सामुद्रंजलमितिव्यवहारःएकाश्रयत्वनिमित्तइत्यर्थः । परमात्मरूपैकाश्रयामुक्ताःकथंसमुद्रजलस्थानीयाइत्यतोवाह ॥ **सामुद्रमिति** ॥ एकोवरुणःअपांखातोवाश्रयोयस्यतत्तथोक्तं । नहास्योद्ग्रहणायैवस्यादित्युक्तसैंधवखिल्यस्थानीयमुक्तधर्मप्रतिपादकतयानप्रेत्यसंज्ञास्तीतिवाक्यंव्याचष्टे ॥ **मुक्तानामिति** ॥ अपिशब्देनमुक्तस्वरूपंसमुच्चीयते । अन्यैरमुक्तैः । अमुक्तानामपिशास्त्रेणमुक्तस्वरूपादिज्ञानसद्भावादाह ॥ **शास्त्रंविनेति** ॥ तथाचान्यैरज्ञायमानत्वाभिप्रायेणैवसंज्ञानास्तीत्युक्तं । नत्वभावाभिप्रायेण तथासतिअनंतंवैनामेत्यादिश्रुतिविरोधादितिभावः । ननुपरोक्तरीत्याप्रेत्यमुक्त्यनंतरंसंज्ञाज्ञानंमुक्तस्यनास्तिमुक्तोनविजानातीत्येवार्थःकिंनस्यादित्यतस्तत्रांऽऽतरानुपपत्तिंतावदाह ॥ **संज्ञेति** ॥ नविजानातीत्युक्ते । संज्ञानास्तीत्यस्यनविजानातीत्यर्थत्वे । अलंवाअरेइदंविज्ञानायेत्युक्तेःनप्रेत्यसंज्ञास्तीतिमुक्तस्वरूपप्रतिज्ञयाविरोधःस्यात् । कुतः । संज्ञानास्तीतिमुक्तस्यज्ञानाभावमुक्त्वाइदंमुक्तजातंविज्ञानायविज्ञातुमलंसमर्थमितिमुक्तस्यज्ञानसद्भावोक्तेरित्यर्थः । किंचतस्यवाक्यस्यमुक्तोनविजानातिइत्यर्थत्वेमोक्षस्यापुरुषार्थत्वंस्यादित्याह ॥ **नचेति** ॥ नकेवलंपुरुषार्थत्वाभावः । किंतुअनर्थरूपत्वंचस्यादित्याह ॥ **मग्नस्यहीति** ॥ ननुक्रियाकारकफलसंबंधस्यात्यंतविच्छेदोहिमुक्तत्वमिति । क्वास्तिमुक्तस्यज्ञानमित्यतोमुक्तस्वरूपेप्रमाणमाह ॥ **नानात्वेनेति** ॥ व्याख्यातमेतत् । ननुसंज्ञानास्तीत्युक्तंविज्ञानाभावमेवान्वयव्यतिरेकाभ्यांदृढीकर्तुंयत्रहीत्यादिवाक्यंप्रवृत्तं । यत्रयदाअविद्यायां

---

भाष्यं ॥ मुक्तानांसंज्ञाप्यन्यैर्नज्ञायतेशास्त्रंविना । संज्ञानास्तीत्युक्त्वाअलंवाअरेइदंविज्ञानायेत्युक्तेर्नविजानातीत्युक्तेप्रतिज्ञाविरोधः । नचसर्वाज्ञानंपुरुषार्थः । मग्नस्यहिपरेज्ञानेकिंनदुःखतरंभवेदितिच । नानात्वेनाभिसंबंधास्तदातत्कालभाविना ।

स्थितायांद्वैतमिवभवति शरीरेंद्रियादिरूपंस्वव्यतिरिक्तंकिमप्यपारमार्थिकंभवति।तत्तदाइतरःकर्ताइतरंघटंइतरेणचक्षुषापश्यती त्यादियुज्यते।यत्रवामुक्तावविद्यायांनिवृत्तायांअस्यविदुषःसर्वकारणादिकंआत्मैवाभूत्स्वव्यतिरेकेणकिमपिनाभूत्तत्तस्यामवस्था यांकेनकरणेनकंविषयंपश्येदिति।तथाचज्ञानसद्भावांगीकारेमुक्तस्येदंज्ञानाभावोपपादनमयुक्तंस्यादितिचेत्।न।स्यादेतद्यदिमुक्तस्य ज्ञानाभावोपपादनायेदंप्रवृत्तंस्यात् । नचैवं किंनाम अलंवाअरेइदंविज्ञानायेत्युक्तंमुक्तस्यज्ञानसद्भावमुपपादयितुमेवाद्वितीयचैत न्यमात्रावस्थानलक्षणंमोक्षमंगीकुर्वतांमतेऽनिष्टप्रसंगंवक्तुंतस्यव्याप्तिसाक्षेपत्वात्तदभिधानपूर्वकंप्रवृत्तत्वात्।नत्वापादनमनिष्टस्य भवति।नचभोगाभावादिकमनिष्टं। अतःप्रसंगाभासोयमित्यतश्चाह॥नचेति॥ सर्वस्यगंधादेर्विषयस्यविज्ञानकरणस्यपरमात्मनोवि ज्ञातुःस्वस्यान्येषांमुक्तानांचाज्ञानंपुरुषार्थोनचभवतीत्यर्थः । कुतइतिचेत् । मोक्षेदर्शनादिभोगस्यप्रमितत्वेनतद्विरुद्धत्वादिति भावेनाह ॥ **मग्नस्येति** ॥ ननुकिमर्थमिदंपरमतेअनिष्टप्रसंगाभिधानपरतयाव्याख्यायतेमुक्तौकरणाद्यभावात्दर्शनादिकंनास्ती तिवस्तुस्थितिकथनमेवकिंनस्यादित्यतोमुक्तौभेदभोगादेःप्रमितत्वादितिभावेनतत्रस्पष्टप्रमाणमाह ॥ **नानात्वेनेति** ॥ नन्वत्रे वशब्देनभेदमिथ्यात्वोक्तेःकथमुक्तार्थमिदंवाक्यंइत्यतस्तदर्थमाह ॥ **इवशब्दस्त्विति** ॥ इवशब्दस्यास्वातंत्र्यार्थत्वमुपपादय ति ॥ **नहीति** ॥ यत्यदधीनंतत्ततःपृथगित्येवइवशब्दाशिरस्कपृथगितिशब्देननोच्यते । तदनधीनस्यैवतथोच्यमानत्वात् ।

---

भाष्यं ॥ संयोगःप्रकृतेर्नैषांमुक्तानांतत्वदर्शनात् । प्रवर्ततिपुनःसर्गेतेषांसानप्रवर्तते । आनंदेनविनाचैवभोगेनविषयेणच । सर्वेतेब्रह्मणस्तु ल्याआधिपत्यंनचैवहीतिवायुप्रोक्ते । इवशब्दस्त्वस्वातंत्र्यार्थे । नहितदधीनंपृथगित्येवोच्यते ।

किंतुइवशब्दशिरस्केनैवराज्ञःपृथगिवभृत्यइतिप्रयोगदर्शनादित्यर्थः । हिशब्देनानुभवप्रसिद्धिंदर्शयति । श्रुतिव्याख्यानमुपक्रम्य अपव्याख्यानंकिमर्थंनिराक्रियतइत्याशंकांपरिहरन्नुपसंहरति ॥ तस्मादिति ॥ ज्ञानाभावार्थत्वस्यनिराकृतत्वादित्यर्थः । नज्ञायते मुक्तस्वरूपंतत्संज्ञाचेतिशेषः । तथाचापव्याख्याननिरासस्यस्वव्याख्यानदार्ढ्यार्थत्वान्नासंगतिरितिभावः । स्वकृतव्याख्यानदार्ढ्यायब्राह्मणव्याख्यानरूपंप्रमाणमुदाहरति ॥ पतिरित्यादिना ॥ नवाअरेपत्युःकामायेतिवाक्यंव्याचष्टे ॥ पतिर्जायाप्रियइति ॥ स्वेच्छयापतीच्छया । एवमुत्तरवाक्यान्यपिव्याख्येयानि । आत्मनस्त्वितिवाक्यंव्याचष्टे ॥ विष्णोरिति ॥ तदेवकैमुत्येनोपपादयति ॥ स्वयंचेति ॥ यदाविष्णोरिच्छावशेनैवस्वयमपिस्वप्रियोनस्वेच्छया तदाकिमुवक्तव्यंस्वेच्छयान्यप्रियोनभवतीति । स्वेच्छयैवस्वयंस्वप्रियःकिंनस्यादित्यतआह ॥ हंतीति ॥ स्वात्मानंस्वस्याप्रियंकृत्वात्मनाबुध्या । बुद्धिपूर्वकमात्मानंहंति हियस्मात्तस्मान्नस्वेच्छयास्वयंस्वप्रियइत्यर्थः । हेत्वंतरमाह ॥ निरयइति ॥ बुद्धिपूर्वंदुष्कर्माणिकृत्वेतिशेषः । आत्मनोविज्ञानेनेदंसर्वंविदितंभवतीत्येतद्व्याचष्टे ॥ प्राधान्येनेति ॥ हरेरित्यस्यपूर्वोत्तराभ्यांसंबंधः । विदितवत्विदितफलमित्यर्थः । ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेदेतिवाक्यंव्याचष्टे ॥ ब्रह्मजात्यात्मकमिति ॥ यःब्रह्मजात्यभिमानिनंब्र

भाष्यं ॥ तस्मादमुक्तैर्नज्ञायतइतिसंज्ञानास्तीत्युक्तं । पतिर्जायाप्रियोनैवस्वेच्छयातुभविष्यति । विष्णोरिच्छावशेनैवस्वयंचस्वप्रियोभवेत् । विष्णोरिच्छावशेनैवहंतिह्यात्मानमात्मना । स्वात्मानमप्रियंकृत्वानिरयेपातयत्यपि । प्राधान्येनहरेर्ज्ञानात्सर्वंविदितवद्भवेत् । ब्रह्मजात्यात्मकंवेत्तिनैवविष्णुवशंहियः । ब्रह्माणंतंततोब्रह्मापातयेत्तमसिध्रुवं ।

ह्माणंविष्णुवशंनैववेत्तीतिसंबंधः। अन्यवशंचवेत्तीत्यपिग्राह्यं। उक्तव्याख्यानं। क्षत्रंतंपरादादित्यादावतिदिशति॥ **एवमिति**॥ वायुंक्षत्रात्मकंवायुंविष्णुवशंयोनवेत्तितंतमसिपातयेदित्यर्थः। एवमुत्तरत्रापि। नवाअरेवित्तस्यकामायेत्यत्रजडवित्तस्यकामनाभावात् तदभिमानीचेतनोग्राह्यः। सचान्यथाज्ञानिनःतमसिपातनेसमर्थएवेतिवित्तंपरादात्योन्यत्रात्मनोवित्तंवेदेत्यपिवक्तव्यमित्यभिप्रेत्याह॥ **वित्तरूपइति**॥ पंचभूतानितदभिमानिनः अतएवलोकाइत्येतत्लोकाभिमानिनइतिव्याख्यातं। जडस्यमिथ्याज्ञानिनोऽनर्थदानासामर्थ्यात्। अतएवसर्वंतंपरादादित्यत्रसर्वशब्दोनजडाजडपरःकिंत्वित्यतआह॥ **सर्वाभिमानिनीति**॥ इदंब्रह्मेत्यादियदयमात्मेत्यंतंवाक्यंव्याचष्टे॥ **सर्वमिति**॥ सयथादुंदुभेरित्यादिदृष्टांतवाक्यतात्पर्यमाह॥ **विष्णोर्जातमिति**॥ वशे स्थितमिति अत्राप्यनुवर्तते। शब्दस्यशंखाद्यधीनत्वंप्रकारांतरेणाप्याह॥ **शंखशब्दइति**॥ अस्यमहतो भूतस्यनिश्वसितमेतद्यदृग्वेदइत्यादिव्याचष्टे॥तस्मादिति॥ वेदशब्देनात्रावांतरऋगादीनांग्रहणं ऋगादिव्यतिरिक्तविद्याभावात्कथंपृथग्विद्याग्रहणमित्यतआह॥ **विद्याख्येति**॥ यदवांतरभेदाऋगादयःसामूलिकाश्रुतिःविद्याख्या। श्लोकाइत्यात्यार्थः पंचरात्रेति। अनुव्याख्यानानीत्यस्यार्थःतासांचेति। तासांव्याख्यानांविस्तरइति। एतानिसर्वाणीत्यस्यप्रागुक्तपरामर्शकत्वेवै

---

भाष्यं॥ एवंक्षत्रात्मकोवायुर्वित्तरूपश्चवित्तपः। पंचभूतानिविश्वेचदेवालोकाभिमानिनः। सर्वाभिमानिनीदेवीमूलप्रकृतिरेवच। सर्वंविष्णौस्थितंविष्णोर्जातंविष्णोर्वशेसदा। शंखशब्दोयथाशंखदेवतावशगस्थितः। तस्माद्वेदाःसमुत्पन्नाविद्याख्यामूलिकाश्रुतिः। सर्वोपनिपदश्चैवपंचरात्राख्यसंहिताः। ब्रह्मसूत्राणिवेदानांव्याख्यास्तासांचविस्तरः।

307

यथ्यार्थात्प्रकारांतरेणार्थमाह ॥ **सर्वमेतदिति** ॥ सयथासर्वासामपांसमुद्रएकायनंएवंसर्वेषांस्पर्शानामित्यादिव्याचष्टे ॥ **वरुणस्येति** ॥ सर्वेवद्धाहरेर्वशइत्यनेनसर्वेषांस्पर्शाभिमानिनांदेवानां त्वक् त्वगिंद्रियांतर्गतपरमात्मरूपं परमात्मत्वगिंद्रियंवा अयनंआश्रयइत्यादिव्याख्यातंभवति । सयथासैंधवखिल्यइत्यादेस्तात्पर्यमाह ॥ **मुक्ताश्चेति** ॥ वरुणस्यवशेयद्वदापःएवंवशेहरेरितिपूर्वेणसंवंधः । यत्रत्वस्यसर्वमात्मैवाभूत्केनकंपश्येदित्याद्यापादनस्येष्टापादनत्वशंकापरिहारायानिष्टमाह ॥ **यदीति** ॥ अव्ययत्वादस्तीत्यर्थेचेच्छव्दः । येनेदंसर्वंविजानातीत्यस्यतात्पर्यंभगवद्रूपइति । विज्ञातारमित्यस्यतात्पर्यंस्वरूपेचेति । एतदुपलक्षणमितिभावेनाह ॥ **परस्परमिति** ॥ मुक्तानामितिशेषः । विपर्ययेपर्यवसानमाह ॥ **तस्मादिति** ॥ मुक्तेःसर्वैरभिवांच्छनीयत्वात् । तारतम्यादितिस्वरूपकथनार्थमुक्तं । ननुनिश्वसितमेतद्यदृग्वेदइतिवेदानामितिहासादीनांचविष्णुजन्यत्वोक्तेः वेदानामपौरुषेयत्वमितिहासादीनांपौरुषेयत्वमितिविशेषःकथमित्यतआह ॥ **सर्गेसर्गइति** ॥ वीप्सेयं । यःशव्दसमूहः नकेवलमर्थतः किंतुशव्दतोपि अन्यथानैवभवेदितिसंवंधः । अर्थतएवान्यथानभवेत् शव्दतस्तुभवेदेव । यदिसर्वेवेदाःविष्णुनिर्ग

---

भाष्यं ॥ सर्वमेतज्जगच्चैवनिःसृतंतुरगाननात् । वरुणस्यवशेयद्वदापएवंवशेहरेः । सर्वेवद्धाश्चमुक्ताश्चतारतम्यात्मनास्थिताः । यदिमुक्तस्यविज्ञानंगंधादिविषयेनचेत् । तथैवभगवद्रूपेस्वरूपेचपरस्परं । एवमज्ञानरूपांतांमुक्तिंकोनामवांच्छति । तस्माद्विष्णोर्वशेसर्वेयथेष्टमुपभोगिनः । मुक्ताःसदातारतम्यात्तिष्ठंत्यात्रह्मणोखिलाइतिहयग्रीवसंहितायां । सर्गेसर्गेतुयोनैवशव्दतोप्यन्यथाभवेत् । श्रुत्याख्यःसतुविज्ञेयइतिहासादिरर्थतः ।

ताःतर्हिब्रह्मादीनांऋषित्वप्रसिद्धिर्नस्यादित्यतआह ॥ भगवद्दृष्टमेवेति ॥ यदियदा । तत्रतदा ब्रह्मादीनामपिवेदद्रष्टृत्वेको विशेषोविष्णोरित्यतआह ॥ वेदइति ॥ विष्णूक्तोविष्णुनिर्गतएववेदः । परैर्ब्रह्माद्यैरयंवेदइतितपसैवदृश्यते । नतुविष्णुवत्तपसाविनैवेतिविशेषइत्यर्थः ॥ ततश्चायंखंडार्थः ॥ याज्ञवल्क्योमैत्रेयीति स्वस्त्रियंसंबोध्यइत्युवाच किमिति अरेमैत्रेयि अहमस्मात्स्थानात्गृहस्थाश्रमात् उद्यास्यन्नस्मिप्रव्रजिष्यन्नस्मि । अहंतेतवानयाकात्यायन्याअन्ययास्वभार्ययासहअंतंनिर्णयंविभागं करवाणीति । हंतेत्यास्वादने ॥ १ ॥ साएवमुक्तामैत्रेयीउवाचहकिल । किमिति । हेभगोःभगवन्यत्यदा मेइयंसर्वापृथिवीवित्तेनपूर्णास्यात्तदातेनवित्तपूर्णपृथिवीरूपोपायेनामृतामुक्तास्यांकथंकिं । नुवितर्के । इतिपृष्टोयाज्ञवल्क्योनेतिनानेनमुक्ताभविष्यसीतिहोवाच । किंतत्सर्वात्मनाव्यर्थमित्यतोभिप्रायमुद्घाटयति ॥ यथैवेति ॥ यथालोकेउपकरणवतांधनादिसाधनसंपत्तिमतां सुखेनजीवितमेवस्यात् तथातेवित्तेनजीवितमेवस्यात् नतुतेनामृतत्वस्याशास्ति ॥ २ ॥ एवमुक्तासामैत्रेयीउवा

---

भाष्यं ॥ भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यतेयदि । ऋषिभेदस्तुतत्रस्याद्वेदोनाविष्णुनिर्गतः । वेदइत्येवविष्णूक्तस्तपसादृश्यतेपरैरितिच ॥ मैत्रेयीब्राह्मणं ॥ ४ ॥

उप० ॥ मैत्रेयीतिहोवाचयाज्ञवल्क्यउद्यास्यन्वाअरेहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतंकरवाणीति ॥ १ ॥ साहोवाचमैत्रेयीयन्नुमइयंभगोःसर्वापृथिवीवित्तेनपूर्णास्यात्कथंतेनामृतास्यामितिनेतिहोवाचयाज्ञवल्क्योथयथैवोपकरणवतांजीवितंतथैवतेजीवितंस्यादमृतत्वस्यतुनाशास्तिवित्तेनेति ॥ २ ॥

च । येनवित्तादिनाहममृतानस्यांतेनाहंकिंकुर्यां । ततोमोक्षसाधनत्वेनभगवान्यदेववेदतदेवमेब्रूहीति ॥ ३ ॥ एवंतयोक्तोयाज्ञवल्क्यउवाच । अरेमैत्रेयित्वंसतीपतिव्रता । नःप्रियाप्रीतिविषया । नःप्रियंयथाभवतितथाभाषसे । एहि । आस्वउपविश । मोक्षसाधनंव्याख्यास्यामि । व्याचक्षाणस्यतुमेवचोनिदिध्यासस्वव्यासंगंविहायमनोधत्स्वेति ॥ ४ ॥ ब्रवीतुभगवानित्युवाचमैत्रेयीतिग्राह्यं । सएवमुक्तोयाज्ञवल्क्यो । वक्ष्यमाणमहिमाविशिष्टात्मापरोक्षज्ञानमेवमोक्षसाधनमितिभावेनतावत्पत्युर्यज्जायादिप्रियत्वंतद्धेतुत्वरूपमात्ममहिमानमुवाच । ननुपत्युःस्वेच्छयैवजायाप्रियत्वोपपत्तौकिमात्मेच्छयेत्यतआह ॥ नवाइति ॥ अरेमैत्रेयि पत्युःकामाय चतुर्थीतृतीयार्थे कामेन । पतिःप्रियोजायायाइतिशेषः । नैवभवति । अस्वतंत्रत्वात् । किंतुआत्मन

उप० ॥ साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यायदेवभगवान्वेदतदेवमेब्रूहीति ॥ ३ ॥ सहोवाचयाज्ञवल्क्यःप्रियावतारेनःसतीप्रियंभाषसएह्यास्वव्याख्यामिते व्याचक्षाणस्यतुमेनिदिध्यासस्वेति ॥ ४ ॥ सहोवाचनवाअरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामायपतिःप्रियोभवति नवाअरेजायायैकामायजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवति नवाअरेपुत्राणांकामायपुत्राःप्रियाभवंत्यात्मनस्तुकामायपुत्राःप्रियाभवति नवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुकामायवित्तंप्रियंभवति नवाअरेब्रह्मणःकामायब्रह्मप्रियंभवत्यात्मनस्तुकामायब्रह्मप्रियंभवति नवाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रियंभवति नवाअरेलोकानांकामायलोकाःप्रियाभवंत्यात्मनस्तुकामायलोकाःप्रियाभवंति नवाअरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामायदेवाःप्रियाभवंति नवाअरेभूतानांकामायभूतानिप्रियाणिभवंत्यात्मनस्तुकामायभूतानिप्रियाणिभवंति नवाअरेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवति

स्तुपरमात्मनएवकामायेच्छयापतिःप्रियोभवति । जायायाइतिशेषः। तस्यस्वतंत्रत्वादित्यर्थः । एवमुत्तरवाक्यान्यपिव्याख्ये यानि । जायायैजायायाः वित्तस्य वित्ताभिमानिनःकुवेरस्य ब्रह्मणःब्राह्मणजात्यात्मकचतुर्मुखस्य क्षत्रस्यक्षत्रात्मकस्यवायोः । लोकानांलोकाभिमानिनां । भूतानांपंचमहाभूताभिमानिनां । सर्वस्यसर्वाभिमानिन्याःलक्ष्म्याः । एवमुक्तगुणविशिष्टभगवदप रोक्षज्ञानमेवमोक्षसाधनमितिभावेनाह ॥ आत्मावाअरेद्रष्टव्यइति ॥ वैशब्दोवधारणे। दर्शनंकथंस्यादित्यतआह ॥ श्रो तव्यइति ॥ दर्शनार्थंश्रवणमनननिदिध्यासनानिकर्तव्यानीत्यर्थः । ननुदेवतास्वरूपादिदर्शनादेरपिफलहेतुत्वेनसंपाद्यत्वात्क थमात्मैवेत्युक्तमित्यतआह ॥ आत्मनोवाइति ॥ आत्मनोदर्शनेनश्रवणेन मत्यामननेन विज्ञानेननिदिध्यासनेन इदंसर्वंदे वतादिरूपंजगद्विदितंविदितवत्विदितफलंभवति । परमात्मनःप्राधान्येनतज्ज्ञानेसतितत्फलेऽप्रधानजगज्ज्ञानफलमंतर्भवती त्यर्थः । कुतःपरमात्मनःप्राधान्यमितिचेत् । सर्वस्यजगतःपरमात्माश्रितत्वादितिभावेनतद्विपरीतज्ञानिनोऽनर्थमाह ॥ ब्रह्मत मिति ॥ यःपुमान्ब्रह्मब्राह्मणजात्यात्मकंचतुर्मुखं । आत्मनःपरमात्मनोऽधीनत्वेननवेद । किंतुअन्यत्रतदनाश्रितत्वेनस्थानां तरेचवेद तंवेत्तारं । ब्रह्मचतुर्मुखः । परा लोकालोकस्यपरतःअंधेतमसि अदात्पातयेदित्यर्थः । एवमुत्तरत्रापि क्षत्रादिपदार्थ



उप० ॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्योमैत्रेय्यात्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदंसर्वंविदितं ॥ ५ ॥ ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेद क्षत्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेद लोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेदवेदास्तंपरादुर्योन्यत्रात्मनोवेदान्वेद भूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेद

स्तूक्तएव । वित्तंतंपरादादित्यपिग्राह्यं । यत्किंचित्पतिजायापुत्राणामन्यथाज्ञानिनःतमःपातनासमर्थत्वात्तेषामसंग्रहः । एवंब्र ह्मादीनांभगवदनाश्रितत्वज्ञानिनोनर्थोक्त्यायद्भगवदाश्रितत्वंसिद्धंतदाह ॥ इदंब्रह्मेति ॥ इदंब्रह्मादिकं । यतयत्रायमाधारभू तएवात्मेत्यर्थः ॥ ६ ॥ परमात्मनोजगत्कारणत्वाज्जगतस्तदधीनत्वात्प्राधान्यमितिभावेनजगत्कारणत्वादौदृष्टांतमाह ॥ सयथे ति ॥ सःवक्ष्यमाणोदृष्टांतोयथा । हन्यमानस्यदुंदुभेर्दर्शनेसतिश्रूयमाणान्शब्दान्बाह्यांस्तत्तदन्यमुरजादिकारणजन्यांस्तदधी नान्ग्रहणायग्रहीतुंनशक्नुयात् । किंतुदुंदुभेस्तदाघातस्यवापूर्वभावितयाग्रहणेनसशब्दोगृहीतः । तज्जन्यतयातदधीनत्वेनवा । एवंभगवंतंतदिच्छांचजानन्जगदन्यजन्यमन्याधीनंइतिनगृह्णाति । किंतुभगवदिच्छाजन्यंतदधीनमित्येवगृह्णातीतिभावः । यद्वाहन्यमानस्यदुंदुभेःतदभिमानिदेवतायाःग्रहणेसतिश्रूयमाणान्शब्दान्बाह्यानन्याधीनान्ग्रहणायनशक्नुयात् । दुंदुभेस्तदा घातस्यवातदभिमानिदेवतायाःवाग्रहणेनदुंदुभ्यादिशब्दोदेवताधीनतयागृहीतइतियोज्यं । एवमुत्तरत्रापि । वीणायैवीणायाः वाद्यमानायैवाद्यमानायाः ॥ ७–९ ॥ ब्रह्मणःजगत्कारणत्वमेवदृष्टांतेनाह ॥ सयथेति ॥ यथाआर्द्रैरेधोभिःकाष्ठादिभिरिद्धो ग्निः । तस्मादभ्याहितात् । अभितः प्रज्वलितात् । पृथङ्नानाप्रकारं धूमाः । उपलक्षणमेतत् । विष्फुलिंगादयोपिविनिश्चरं

उप० ॥ इदंब्रह्मेदंक्षत्रमिमेलोकाइमेदेवाइमानिभूतानीदꣳसर्वंयदयमात्मा ॥ ६ ॥ सयथादुंदुभेर्हन्यमानस्यनबाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणा यदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः॥७॥सयथाशंखस्यध्मायमानस्यनबाह्यांच्छब्दांच्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दो गृहीतः ॥८॥ सयथावीणायैवाद्यमानायैनबाह्यांच्छब्दांच्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः॥९॥सयथार्द्रैधाग्नेरभ्याहितात्

ति । एवंवाएवमेवैतत्वक्ष्यमाणमस्यमहतोभूतस्यसदाविद्यमानस्यहयग्रीवरूपस्यब्रह्मणस्सकाशात्निश्वसितंनिर्गतं । किंतत्इत्यतआह ॥ यदिति ॥ ऋगाद्याःअवांतरवेदाः विद्यामूलश्रुतिः श्लोकाःपंचरात्रसंहिताः । यद्यपिइतिहासशब्देनश्लोकाअपि गृहीताः । यथोक्तंपुरस्तात् । पंचरात्रंभारतंचमूलरामायणंतथा । इतिहासइतिप्रोक्तइति । तथापिभारतरामायणयोरेवात्रेतिहासशब्देनग्रहणमितिनदोषः । सूत्राणिब्रह्मसूत्राणि । व्याख्यानानिवेदव्याख्यानानि । अनुव्याख्यानानि । तद्विस्तारभूतानिअनुव्याख्यानानीतियदित्यर्थः । शब्दप्रपंचस्यतज्जन्यत्वमुक्त्वाअर्थप्रपंचस्यापितदाह ॥ अस्यैवेति ॥ एतानिप्रमाणप्रसिद्धानि सर्वाणिमहदादीनि अस्यैवसकाशात्निश्वसितानिनिर्गतानि । सृष्टावायासाभावसूचनायनिश्वसितमित्युक्तं ॥ १० ॥ इदानीममुक्तानांपरमात्माधीनत्वमेवदृष्टांतेनाह ॥ सयथेति ॥ सवक्ष्यमाणोदृष्टांतोयथा । सर्वासामपांसमुद्रोवरुणः अपांखातोवा । एकायनंमुख्याश्रयः । एवंसर्वेषांस्पर्शानांस्पर्शाभिमानिनां । त्वक् त्वगिंद्रियांतर्गतंभगवद्रूपं । भगवत्त्वगिंद्रियंवा एकायनं ।

---

उप० ॥ पृथग्धूमाविनिश्चरंत्येवंवाअरेऽस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानान्यस्यैवैतानिनिश्वसितानि ॥ १० ॥ सयथासर्वासामपाꣳसमुद्रएकायनमेवꣳसर्वेषांस्पर्शानांत्वगेकायनमेवꣳसर्वेषाꣳरसानांजिह्वैकायनमेवꣳसर्वेषांगंधानांनासिकैकायनमेवꣳसर्वेषांरूपाणांचक्षुरेकायनमेवꣳसर्वेषांशब्दानाꣳश्रोत्रमेकायनमेवꣳसर्वेषाꣳ
बृ० भा० २७ संकल्पानांमनएकायनमेवꣳसर्वासांविद्यानाꣳहृदयमेकायनमेवꣳसर्वेषांकर्मणाꣳहस्तावेकायनमेवꣳसर्वेषामानंदानामुपस्थएकायनमेवꣳसर्वेषांविसर्गाणांपायुरेकायनमेवꣳसर्वेषामध्वनांपादावेकायनमेवꣳसर्वेषांवेदानांवागेकायनमेवं ॥ ११ ॥

एवमुत्तरत्रापि । अध्वनांगतिरूपकर्मणां ॥ ११ ॥ इदानींमुक्ताश्रयत्वंभगवतःसदृष्टांतमाह ॥ सयथासैंधवखिल्यइति ॥ सिंधुःसमुद्रोदकंतत्रभवःसैंधवः । सचासौखिल्यश्चसैंधवखिल्योलवणशकलं उदकेवरुणापांखातरूपसमुद्राश्रितोदके प्रास्तःप्रक्षिप्तःसन्नुदकमनुखिल्यारंभकत्वेनतदवयवभूतमुदकंविलीयमानमन्वेव । विलीयते कश्चिदपिअस्यविलीनस्यखिल्यस्योद्ग्रहणायपूर्ववत्विशिष्यगृहीतुंनैवशक्तःस्यात् । हेतिप्रसिद्धमाह । कुतः । यतोयंतोयस्माद्यस्माद्देशात् । तत्उदकमाददीतगृहीत्वास्वादयेत् । तत्रतत्रलवणमेवलवणरसोपेतमेवगृह्यतेनखिल्यभावइति । तथाचविलीनभावस्यसैंधवखिल्यस्यसर्वासामपांचसमुद्रएकायनमितिग्राह्यं । यथायंदृष्टांतः । एवंअरेमैत्रेयिविज्ञानघनोजीवएवतेभ्योभूतेभ्यअवादिभ्यः । समुत्थाय तदुपादानकदेहसंबंधेनोत्पद्य । तानिलीयमानिदेहारंभकभूतानि । अन्वेवविनश्यति सर्वथादेहवियोगलक्षणमुक्तिंप्राप्नोति । भूतबंधस्तुसंसारोमुक्तिस्तेभ्योविमोचनमितिवचनात् । ततश्चेदंमहद्भूतंअनंतमपारंभगवंतंपूर्वमुक्ताश्रयंप्राप्नोति । अत्रवरुणवत् अपांखातवद्वाभगवान् समुद्रजलवत्पूर्वमुक्ताः सैंधवखिल्यवत्मुच्यमानजीवइतिविवेकः॥१२॥नहास्योद्ग्रहणायेत्युक्तसैंधवखिल्यसाम्यंमुच्यमानस्याह॥ नप्रेत्येति ॥ प्रेत्यमुक्त्यनंतरंमुक्तानांसंज्ञा नामधेयं उपलक्षणमेतत् । तत्स्वरूपंचामुक्तैःसम्यक्ज्ञायतइतिसंज्ञा शास्त्रंविनास

उप० ॥ सयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतनहास्योद्ग्रहणायैवस्याद्यतोयतस्त्वाददीतलवणमेवैवंवाअरेइदंमहद्भूतमनंतमपारं विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः ॥ १२ ॥ साहोवाचमैत्रेय्यत्रैवमाभगवानमूमुहन्नप्रेत्यसंज्ञास्तीति

म्युक्ज्ञानंनास्तीत्यरे अहंब्रवीमीतियाज्ञवल्क्यउवाच । साएवमुक्तामैत्रेयीमोक्षस्वरूपंसम्यक्ज्ञातुकामासर्वथाज्ञानाभावोऽनेनो क्तइत्यारोप्योवाच । भगवन्अत्रैवावश्यंवेदितव्यएवविषये मामां अमूमुहत्अमोहयत् । कथंप्रेत्यमोक्षानंतरंसंज्ञाज्ञानंनास्ती ति । नचेदंसम्यक्ज्ञानं । परमपुरुषार्थेमोक्षेज्ञानाभावस्यासम्यक्त्वादिति । सःएवमुक्तोयाज्ञवल्क्यः अहंमोहंमोहकवाक्यं नब्र वीमि । त्वंतुमुक्तसंज्ञाप्यमुक्तैर्नज्ञायतइतिमदभिप्रायमज्ञात्वाअन्यथाकल्पयसीत्युवाच । पुनस्तस्याःविशेषजिज्ञासांज्ञात्वामुक्त स्वरूपमुपदिशति ॥ अलमिति ॥ इदंमुक्तजातं विज्ञानाययथायोग्यपरमात्मस्वरूपादिकंविशेषेणज्ञातुमलंसमर्थं ॥ १३ ॥ नि र्विशेषचैतन्यभावमापन्नस्यमुक्तस्यनविज्ञानादिकमस्तीतिवदतांमायावादिनांमतेअनिष्टप्रसंगंवक्तुंतस्यव्याप्तिसापेक्षत्वात् व्यतिरे कव्याप्तिंतावदाह ॥ यत्रहीति ॥ यत्रयदा । द्वैतंद्वयोर्भावोद्वितांभेदइतियावत् तस्याइदंधर्मि । द्वैतंभिन्नंवस्त्वित्यर्थः । इव शब्दोभिन्नस्यवस्तुनःपारतंत्र्याभिप्रायेण तत्तदा । इतरःपुरुषः । इतरंघटादिकं । पश्यती[illegible]ादि हिशब्देनयदाद्वैतसद्भावःत दैवदर्शनादिभोगइतिव्याप्तौप्रमाणप्रसिद्धिमाह । एवंप्रसंगांगव्याप्तिमुक्त्वाप्रसंगमाह ॥ यत्रेति ॥ यत्रमुक्तौअविद्यायांनिवृ त्तायां । अस्यविदुषः । सर्वंकरणादिकं । आत्मैवाभूतस्वव्यतिरेकेणकिमपिनाभूत् । तत्तस्यामवस्थायांकेनकरणेनकंविषयंजि घ्रेत् । घ्राणादिभोगोनस्यादित्यर्थः । येनेश्वरेणइदंसर्वंजीवोविजानाति तंपरमात्मानंकेनविजानीयात् । तज्ज्ञानाभावश्चस्यात् ।

उप० ॥ सहोवाचनवाअरेअहंमोहंब्रवीम्यलंवाअरइदंविज्ञानाय ॥ १३ ॥ यत्रहिद्वैतमिवभवतितदितरइतरंजिघ्रतितदितरइतरंपश्यतितदि तरइतरꣳशृणोतितदितरइतरमभिवदतितदितरइतरंमनुतेतदितरइतरंविजानाति । यत्रवाअस्यसर्वमात्मैवाभूत्तत्केनकंजिघ्रेत्तत्केनकंपश्येत्तत्केनकं शृणुयात्तत्केनकमभिवदेत्तत्केनकंमन्वीततत्केनकंविजानीयाद्येनेदꣳसर्वंविजानातितंकेनविजानीयाद्विज्ञातारमरेकेनविजानीयादिति ॥ १४ ॥

विज्ञातारंस्वात्मानंकेनविजानीयात् । एवंमुक्तांतरविषयकज्ञानमपिनस्यात् इतिग्राह्यं । नचेष्टापत्तिः । सर्वाज्ञानस्यापुरुषार्थत्वादिति ॥ १४ ॥ इतिमैत्रेयीब्राह्मणं ॥ ४ ॥ स्वहृदिस्थोपासनमेवमोक्षसाधनं नबहिष्ठोपासनमित्युक्त्याप्राप्तांतयोरूपयोर्वैलक्षण्यशंकांतयोरभेदोक्त्यापरिहरन्नस्यमहतोभूतस्येत्युक्तहयग्रीवस्यमहिमांतरमाह ॥ इयंपृथिवीत्यादिना ॥ सईश्वरोरूपंरूपंदेहंदेहंप्रतिरूपोरूपांतरंप्रतिबिंबोबभूवेतिरूपंरूपमित्यस्यपरकीयव्याख्यानमसत् । ब्रह्मणोजीवरूपेणप्रतिबिंबभवनस्यजीवब्रह्मैक्यनिरासेनैवनिरस्तत्वादितिभावेनतद्व्याचष्टे ॥ भगवतइति ॥ शृण्वेवीरइतिपूर्वंत्रिविधजीवानांप्रस्तुतत्वात्जीवाख्यइत्युक्तं । प्रतिबिंबः । तदधीनत्वेसतितत्सदृशइत्यर्थः । बभूवेत्युक्त्याजीवस्यभगवत्प्रतिबिंबत्वमिदानींनास्तीतिप्रतीयतेतांनिवारयति ॥ बभूवेतीति ॥ व्याख्यातप्रायमेतत् । इयंपृथिवीसर्वेषांभूतानांब्रह्मादीनां मधु कार्यं । पृथिव्याश्चसर्वाणिभूतानिमधु कार्यं । शरीराणांपृथिवीजन्यत्वादितिव्याख्यानमसत् । परमतेविद्युत्स्तनयित्नुमानुषादिशब्दानांप्रसिद्धार्थत्वेनतेषांभूतकार्यत्वस्यभूतानांतत्कार्यत्वस्यचाभावात् । मधुशब्दस्यकार्येप्रयोगाभावाच्च प्रमाणविरुद्धत्वाच्चेतिभावेनब्राह्मणंप्रमाणेनव्याचष्टे ॥ सुखदेति ॥ मधुवदित्युक्तवत्यर्थसादृश्यंवक्तुंसुखदेत्युक्तं । यथाप्रसिद्धंमधुसुखदंतथाऽऽश्रयत्वादिनापृथिवीभूतानांसुखदा ।

उप० ॥ चतुर्थंमैत्रेयीब्राह्मणं ॥ ४ ॥

भाष्यं ॥ भगवतोरूपंरूपंप्रतिजीवाख्यःप्रतिबिंबोबभूव । बभूवेतिसदेवसोम्येदमग्रआसीदितिवदनादित्वार्थे । सुखदासर्वभूतानांपृथ्वीमधुवदुच्यते ।

भूतानिचपृथिव्याःशुश्रूषादिनासुखप्रदानीत्यर्थः। परोक्तकार्यत्वव्यावृत्त्यर्थंसुखदैवेत्येवकारसंबंधः। नन्वेवंव्याख्यानेपिपृथिव्यादीनांभूतसुखदत्वसंभवेपिभूतानांपृथिव्यादिसुखदत्वंनोपपद्यते । पृथिव्यादीनांजडत्वेनसुखाभावादित्याशंकांपरिहरन्कृतंव्याख्यानंइमाआपइत्यादावतिदिशति ॥ **तथेति** ॥ सर्वादेवताअबाद्यभिमानिन्योभूतानांसुखदाः । चशब्देनभूतानितासांदेवतानांसुखदानीतिसमुच्चिनोति। तथाचपृथिवीशब्देनापिदेवतैवग्राह्येतिभावः । यश्चायमस्यांपृथिव्यांतेजोमयोऽमृतमयःपुरुषोयश्चायमध्यात्मंशारीरःतेजोमयःअमृतमयःपुरुषोऽयमेवसः। योयमात्मेत्यादिचतुर्दशखंडगतंवाक्यजातंव्याचष्टे ॥ **पृथिव्यादिष्विति** ॥ तेजोमयोऽमृतमयइत्येतत्जीवपरमितिप्रतीतिनिरासायव्याचष्टे ॥ **अनंतेति** ॥ इदंब्रह्मेदंसर्वमितिपूर्वप्रकृतस्यात्मनोजीवस्यब्रह्मत्वादिकमुच्यतेइतिप्रतीतिनिरासायाह ॥ **ब्रह्मेति** ॥ तदेवहयशीर्षस्वरूपमेव। नजीवतत्वमित्यर्थः। तत्कुतोब्रह्मेत्यतआह ॥ **गुणेति** ॥ सर्वमित्यस्यसर्वगमितिव्याख्यानमुपपादयति ॥ **सर्वमिति** ॥ अनूनतोदेशतोऽनूनत्वात् । ननुश्रुतौयोयमात्मेतिपृथिव्यादिषुशरीरादिषुचस्थितस्यात्माभेदउच्यते। तस्यैवचामृतत्वादिकमपि। तथाचैकंएवपरोविष्णुर्हयशीर्षस्वरूपधृगितिकथंव्याख्यायतेइत्यतस्तदनूद्यतस्मिन्नात्मशब्दंनिर्वक्ति ॥ **आत्मेति** ॥ यःपृथिव्याद्यधिदैवादिषुस्थितःहयशीर्षाख्यःपरोविष्णुः सएवयतःसर्वगोऽतआत्मनामाप्रकीर्तितइत्यर्थः। पृथिव्यादीनांशरीरादीनांचाधिदैवत्वाध्यात्मत्वप्रदर्शनार्थमेवपुनर

---

भाष्यं ॥ पृथिव्याश्चैवभूतानितथासर्वाश्चदेवताः। पृथिव्यादिषुदेवेषुशरीरादिषुचस्थितः । एकएवपरोविष्णुर्हयशीर्षस्वरूपधृक् । अनंततेजानित्यश्चसएवब्रह्मसर्वगं। तदेवगुणपूर्णत्वाद्ब्रह्मसर्वमनूनतः। आत्मनामापरोविष्णुःसर्वगोयःप्रकीर्तितः। सएवहयशीर्षाख्यस्त्वधिदैवादिषुस्थितः।

मिन्नो विद्यमान चशब्देन (१९)



नुवादः । तद्यथेत्यादि आत्मानःसमर्पिताइत्यंतंवाक्यंव्याचष्टे ॥ **अराणामिति** ॥ अंतःप्रतिष्ठितोनाभिः । वहिःप्रतिष्ठितोने मिरितियथायोग्यंसंवंधः । जीवानामितिभूतशव्दार्थः । आत्मनाम्नांविरिंचानांचेत्यपिग्राह्यं । अयंवैदशचसहस्राणिवहूनिचानं तानिचेत्येतद्व्याचष्टे ॥ **सएवेति** ॥ हरयःशतादशेतिमंत्रेशतशव्दग्रहणात्तद्व्याख्यानरूपव्राह्मणेपिचशब्देनशतानिचेत्येतद्ग्राह्य मितिभावेनतस्यार्थउक्तःशतमिति । सवाअयमात्मासर्वेषांभूतानामधिपतिःसर्वेषांभूतानांराजेत्येतद्व्याचष्टे ॥ **भूताख्येति** ॥ भूतशव्दोक्तानामपिविरिंचानामाधिक्यविवक्षयायदाहश्रुतिः सर्वएतेआत्मानइति । तदनुरोधेनात्रभूतानामित्येतदुपलक्षणमि तिभावेनोक्तं ॥ **आत्मनाम्नांविरिंचानामिति** ॥ राजाधिपतिशव्दयोरर्थभेदमाह ॥ **स्वामित्वादिति** ॥ अयंविष्णुःराजे तिशव्दोयस्यसराजशव्दः । सर्वासुपूर्षुपुरिशयइत्येतत्सवाअयंपुरुषइत्युक्तपुरुषशव्दनिर्वचनपरमितिज्ञापयन्सवाइत्येतद्व्याचष्टे **पुरुषइति** ॥ इतिसंप्रोक्तइत्येतदत्रापिसंवध्यते । उक्तमेवविवृण्वन्पूर्षुपुरीत्यनयोरर्थभेदकथनपूर्वकंसर्वासुपूर्षुपुरिशयइत्येतद्व्या चष्टे ॥ **पुराख्येष्वेवेति** ॥ असावेवेतिसंवंधः । असावेकएवविष्णुःदेहेषुहृत्पुर्यपिरूपभेदेनवसतीत्यर्थः । **नैनेनकिंचनानावृत**

---

भाष्यं ॥ अराणामाश्रयौयद्वद्वहिरंतःप्रतिष्ठितौ । नाभिनेमीतथाविष्णुर्जीवानामाश्रयःस्थितः । सएवदशधाप्रोक्तोविष्णुर्मत्स्यादिरूपकः । शतंनारायणाद्यात्माविश्वाद्यात्मासहस्रकः । परादिरूपोवहुधासोनंतात्माऽजितादिकः । भूताख्यासर्वजीवानांविरिंचानांचसर्वशः । आत्मनाम्नांस एवैकोराजाधिपतिरेवच । स्वामित्वाद्राजशव्दोयमाधिक्यात्पालनात्तथा । अविपश्चेतिसंप्रोक्तःपुरुषःपुरुषस्थितेः । पुराख्येष्वेवदेहेपुहृत्पुर्यपिव सत्यसौ ।

मित्येतद्व्याचष्टे ॥ **नानेनेति** ॥ नैनेनकिंचनासंवृतमित्येतद्व्याचष्टे ॥ **नानेनेति** ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमवाह्यमयमात्मात्रह्मसर्वानुभूरित्यनुशासनमित्येतद्व्याचष्टे ॥ **नैवास्मादित्यादिना** ॥ एवेत्यस्यासावित्यत्रापिसंवंधः । असावेवसर्वस्मात्वाह्यतःसर्वस्मादंतरंच । नत्वस्मात्तदन्यद्वाह्यमंतरंचेत्यर्थः । अयमात्माइदंमानुषंइदंसत्यमयंस्तनयित्नुरितिवाक्यचतुष्टयगतात्मादिशब्दाभिधेयमाह ॥ **विरिंचइति** ॥ यश्चायमध्यात्मंशाब्दःसौवरःयश्चायमध्यात्मंसात्यः यश्चायमध्यात्ममात्मेति वाक्यगतसौवरसात्यशब्दांतर्गतस्वरसत्यशब्दयोरात्मशब्दस्यचार्थमाह ॥ **एतएवेति** ॥ वायुरूपद्वयंविरिंचश्चेत्येतएवेत्यर्थः । इदानींसौवरादिशब्दाभिधेयमाह ॥ **तेषामिति** ॥ सौवरादिशब्दाभिधेयइतिशेषः । तत्कथमित्यतस्तद्विवृणोति ॥ **जीवेस्थितइत्यादिना** ॥ जीवेजीवस्थेविरिंचे । स्वरगःस्वरस्थवायुगः । सत्यगइत्येतदपिएवमेवव्याख्येयं । यश्चायमध्यात्मंधार्मइतिधार्ममाह ॥ **धर्मगइति** ॥ धर्मगोयमगः । यश्चायमध्यात्मंमानुषइत्येतद्व्याख्यातुमाह ॥ **मनोरिति** ॥ देहिष्वध्यात्मंवहिरधिदैवेचस्थितस्यस्वायंभुवस्यमनोःमानुषेत्येवआख्या । किंततइत्यतःइदानींमानुषइत्यस्यार्थमाह ॥ **तद्गतइति** ॥ देहिगतम

---

भाष्यं ॥ नानेनकिंचिद्व्याप्तंनानेनाच्छादितंनच । नैवास्मात्पूर्वकंकिंचिन्नैवास्मादपरंतथा । सर्वस्माद्बाह्यतश्चासौसर्वस्मादंतरस्तथा । व्याप्तेरात्मेतिसंप्रोक्तोत्रह्मेतिगुणपूर्तितः । ससर्वस्यापरोक्षज्ञइतिवेदानुशासनं । विरिंचस्त्वात्मशब्दोक्तोमानुषंमनुरुच्यते । सत्यंचस्तनयित्नुश्चवायोरूपांतरेस्मृते । यतएवस्वरेसत्येजीवेचाध्यात्मसंस्थिताः । तेषांनियामकोविष्णुस्तत्रतत्रैवसंस्थितः । जीवेस्थितश्चात्मनामासौवरःस्वरगःस्मृतः । सत्यगःसत्यनामासौधर्मगोधर्मएवच । मनोःस्वायंभुवस्याख्यामानुषेत्येवदेहिषु । बहिश्चतद्गतोविष्णुर्मानुषेत्येवकथ्यते ।

Scanned by CamScanner

नुगतः विष्णुरेवेतिसंबंधः । मानुषेत्युभयत्राविभक्तिकोनिर्देशः । यश्चायमध्यात्मंश्रौत्रः प्रातिश्रुत्कइत्यस्ययश्चायमध्यात्मंतैजसइत्यस्यचार्थमाह ॥ प्रातिश्रुत्कइतीति ॥ श्रोत्रेस्थितःसन्प्रतिशृणोतीतिप्रातित्कः । विद्युति शरीरगततेजसीत्यर्थः । सौवरादिशब्दनिर्वचनप्रकारंशरीरादिशब्देष्यतिदिशति ॥ इतीति ॥ शरीरगतःशारीरः । रेतसिस्थितोरैतसः । वाचिस्थितोवाङ्मयः । हृद्याकाशस्तद्गतः । प्राणेस्थितःप्राणः । चक्षुषिस्थितश्चाक्षुषः । मनसिस्थितोमानसइत्येवंनानाविधैःशब्दैःविष्णुरिज्यतइत्यर्थः । इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचेतिवाक्यंव्याचष्टे ॥ दध्यङ्ङिति ॥ एतांपूर्वोक्तमधुविद्यांअथर्वणगोत्रोत्पन्नोदध्यङ्नामाश्विभ्यामदादित्यर्थः । वंशब्राह्मणाभिप्रायमाह ॥ पुरेति ॥ अप्रतीतेःप्रत्यैरयतंइत्येतदनूद्यव्याचष्टे ॥ प्रत्यैरयतमिति ॥ ऋतायन्सत्यंपरिपालयितुंइच्छन्निति व्याख्यानमसत् । ततस्तावदर्थाप्रतीतेरितिभावेनतदर्थमाह ॥ ऋतायन्निति ॥ कक्ष्यंगोप्यमित्यन्यथाप्रतीतिनिरासायार्थमाह ॥ कक्ष्यमिति ॥ त्वाष्ट्रंत्वष्टृदेवताकमित्यन्यथाप्रतीतिनिरासायानूद्यव्याचष्टे ॥ त्वाष्ट्रमिति ॥ अतएवकक्ष्यंनारायणकवचमितिव्याख्यातं । इमांविद्यामधिगतोविश्वरूपाच्छतक्रतुरितिवचनात् । विश्वरूपेणेंद्रंप्रतिनारायणकवचस्यैवोपदिष्टत्वात् । अप्रतीतेः सनयेइत्यस्यार्थमाह ॥ सनयइति ॥ षणलाभइतिधातोरित्यर्थः । दंस

भाष्यं ॥ प्रातिश्रुत्कइतिश्रोत्रेतैजसोविद्युतिस्थितः । इतिनानाविधैर्नामसमूहैर्विष्णुरिज्यते । दध्यङ्ङाथर्वणोश्विभ्यामेतांविद्यामदात्पुरा । हयग्रीवब्रह्मविद्येत्येषाब्रह्मादिभिर्धृतेति । प्रत्यैरयतंप्रति(संधत्तं)समधत्तं । ऋतायन्सत्यंकुर्वन् । कक्ष्यंनारायणकवचं । त्वाष्ट्रंत्वष्टुःपुत्रेणविश्वरूपेणेंद्रायोक्तं । सनयेलाभाय ।

इत्यस्याप्रतीतेरर्थमाह ॥ दंसइति ॥ तन्यतुर्नवृष्टिमित्यस्यार्थमाह ॥ स्तनयित्नुरिति ॥ नकारस्यार्थइवेति । अश्विनौदधीचेअश्व्यंशिरःकिमर्थंप्रत्यैरयतं । सदध्यङ्अश्वशीर्ष्णाकिमर्थंमधुविद्यांअश्विभ्यामुवाचेत्यतस्तदुपयुक्तांकथामाह ॥ तस्माभित्यादिना ॥ इंद्रेणतस्यांविद्यायामित्याद्युक्तंअश्विनौप्रत्याहेत्यर्थः । पावःरक्षावःत्वच्छिरइतिशेषः । तच्छिरःतस्यदधीचःप्राक्तंशिरः । तेनाश्वशिरसा । तस्मिन्नश्वशिरसि । नन्वनयाकथयाअश्विभ्यांदधीचैतद्विद्याकथनात्पूर्वंइंद्रःएतांविद्यांजानातीतिलभ्यते । कथमन्यथातस्यांविद्यायांपरस्योक्तायांतवशिरच्छेत्स्यामीतिब्रूयात् । तथात्रिश्वरूपस्त्वाष्ट्रोश्विभ्यामित्यनेनवंशब्राह्मणगतवाक्येनविरोधःस्यात् । तत्रहिअश्विभ्यांविश्वरूपस्याध्ययनमुच्यते । सचविश्वरूपःइंद्रस्यगुरुः । एतांविद्यामधिगतोविश्वरूपाच्छतक्रतुरित्युक्तेः । तथाचेंद्रेणाश्विभ्यांपूर्वमियंविद्यानज्ञातेतिग्राहेरित्यतस्तंविरोधंपरिहरति ॥ पूर्वंजानन्निति ॥ इतीमांविद्यांपूर्वंजानन्नपीतिप्रथमेतिशब्दस्यसंबंधः । किमर्थंशुश्रावेत्युक्तं । पुनर्नवत्वायेति । प्रागधीतायाअपिविद्यायाःवृत्रहननार्थंपुनर्नवत्वायेत्यर्थः ॥ ५ ॥ ततश्चायंखंडार्थः ॥ इयंपृथिवीतदभिमानिनी सर्वेषांभूतानां मधुमधुवत् आश्रयत्वादिनासुखदा ।

भाष्यं ॥ दंसःकर्म । स्तनयित्नुर्वृष्टिमिव । तस्यांविद्यायांपरस्योक्तायांतवशिरश्छेत्स्यामीतींद्रेणदधीचंप्रत्युक्तेसोश्विभ्यामावांत्रवीहीत्युक्तइंद्रेणोक्तमाह । तदाश्विभ्यांपावइत्युक्त्वातच्छिरःछित्वान्यत्रनिधायअश्वशिरःसंधितं । तेनविद्यायामुक्तायांतस्मिन्निंद्रेणच्छिन्नेपूर्वशिरःसंधितं । पूर्वंजानन्नपींद्रःपश्चाद्विश्वरूपाच्छुश्रावेतिपुनर्नवत्वायेतिनविश्वरूपस्त्वाष्ट्रोश्विभ्यामित्यनेनविरोधः ॥ मधुब्राह्मणं ॥ ५ ॥

उप० ॥ इयंपृथिवीसर्वेषांभूतानांमधु

अस्यैपृथिव्यै अस्याःपृथिव्याःसर्वाणिभूतानि मधु शुश्रूषादिनासुखदानि। यश्चायमस्यांपृथिव्यांविद्यमानस्तेजोमयःअनंततेजाः। अमृतमयोनित्यःअपूर्णत्वादिनानाशरहितः। पुरुषःयश्चायंप्रमितः शारीरस्थः तेजोमयोमृतमयःपुरुषः । सःअयमेव । अयंकः । यःपूर्वोक्तःआत्मासर्वगोहयशीर्षइत्यर्थः । आत्मस्वरूपमाह ॥ इदमिति ॥ इदममृतंनित्यंब्रह्मगुणपूर्णसर्वमनूनंसर्वगमित्यर्थः । एवमुत्तरत्रापिव्याख्यानं ॥ १ ॥ रैतसःरेतसिस्थितः ॥२॥ वाङ्मयः । वाचिस्थितः ॥३॥ प्राणःत्वगिंद्रियस्थितः॥४॥ चाक्षुषश्चक्षुस्थः ॥ ५ ॥ श्रौत्रःश्रोत्रगतः सन्प्रातेश्शृणोतीतिप्रतिश्रुत्कः ॥ ६ ॥ मानसोमनोगतः ॥ ७ ॥ तैजसः शरीरतेजो

---

उप० ॥ अस्यैपृथिव्यैसर्वाणिभूतानिमधुयश्चायमस्यांपृथिव्यांतेजोमयोऽमृतमयःपुरुषोयश्चायमध्यात्मꣳशारीरस्तेजोमयोऽमृतमयःपुरुषोऽयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वं ॥ १ ॥ इमाआपःसर्वेषांभूतानांमध्वासामपाꣳसर्वाणिभूतानिमधुयश्चायमास्वप्सुतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मꣳरैतसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वं ॥ २ ॥ अयमग्निःसर्वेषांभूतानांमध्वस्याग्नेःसर्वाणिभूतानिमधुयश्चायमस्मिन्नग्नौतेजोमयोऽमृतमयःपुरुषोयश्चायमध्यात्मंवाङ्मयस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वं॥३॥ अयंवायुःसर्वेषांभूतानांमध्वस्यवायोःसर्वाणिभूतानिमधुयश्चायमस्मिन्वायौतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंप्राणस्तेजोमयोऽमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वं ॥ ४ ॥ अयमादित्यःसर्वेषांभूतानांमध्वस्यादित्यस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नादित्येतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंचाक्षुषस्तेजोमयोमृतमयःपुरुषोयमेवममृतमिदंब्रह्मेदꣳसर्वं ॥ ५ ॥ इमादिशःसर्वेषांभूतानांमध्वासांदिशाꣳसर्वाणिभूतानिमधुयश्चायमासुदिक्षुतेजोमयोऽमृतमयःपुरुषोयश्चायमध्यात्मꣳश्रौत्रःप्रातिश्रुत्कस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वं६॥

गतः ॥ ८ ॥ स्तनयित्नुःतद्गतोवायुः। शाब्दःशब्दगतःसन् । सौवरःस्वरगतः ॥ ९ ॥ हृद्याकाशःतद्गतः ॥ १० ॥ अयंधर्मोयम धार्मःधर्मगतः ॥ ११ ॥ सत्यं । सत्यगतोवायुः सात्यःसत्यगतः । अत्रशारीरोरैतसःइत्यादौशरीरादिशब्दैस्तदभिमानिदेवता ग्राह्याः ॥ १२ ॥ इदंमानुषंस्वायंभुवमनुः मानुषः । देहिगतस्वायंभुवमनुगतः ॥ १३ ॥ अयमात्माविरिंचः । अध्यात्ममात्मा

---

उप० ॥ अयंचंद्रःसर्वेषांभूतानांमध्वस्यचंद्रस्यसर्वाणिभूतानिमधुयश्चायमस्मिंश्चंद्रेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंमानसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ ७ ॥ इयंविद्युत्सर्वेषांभूतानांमध्वस्यैविद्युतःसर्वाणिभूतानिमधुयश्चायमस्यांविद्युतितेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंतैजसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ ८ ॥ अयंस्तनयित्नुःसर्वेषांभूतानांमध्वस्यस्तनयित्नोःसर्वाणिभूतानिमधुयश्चायमस्मिंस्तनयित्नौतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंशाब्दःसौवरस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ ९ ॥ अयमाकाशःसर्वेषांभूतानांमध्वस्याकाशस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नाकाशेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मꣳहृद्याकाशस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ १० ॥ अयंधर्मःसर्वेषांभूतानांमध्वस्यधर्मस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्धर्मेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंधार्मस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ ११ ॥ इदंꣳसत्यंसर्वेषांभूतानांमध्वस्यसत्यस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्सत्येतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंसात्यस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ १२ ॥ इदंमानुषंसर्वेषांभूतानांमध्वस्यमानुषस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्मानुषेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंमानुषस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंꣳसर्वं ॥ १३ ॥

जीवगतविरिंचगतः ॥ १४ ॥ तस्यात्मनोमहिमानमाह ॥ सवाइति ॥ सर्वेषांभूतानांजीवानां । उपलक्षणमेतत् । सर्वेषामा
त्मनांविरिंचानांचअधिपतिराधिक्यात्पालनात् । राजास्वामी कथमित्यतःएतदेवसदृष्टांतमुपपादयति ॥ तद्यथेति ॥ तत्वक्ष्य
माणंनिदर्शनंयथा । चशब्दौपरस्परसमुच्चये । विष्णोर्भूतादीनामंतर्बहिश्चाश्रयत्वप्रदर्शनायनाभौनेमौचेतिदृष्टांतद्वयोपादानं
॥ १५ ॥ इयंमधुविद्याऽतिप्रशस्तापूर्वैरनुष्ठितत्वात् उपदिष्टत्वाच्चेत्याह ॥ इदमिति ॥ दध्यङ्नामाआथर्वणगोत्रोत्पन्नोब्राह्मणः
इदंप्रमाणप्रमितं । तत्मधुमधुविद्या मश्विभ्यामुवाच । वाइतिअस्यार्थस्यप्रमाणसिद्धत्वमाह । पश्यन्वेदद्रष्टाऋषिः । तदेतत
दध्यङ्ङाथर्वणोश्विभ्यामुवाचेत्येतत्प्रमेयमुवाच । तांऋचंपठति ॥ तद्वामिति ॥ हेनरानेतारौ । अश्विनौवांयुवयो र्यत्दधीचः
पूर्वशिरश्छेदनाश्वशिरःसंधानादिरूपं उग्रंक्रूरं दंसःकर्म यच्चदध्यङ्ङाथर्वणोऽश्वस्यशीर्ष्णाई शीर्ष्णेव वांयुवाभ्यां मधुमधुविद्यां
प्रोवाचेति तदुभयं सनये मोक्षादिपुरुषार्थलाभाय । हनिश्चितमाविष्कृणोमि । कः किमिव तन्यतुःस्तनयित्नुः वृष्टिंन । वृष्टिमि
व स्तनयित्नुर्यथावृष्टिमाविष्कृणोतितथेत्यर्थः ॥ १६ ॥ अत्रैवागमांतरंवक्तुमाह ॥ इदमिति ॥ तदेतत्दध्यङ्ङाथर्वणोऽश्वि

उप० ॥ अयमात्मासर्वेषांभूतानांमध्वस्यात्मनःसर्वाणिभूतानिमधुयश्चायमस्मिन्नात्मनितेजोमयोमृतमयःपुरुषोयश्चायमध्यात्ममात्मातेजोम
योमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं॥ १४॥ सवाअयमात्मासर्वेषांभूतानामधिपतिःसर्वेषांभूतानांराजातद्यथारथनाभौचरथने
मौचाराःसर्वेसमर्पिताएवमेवास्मिन्नात्मनिसर्वाणिभूतानिसर्वेदेवाःसर्वेलोकाःसर्वेप्राणाःसर्वएतआत्मानःसमर्पिताः ॥१५॥इदंवैतन्मधुदध्यङ्ङाथर्वणो
श्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्तद्वांनरासनयेदंसउग्रमाविष्कृणोमितन्यतुर्नवृष्टिंदध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाचेति १६



324

Scanned by CamScanner

भ्यांमधुवाचेत्येतत् । तांऋचंपठति ॥ आथर्वणायेति ॥ हेदस्रौशत्रुभेदकौ अश्विनाअश्विनौ युवामाथर्वणायदधीचे अश्व्यं अश्वसंबंधिशिरः प्रत्यैरयतं प्रतिसमधत्तं । सःसंधिताश्वशिरादध्यङ् ऋतायन्वांयुवयोर्मधुवक्ष्यामीतिपूर्वंप्रतिज्ञातंसत्यंकुर्वन्वां युवाभ्यां मधु मधुविद्यां यत्त्वाष्ट्रंत्वष्टुःपुत्रेणविश्वरूपेणेंद्रायोक्तं कक्ष्यंनारायणकवचं तदपिप्रवोचत्प्रावोचदित्यर्थः । अडभावश्छांदसः ॥ १७ ॥ यश्चायमध्यात्मंशारीरइतिसर्वेषुशरीरेषुभगवांस्तिष्ठतीतियदुक्तंतत्रमंत्रंवक्तुमाह ॥ इदमिति ॥ पश्यन्नृषिः तदेतत्सर्वशरीरस्थत्वमुवाच । तंमंत्रमुदाहरति ॥ पुरइति ॥ सपुरुषोद्विपदःपुरःशरीराणिचक्रेचतुष्पदःपुरश्चक्रे । ततःपक्षीभूत्वाद्विपदःपुरश्चतुष्पदश्चपुरआविशत् । पुरुषोजीवइतिप्रतीतिंनिवारयन्पुरुषशब्दंनिर्वक्ति ॥ सवाअयमिति ॥ सएवपरमात्मापुरुषइतिउच्यते । कुतः यतःसर्वासुपूर्षुदेहेषु । पुरिहृत्पुर्यपि । शेतइतिशयः । नकेवलंपुरस्थितिमात्रं किंतु अंतर्वहिर्व्याप्तिश्चास्तीत्याह ॥ नैनेनेति ॥ एतेनानेनात्मना । किंचनाऽनावृतमव्याप्तंन किंतुव्याप्तमेव असंवृतमनाच्छादितं ॥ १८ ॥ अयमेवसयोयमात्मेत्युक्तपरमात्मरूपाणामभेदेमंत्रंवक्तुमाह ॥ इदमिति ॥ तदेतच्छरीरादिगतभगवद्रूपाणाम

उप० ॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्आथर्वणायाश्विनादधीचेऽश्व्यंशिरःप्रत्यैरयतंसवांमधुप्रवोचदृतायन्त्वाष्ट्रंयद्दस्रावपिकक्ष्यंवामिति ॥ १७ ॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्पुरश्चक्रेद्विपदःपुरश्चक्रेचतुष्पदःपुरःसपक्षीभूत्वापुरःपुरुषआविशदितिसवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिंचनानावृतंनैनेनकिंचनासंवृतं ॥ १८ ॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्

भिन्नत्वं । मंत्रंपठति ॥ **रूपंरूपमिति** ॥ जीवसमुदायःपरमेश्वरस्यरूपंरूपंप्रतिरूपःप्रतिबिंबोबभूव । **तद्विंबरूपमस्यजीवस्य** चक्षणायसाक्षात्काराय भवति मुक्त्यर्थंसाक्षात्कारविषयोभवतीतियावत् । नन्वेकस्यभगवतःकथंविचित्रजीवबिंबत्वमित्यतआह ॥ **इंद्रइति** ॥ सइंद्रःपरमेश्वरोमायाभिः स्वसामर्थ्येन पुरुरूपः अनंतजीवबिंबरूपः ईयतेज्ञायते । **अस्यइंद्रस्य हरयः** हरिनामकानिरूपाणि दशशतानि युक्ताः संयुक्ताः व्यूहशःसंतीतिहिप्रसिद्धमित्यर्थः । नन्वत्रमंत्रेपरमात्मरूपाणामभेदाप्रतीतेः कथंतदुदाहरणमित्यतस्तस्याभिप्रायमाह ॥ **अयंवाइति** ॥ हरयोहरिनामकाः दशमत्स्याद्याः अयंवैहयशीर्षःपरमात्मैव चशब्दात्शतानिनारायणादीनिहरिनामकानि । अयंवैअनेनशतादशेत्येतत्पृथग्व्यूहपरत्वेनापिव्याख्याति ॥ **सहस्राणीति** ॥ विश्वादीनिसहस्राणिहरयः अयंवाइतिसंबंधः । दशेत्येतत्बहुपर्यायमभ्युपेत्यपृथग्व्यूहपरत्वेनापिव्याख्याति ॥ **बहूनिचेति** ॥ परादीनिबहूनिहरयोऽयंवाइतिसंबंधः । शतमनंतंभवतीतिवचनात्शतेत्येतदनंतपर्यायमित्यभिप्रेत्यव्यूहांतरपरत्वेनापिव्याचष्टे॥ **अनंतानिचेति** ॥ अजितादीनि । मत्स्यादिपरमात्मव्यूहानांयदभेदउक्तस्तन्महिमानमाह ॥ **तदेतदिति** ॥ अयंपूर्वोक्तआत्माव्याप्तोब्रह्मयत् तदेतत्ब्रह्मगुणपूर्णं । नविद्यतेपूर्वंयस्मात्तदपूर्वमनादीतियावत् । नविद्यतेपरमुत्तमंयस्मात्तदनपरंअनंतमित्यर्थः । नविद्यतेंतरमन्यत्यस्यतदनंतरं अयमेवसर्वस्मादंतरः नविद्यतेबहिरन्यद्यस्यतदबाह्यं अयमेवसर्वस्माद्बाह्यः सर्वमनुभव

उप० ॥ रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणायइंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयंवैदशचसहस्राणिबहूनिचानंतानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्म

तीतिसर्वानुभूस्सर्वज्ञइतिवेदानुशासनमित्यर्थः ॥ १९ ॥ मधुब्राह्मणं ॥ ५ ॥ अथभाष्यार्थःखंडार्थश्च ॥ नकेवलमिमांब्रह्मविद्यांदध्यङ्ङाथर्वणोश्विभ्यामुवाच । किंतुसाविरिंचादिभिरप्यधीताव्याख्याताचेत्याह ॥ अथवंशइति ॥ पाराशर्योजातूकर्ण्यादितिपराशरात्मजस्यवेदव्यासस्यजातूकर्ण्यादध्ययनंप्रतीयते । तच्चायुक्तमित्यतोऽयंपाराशर्योनकृष्णःकिंत्वन्यइत्यत्रप्रमाणमाह ॥ पाराशर्यइति ॥ परमेष्ठीविराट्ब्रह्मणोहिरण्यगर्भाद्विद्यांप्राप्तइतिव्याख्यानमसत् । हिरण्यगर्भातिरिक्तस्यविराजअभावादितिभावेनतद्व्याचष्टे ॥ परस्येति ॥ वंशोद्विविधोविद्ययाजन्मनाचेतिशिष्यादिपरंपरापिवंशपदेनोच्यते । अत्रप्रथमं

---

उप० ॥ सर्वानुभूरित्यनुशासनं ॥ १९ ॥ इतिमधुब्राह्मणं ॥ ५ ॥

भाष्यं ॥ पाराशर्योजातूकर्ण्यःपराशरसुतावुभौ । विप्रायामेवभार्यायांतृतीयःकृष्णएवचेतिब्रह्मांडे । परस्यब्रह्मणोविष्णोर्हयशीर्षादधीतवान् । ब्रह्मविद्यामिमांब्रह्माततःसनकएवचेतिगारुडे ॥ इतिवंशब्राह्मणं ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकोपनिषद्भाष्ये चतुर्थोध्यायः ॥ ४ ॥

उप० ॥ अथवꣳशःपौतिमाष्योगौपवनाद्गौपवनःपौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनःकौशिकात्कौशिकःकौंडिन्यात्कौंडिन्यःशांडिल्याच्छांडिल्यःकौशिकाच्चगौतमाच्चगौतमः ॥१॥आग्निवेश्यादाग्निवेश्यःशांडिल्याच्चानभिम्लाताच्चानभिम्लातआनभिम्लातादानभिम्लातोगौतमाद्गौतमःसैतवप्राचीनयोग्याभ्याꣳसैतवप्राचीनयोग्यौपाराशर्यात्पाराशर्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चगौतमाच्चगौतमोभारद्वाजाद्भारद्वाजःपाराशर्यात्पा

तशब्दवाच्याःशिष्याः । पंचम्यंतशब्दवाच्याआचार्याइतिबोद्धव्यं । इतरवत्परब्रह्मणोप्यध्ययनशंकांवारयति ॥ ब्रह्मस्वयंभ्विति ॥ स्वयमेवभवतिजानातीतिस्वयंभु अध्यायांतेमंगलमाचरति वेदपुरुषः ॥ ब्रह्मणेनमइति ॥ हयग्रीवाख्यब्रह्मणइत्यर्थः ॥ इतिवंशब्राह्मणं ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्बृहदारण्यकभाष्यटीकायांश्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तममुनिविरचितायांचतुर्थोध्यायः ॥ ४ ॥

---

राशर्योवैजवापायनाद्वैजवापायनःकौशिकायनेःकौशिकायनिः ॥ २ ॥ घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराशर्यायणःपाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यःआसुरायणाच्चयास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपंचधनेरौपंचधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजआत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौतमोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यः कुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भीकौंडिन्याद्विदर्भीकौंडिन्योवत्सनपादाबाभ्रवाद्वत्सनपाद्बाभ्रवःपथःसौभरात्पंथाःसौभरोऽयास्यादांगिरसादयास्यआंगिरसआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विऽभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकऋपेरेकऋपिर्विप्रचित्तोर्विप्रचित्तिर्व्यष्टेर्व्यष्टिःसनारोस्सनारुःसनातनात्सनातनःसनकात्सनकःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ ३ ॥ वंशब्राह्मणं ॥ ६ ॥ इतिचतुर्थोध्यायः ॥ ४ ॥

॥ हरिः ॐ ॥ भगवानेवसर्वोत्तमःसर्वगुणपरिपूर्णःसर्वमुमुक्षूपास्योमोक्षदइत्यध्यायद्वयोक्तमृषिभिर्मीमांसयासमर्थितमित्याहाने नाध्यायेन । तत्रादौमीमांसाप्रकारमेवाख्यायिकयाऽह ॥ जनकोहवैदेहइत्यादिना ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासायब्रा ह्मणंप्रमाणेनव्याचष्टे ॥ होतरीत्यादिना ॥ केनयजमानोमृत्योराप्तिमतिमुच्यतइतिप्रश्नस्यहोत्रर्त्विजाग्निनावाचेतिपरिहारवा क्यंहोत्रादिशब्दानांप्रतीतार्थपरत्वनिरासायव्याचष्टे ॥ होतरीति ॥ समुक्तिरित्यस्याभिप्रायमाह ॥ मुक्तिदमिति ॥ नित्यं सदा । अध्वर्युणाऋत्विजाचक्षुषादित्येनेतिवाक्यंपूर्ववद्व्याचष्टे ॥ अध्वर्युसूर्यचक्षुष्विति ॥ मुक्तिदंविष्णुंयोनित्यंस्मरेत्समु च्यतइतिपूर्वेणसंबंधः । खंडद्वयगतसातिमुक्तिरित्यस्यतात्पर्यमाह ॥ अधिकइति ॥ एतदुपासनामकुर्वद्भ्योऽन्येभ्योमुक्तेभ्यो पि । अस्यैवाग्न्यादित्रिकेआदित्यादित्रिकेचविष्णूपासकस्यैव । मुक्तावधिकप्रकाशइष्यते प्रामाणिकैरित्यर्थः । उद्गात्रर्त्विजावायुना प्राणेनेतिवाक्यंव्याचष्टे ॥ तथेति ॥ मुक्तिदंविष्णुमित्यनुवर्तते । तत्फलप्रदर्शनपरतयासातिमुक्तिरित्यस्यतात्पर्यमाह ॥ पूर्ण चंद्रमिति ॥ तदेवविवृणोति । अधिकाह्लादसंयुतइति । भवतीतिशेषः । पूर्णचंद्रंपूर्णसुखंविष्णुमितिवा । ब्रह्मणर्त्विजामन साचंद्रेणेतिवाक्यंव्याचष्टे ॥ मनइति ॥ मुक्तिदमित्यत्राप्यनुवर्तते । सातिमुक्तिरित्यस्यतात्पर्यमाह ॥ अप्रयत्नेनेति ॥ ननुहो

भाष्यं ॥ होतर्यग्नौवाचिचैवयोविष्णुंमुक्तिदंस्मरेत् । नित्यंसमुच्यतेध्वर्युसूर्यचक्षुष्षुयःस्मरेत् । अधिकःप्रकाशएवास्यमुक्तावन्येभ्यइष्यते । मुक्तेभ्योपितथोद्गातृवायुप्राणेषुयःस्मरेत् । पूर्णचंद्रंसदापश्येदधिकाह्लादसंयुतः । मनोब्रह्मणि शेषेषुयोविष्णुंसर्वदास्मरेत् । अप्रयत्नेनलोकंसविष्णो र्यातिनसंशयः ।

त्रादिशब्दानांप्रसिद्धहोत्रादिपरत्वात्कथंहोतर्यग्नावित्यादिव्याख्यानमित्यतआह ॥ होत्रिति ॥ मुख्यतःपरममुख्यतः । प्रसिद्धिविरोधंपरिहरति ॥ तत्संबंधादिति ॥ जुहोतीत्यादिव्युत्पत्तिःप्रसिद्धहोत्रादिष्वेवनविष्णावित्यतआह ॥ सवाइति ॥ वैशब्दोवधारणे । होत्रादिषुस्थित्वेतिशेषः । होत्रादिशब्दानांविष्णुपरत्वेआंतरोपपत्तिमप्याह ॥ तस्मादिति ॥ होत्रादिशब्दानांविष्णुवाचकत्वादित्यर्थः । श्रुतिषुवाग्वैयज्ञस्यहोतातद्येयंवाक्सोयमग्निःसहोतेत्यादिश्रुतिवाक्येषु । अन्यथातद्विरोधःस्यात् । होत्रग्निवागादीनामैक्याभावादितिभावः । केनयजमानोमृत्योराप्तिमतिमुच्यतइत्यादिप्रश्नेहोत्रर्त्विजाग्निनावाचेत्यादिपरिहारवाक्येहोत्रादीनांमुक्तिसाधनत्वमुच्यते । तच्चोक्तरीत्याविष्णुग्रहणएवसंभवति । नप्रसिद्धहोत्रादिग्रहणइतिहोत्रादित्रिकचतुष्टयस्थितविष्णुरूपविशेषप्रदर्शनपूर्वकमाह ॥ होत्रादिष्विति ॥ वासुदेवादिरूपधृक्विष्णुरेवेतिसंबंधः । हिशब्दःप्रसिध्यर्थः । नत्वन्यज्ञानादितिभावः । किंचहोत्रादिशब्दानांप्रसिद्धार्थपरत्वेसमुक्तिःसातिमुक्तिरित्येतदनुपपन्नंस्यादितिभावेनसमुक्तिरित्यस्यमुक्तिदमितियत्तात्पर्यमुक्तंतत्पदारूढंकरोति ॥ मुक्तिनामेति ॥ अनेनमुच्यतेनेनेतिमुक्तिरित्यर्थउक्तोभवति । सातिमुक्तिरित्यस्यापिअधिकःप्रकाशइत्यादिनापूर्वोक्तंतात्पर्यंपदारूढंकरोति ॥ मनुष्येभ्यइति ॥ अनेनातिशयेनमुच्यतेनेनेत्यतिमुक्ति

भाष्यं ॥ होत्रग्न्यादीनिनामानिविष्णोःसर्वाणिमुख्यतः । तत्संबंधात्तदन्येषांसवैहोत्रादिकर्मकृत् । तस्माद्धोत्रग्निवागादेरैक्यंश्रुतिषुचोच्यते । होत्रादिष्वेवचतुर्षुवासुदेवादिरूपधृक् । व्यवस्थितोहितज्ज्ञानादचिरान्मुक्तिमेष्यति । मुक्तिनामासभगवान्मोक्षदत्वात्प्रकीर्तितः । मनुष्येभ्योधिकसुखंदेवेभ्योयत्प्रयच्छति ।

रित्यर्थउक्तोभवति । श्रुतौ यजमानइतिप्रमाणेच यःस्मरेदितिसामान्यतएवोक्तत्वात्सर्वेषामप्युपासनायामधिकारइतिनमंतव्य मित्याह ॥ एताहीति ॥ कुतइत्यतस्तथात्वेइत्यतिमोक्षाइत्युपसंहारवाक्यविरोधःस्यादित्याह ॥ अतीति ॥ नृणांतदयोग्य त्वादितिभावः । तर्हिकेतत्राधिकारिणइत्यतआह ॥ देवाद्याइति ॥ योगिनोयोग्याइत्यर्थः । तेषांतद्योग्यत्वादितिभावः । किंताभिर्जयतीत्यस्यप्रश्नस्य । यत्किंचेदंप्राणभृदिति यत्परिहारवाक्यं तत्ऋचामेवफलसाधनत्वप्रतीतिनिरासायव्याचष्टे ॥ याज्येति ॥ याहुताउज्वलंतिदेवलोकमेवताभिर्जयतीत्यादिवाक्यंपूर्ववद्व्याचष्टे ॥ उज्ज्वलदिति ॥ उज्ज्वलत्सुशब्दवत्सु द्रा विषुअधोद्रवणवत्सुहविःषु । कतमासादेवतेतिप्रश्नेमनएवेतिकथमुत्तरमुच्यतइत्यतआह ॥ मनसइति ॥ अनंतंवैमनोनंताविश्वेदे वाइत्यस्याभिप्रायःसर्वदेवेषुसंस्थितइति । अनंतमेवसतेनलोकंजयतीत्येतत्तेनमनसेतिप्रतीतिनिरासायतत्परामृश्यंदर्शयन्व्या चष्टे ॥ देवेति ॥ तेनस्मरणेन/ विश्वेषांदेवानांस्वरूपानंत्यस्यसर्वसाधारण्यात् पदादेश्चनाशात्कथमनंतत्वमित्यतःप्रकारद्वयेनो पपादयति ॥ निश्चयेनेति ॥ तेषामपरोक्षज्ञानित्वादितिभावः । विमोक्ष्यत्वात्मोक्षरूपानंतफलभाक्त्वादित्यर्थः । पृथिवीलो

---

भाष्य ॥ मुक्तावप्यतिमोक्षःसतेनदेवःप्रकीर्तितः । एताह्युपासनानित्यंनैवयोग्यानृणांश्रुताः । अतिमुक्तिप्रदायस्मादेवाद्यास्तासुयोगिनः । याज्याशस्यापुरोवाक्यासंस्थितंयोहरिंस्मरेत् । सर्वप्राणभृतामीशःसभवेन्नात्रसंशयः । उज्ज्वलच्छब्दवद्द्राविष्वेकमेवहरिंस्मरेत् । सर्वलोकाधिपत्यं सलभतेपुरुषोत्तमात् । मनसोदेवताब्रह्मासर्वदेवेषुसंस्थितः । देवब्रह्ममनस्त्वेकंयोविष्णुंसर्वदास्मरेत् । अनंतनामकंतेनतल्लोकंनित्यमश्नुते । निश्च येनविमोक्षत्वाद्विश्वेदेवाअनंतकाः । अनंतनामकंविष्णुमुपास्यापिह्यनंतकाः ।

कमेवपुरोनुवाक्ययाजयतीत्यादिवाक्यंतासामेवफलसाधनत्वमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ पुरोवाक्यादिष्विति ॥
ऋगाहुतिमनस्तोत्रियाः[सुस्थितामूर्त्तीराह ॥ अत्रापीति ॥ अथसंपदइत्येतद्व्याचष्टे ॥ देवानामिति ॥ अत्रसर्वेषामधिकारि
त्वेकथमुक्तसंपच्छब्दनिर्वचनमित्यतआह ॥ एताइति ॥ उपासनाइत्यर्थः ।उपासनाभावेपिज्ञानमात्रंमनुष्याणांस्यादेवेत्यतआह ॥
मनुष्याणामिति ॥ ततश्चायंखंडार्थः ॥ विदेहानांवंशसंभवोवैदेहोजनकोनामहकिलबभूव । सचबहुदक्षिणेनयज्ञेनशाखां
तरेएतन्नाम्नाप्रसिद्धेन । बहुदक्षिणाविशिष्टेनाश्वमेधादिनावा । ईजेअयजत । तत्रतस्मिन्यज्ञे हविर्द्वाहुल्येनप्रसिद्धानां कुरूणां
पांचालानांचदेशानां । ब्राह्मणाअभिसमेताबभूवुः। तान्दृष्ट्वतस्तस्यहजनकस्यवैदेहस्य । कःस्वित्कोनुएषांब्राह्मणानांमध्येऽनूचान
तमोतिशयेनानूचानोब्रह्मिष्ठइतिविजिज्ञासाविशेषेणज्ञातुमिच्छाबभूव। पश्चात्सजनकोह तद्विज्ञानोपायभूतंगवांसहस्रंगोष्ठे[धक्क
वाटसमीपइतिस्वामिनः]वरुरोधावरोधंकारयामास । तासामेकैकस्याःगोःश्रृंगयोःदशदशपादाःपलस्यचतुर्थभागःपादः । एवंभू

---

भाष्यं ॥ पुरोवाक्यादिषुप्राणादिषूपासांकरोतियः । एकमेवहरिंलोकव्याप्तमेवलभेद सौ । अत्रापिवासुदेवाद्याश्चत्वारोदेवताःस्मृताः । देवा
नांपदहेतुत्वात्संपन्नान्यउपासनाः । मुक्तौभोगविशेषस्यहेतुत्वाच्चप्रकीर्तिताः । एताश्चदेवता योग्यानमनुष्येषुकुत्रचित् । ननुष्याणांज्ञानमात्राद्गुणा
धिक्यंभविष्यतीतिपरमश्रुतौ ॥ इत्याश्वलब्राह्मणं ॥ ५ ॥ १ ॥

उप० ॥ जनकोहवैदेहोबहुदक्षिणेनयज्ञेनेजेतत्रहकुरुपांचालानांब्राह्मणाअभिसमेताबभूवुस्तस्यहजनकस्यवैदेहस्यविजिज्ञासाबभूवकःस्विदेषां
ब्राह्मणानांअनूचानतमइतिसहगवांसहस्रमवरुरोधदशदशपादाएकैकस्याःश्रृंगयोराबद्धाबभूवुः ॥ १ ॥

ताः सुवर्णस्य दश दश पादाः आवद्धा बभूवुः । शृंगयोरिति द्विवचनात्प्रति शृंगं पंच पंच पादाः आवद्धा इत्यर्थः । एवं गा अवरुध्य जनकस्तान्ब्राह्मणान्ह किल उवाच । हे ब्राह्मणाः भगवंतः पूजार्हा इति संबोध्य । यो वो युष्माकं मध्ये ब्रह्मिष्ठोतिशयेन ब्रह्मज्ञः । स एता अवरुद्धा गा उदजतां स्वगृहं प्रत्युद्गमयत्वित्युक्ते । ते ब्राह्मणा ह किल न दधृषुः धैर्यवंतो नाभवन् । आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुमिति शेषः । अथानंतरं याज्ञवल्क्यो ह किल स्वं स्वीयमेव ब्रह्मचारिणमंतेवासिनमुवाच । किं हे सौम्य सामश्रवा ३ इति प्लुतिर्दूराद्धानार्था । साम विधिं शृणोतीति सामश्रवास्तत्संबोधनं सामश्रव । एता गा उदज अस्मद्गृहं प्रति उद्गमय । एवं गुरुवचनं श्रुत्वा ह किल ब्रह्मचारी । ता गाः उदाचकार उत्कलितवान् नीतवानाचार्यगृहं प्रति । एवं ब्रह्मिष्ठाय निर्दिष्टगवामपहरणात् याज्ञवल्क्येन स्वात्मनो ब्रह्मिष्ठत्वस्वीकरणादस्माकमब्रह्मिष्ठता प्रतिज्ञायत इति मन्वाना स्ते ह ब्राह्मणाश्चुकुधुः क्रोधं कृतवंतः । तेषां क्रोधाभिप्रायेनिमित्तमाह ॥ कथन्निति ॥ नोऽस्माकं एकैकप्रधानानामग्रे ब्रह्मिष्ठोस्मीति कथमयं ब्रवीति कथयेत् । इति शब्दो भिप्रायसमाप्तिद्योतकः । अथ क्रोधानंतरं ह जनकस्याश्वलो नाम होता ऋत्विग्बभूव । स ब्रह्मिष्ठाभिमानी राजाश्रयात् धृष्टस्सन् एनं याज्ञवल्क्यं पप्रच्छ । कथं । हे याज्ञवल्क्य नोऽस्माकमग्रे । त्वं नु खलु ब्रह्मिष्ठोसीति प्लुतिर्भर्त्सनार्था । अनौद्धत्यं ब्रह्मविदो लिंगमिति सूचयन् स याज्ञवल्क्यो ह उ 333

---

उप० ॥ तान्होवाच ब्राह्मणा भगवंतो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा ३ इति । ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रवीतेत्यथ ह जनकस्य वैदेहस्य होताश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोसी ३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो

वाच । वयंब्रह्मिष्ठायनमस्कुर्मः । किमितितर्हिब्रह्मिष्ठपणभूतागावःस्वगृहंप्रतिप्रस्थापिताइत्यतआह ॥ गोकामाइति ॥ वयं गोकामाएवस्म । अतोगोग्रहणंकृतवंतइतिमुनिनोक्ते । ततोब्रह्मिष्ठपणस्वीकरणादेवहोताश्वलस्तंप्रष्टुंदध्रेधृतवान्मनः । याज्ञवल्क्येतिसंबोध्योवाच । किं । इदंसर्वंप्राणिजातं यत्येनमृत्युनाआप्तंप्राप्तं । नकेवलमेतावत् । किंतुमृत्युनाभिपन्नंग्रस्तंच । तस्यमृत्योराप्तिंयजमानःकेनोपायेनातिअतिक्रम्यमुच्यतइतिपृष्टोयाज्ञवल्क्यउत्तरमाह ॥ होत्रेति ॥ होत्रादिषुस्थित्वातत्तत्कर्मकर्तृत्वेननिमित्तेनहोत्रग्निवाक्शब्दवाच्येनवासुदेवेनोपासितेन । यजमानोतिमुच्यतइतिसंबंधः । अधिष्ठानभेदेनपरमात्मनोरूपस्यभेदोनाशंकनीयइतिभावेनवाक्स्थितस्यहोतृस्थस्यपरमात्मरूपस्यचाभेदमाह ॥ वाग्वाइति ॥ वाक्वागंतर्गतोवाङ्नामा वासुदेवएव । यज्ञस्यहोताहोतृसंस्थोहोतृनामकइति । वैप्रसिद्धमित्यर्थः । इदानींवागंतर्गतस्याग्निस्थस्यचाभेदमाह ॥ तद्येयमिति ॥ साचासौयाच तद्या प्रसिद्धायेयंवाक् वागंतर्गतोवाङ्नामावासुदेवः । सोयमग्निःअग्निस्थोग्निनामा । इदानीमग्निस्थस्यहोतृसंस्थेनाभेदमाह ॥ सइति ॥ सोग्निस्थोग्निनामाभगवान्होताहोतृसंस्थोहोतृनामकइत्यर्थः । वागादिस्थस्यकथंमृत्युमोचकत्वमित्यतआह ॥ सइति ॥ योवागादिस्थःसमुक्तिःमोक्षप्रदः । मुच्यतेनेनेतिव्युत्पत्तेः । नकेवलंसर्वसाधारणाविद्यानिवृत्त्यादिरूपमुक्तिदः । किंतुसातिमुक्तिः अतिशयितमुक्तिदः । मुक्तौमनुष्येभ्यअधिकंसुखंदेवेभ्यःप्रयच्छतीत्यर्थः ॥ ३ ॥ एवमेवो

उप० ॥ गोकामाएववयꣳस्मइतितꣳहततएवप्रष्टुंदध्रेहोताश्वलः ॥ २ ॥ याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंमृत्युनाप्तꣳसर्वंमृत्युनाभिपन्नंकेन यजमानोमृत्योराप्तिमतिमुच्यतइति । होत्रर्त्विजाग्निनावाचावाग्वैयज्ञस्यहोतातद्येयंवाक्सोयमग्निःसहोतासमुक्तिःसातिमुक्तिः ॥ ३ ॥

रखंडत्रयमपिव्याख्येयं । अहोरात्राभ्यांतद्विकाराभ्यामित्यर्थः । एवंपूर्वपक्षापरपक्षाभ्यामित्येतदपिव्याख्येयं । अध्वर्युणाच क्षुषादित्येनअध्वर्य्वादिगतेनसंकर्षणेन । उद्गात्रावायुनाप्राणेन । तन्निष्ठप्रद्युम्नेन यद्यस्मादिदंप्रसिद्धमंतरिक्षंआकाशमनारंभण मनालंबनमिवभासते । अथतस्मात्केनाक्रमेणाऽक्रमणसाधनेनावष्टंभेन । यजमानः । स्वर्गलोकंमोक्षमाक्रमतेप्राप्नोतीत्यर्थः । ब्रह्मणामनसाचंद्रेणतदंतर्गतानिरुद्धेनेत्यर्थः । उक्तमुपसंहरति ॥ इत्यतिमोक्षाइति ॥ अतिशयितमोक्षसाधनीभूतोपासनाः इतिनिरूपिताइत्यर्थः । अथमोक्षसाधनोपासनानिरूपणानंतरं । संपदःदेवपदप्राप्तिरूपसंपत्साधनीभूताउपासनानिरूप्यंते ॥६॥ ताउपासनावक्तुमाश्वलप्रश्नमवतारयति ॥ **याज्ञवल्क्येति** ॥ कतिभिःकतिसंख्याभिः । ऋग्भिरयंहोता । अद्याऽस्मिन्यज्ञे । शंसनंकरिष्यतीतिपृष्टे । तिसृभिर्ऋग्भिरित्युत्तरमुक्तवंतंप्रतिपुनस्तासांस्वरूपंपृच्छति ॥ **कतमाइति** ॥ किंस्वरूपास्ताऋचइति

---

उप० ॥ याज्ञवल्क्येतिहोवाचयदिदꣳसर्वमहोरात्राभ्यामाप्तꣳसर्वमहोरात्राभ्यामभिपन्नंकेनयजमानोहोरात्रयोराप्तिमतिमुच्यतइत्यध्वर्युण र्त्विजाचक्षुषाऽऽदित्येनचक्षुर्वैयज्ञस्याध्वर्युस्तद्यदिदंचक्षुःसोसावादित्यःसोध्वर्युःसमुक्तिःसातिमुक्तिः ॥ ४ ॥ याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंपूर्वप क्षापरपक्षाभ्यानाप्तꣳसर्वंपूर्वपक्षापरपक्षाभ्यामभिपन्नंकेनयजमानःपूर्वपक्षापरपक्षयोराप्तिमतिमुच्यतइत्युद्गात्रर्त्विजावायुनाप्राणेनप्राणोवैयज्ञस्योद्गा तातद्योयंप्राणःसवायुःसउद्गातासमुक्तिःसातिमुक्तिः ॥ ५ ॥ याज्ञवल्क्येतिहोवाचयदिदमंतरिक्षमनारंभणमिवकेनाक्रमेणयजमानःस्वर्गंलोकमाक्र मतइतिब्रह्मणर्त्विजामनसाचंद्रेणमनोवैयज्ञस्यब्रह्मातद्यदिदंमनःसोसौचंद्रःसब्रह्मासमुक्तिःसातिमुक्तिरित्यतिमोक्षाअथसंपदः ॥ ६ ॥ याज्ञवल्क्येति होवाचकतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञेकरिष्यतीतिसृभिरितिकतमास्तास्तिस्रइति

पृष्टेउत्तरमाह॥पुरोनुवाक्याचेति॥पुरोनुवाक्याप्रयोगकालात्प्राक्होतृप्रयुज्यमानाऋग्जातिः । याज्याचयागार्थंप्रयुज्यमानाऋग्जातिः। शस्याशस्त्रार्थंप्रयुज्यमानाऋग्जातिस्तृतीयात्रित्वसंख्यापूरिका। एतस्याःफलंपृच्छति॥ किमिति ॥ ताभिर्वासुदेवाख्यविष्ण्वधिष्ठानभूताभिस्तत्रत्यवासुदेवेनेतियावत्।किंजयतीतिपृष्टेउत्तरमाह॥यत्किंचेदंप्राणभृदितीति॥तज्जयतीत्यन्वयः। सर्वप्राणभृदधिपतिर्भवतीत्यर्थः ॥७॥ याहुताःसमिदाज्याहुतयःउज्वलंति। याहुतामांसाहुतयःअतिनेदंतेअतीवशब्दंकुर्वंति । याहुताःपयःसोमाहुतयः।अधिअधोगत्वाभूमेरधःशेरते।फलंपृच्छति ॥किमिति॥ ताभिःसंकर्षणाधिष्ठानभूताभिस्तिसृभिराहुतिभिस्तद्गतसंकर्षणेनेतियावत् । किंजयतीतिपृष्टेउत्तरमाह॥याइति॥ याआहुतयोहुताउज्वलंति । ताभिर्देवलोकमेवजयति देवलोकाधिपत्यंलभते । कथमित्यपेक्षायामुज्वलत्वसाम्यादित्याह ॥ दीप्यतइवहीति ॥ एवमुत्तरत्रापि । पितृलोकअतीवात्यंतंनेदते । आस्फोटयंतिपितरइत्यादिवचनात् । अधइवहिमनुष्यलोकइति । नरकाद्यधोगतिसाम्यव्यावर्तनायइवशब्दः । देवलोकपितृलोकापेक्षयाअधस्तनइत्यर्थः ॥ ८ ॥ अथब्रह्माऽऽहवनीयस्यदक्षिणतोदक्षिणभागे । ब्रह्मासनेस्थित्वा । कतिभिर्देवताभिर्यज्ञं

---

उप० ॥ पुरोनुवाक्याचयाज्याचशस्यैवतृतीयाकिंताभिर्जयतीतियत्किंचेदंप्राणभृदिति ॥ ७॥ याज्ञवल्क्येतिहोवाचकत्ययमद्याध्वर्युरस्मिन्यज्ञआहुतीर्होष्यतीतितिस्रइतिकतमास्तास्तिस्रइतियाहुताउज्ज्वलंतियाहुताअतिनेदंतेयाहुताअधिशेरतेकिंताभिर्जयतीतियाहुताउज्ज्वलंतिदेवलोकमेवताभिर्जयतिदीप्यतइवहिदेवलोकोयाहुताअतिनेदंतेपितृलोकमेवताभिर्जयत्यतीवहिपितृलोकोयाहुताअधिशेरतेमनुष्यलोकमेवताभिर्जयत्यधइवहिमनुष्यलोकः ॥ ८ ॥ याज्ञवल्क्येतिहोवाचकतिभिरयमद्यब्रह्मायज्ञं ॥ १६८ ॥

गोपयतीति । अन्यत्पूर्ववत् मनएवेति मनोभिमानीचतुर्मुखएव तंस्तौति ॥ अनंतंवाइति ॥ मनसउक्तमनंतत्वमुपपादयति ॥ अनंताइति ॥ यदधिष्ठिताविश्वेदेवाअप्यनंताः । किंमनोनंतमित्यर्थः । निश्चयेनविमोक्ष्यत्वादनंतनामकविष्णूपासकत्वाद्वा विश्वेदेवाअनंतकाः तत्फलमाह ॥ अनंतमेवेति ॥ तेनमनसातदभिमानिचतुर्मुखेन तदधिष्ठानभूतदेवेषुचविद्यमानेनप्रद्युम्ने न । अनंतनामकंविष्णुलोकंजयति ॥ ९ ॥ स्तोत्रियाःसामारूढाऋचः ताऋचः अध्यात्मंयाःयदभिमन्यमानाः तादेवताःकत माइत्यर्थः । पुरोनुवाक्ययापुरोनुवाक्याभिमानिप्राणगतेन । याज्ययायाज्याभिमान्यपानगतेन । शस्ययाशस्याभिमानिव्यान गतेनानिरुद्धेनेत्यर्थः । ततःस्वकृतप्रश्नोत्तरदानाद्धोताश्वलउपररामतूष्णींबभूव ॥ १० ॥ इत्याश्वलब्राह्मणं ॥ १ ॥ आका शमात्मेत्यस्यात्माआत्माभिव्यक्त्यधिष्ठानंहृदयाकाशंमहाकाशमप्येतीतिव्याख्यानमसत् । आत्मशब्दस्यलाक्षणिकत्वापत्तेः । शरीरनियामकपरमात्मनःक्वचिद्गत्यनुक्तिप्रसंगाच्चेतिभावेनाकाशशब्दंव्याचष्टे ॥ **आकाशमिति** ॥ तथाचात्माहृद्गतःपरमा

---

उप० ॥ दक्षिणतोदेवताभिर्गोपायतीत्येकयेतिकतमासैकेतिमनएवेत्यनंतंवैमनोनंताविश्वेदेवाअनंतमेवसतेनलोकंजयति ॥९॥ याज्ञवल्क्येति होवाचकत्ययमद्योद्गातास्मिन्यज्ञेस्तोत्रियास्तोष्यतीतितिस्रइतिकतमास्तास्तिस्रइतिपुरोनुवाक्याचयाज्याचशस्यैवतृतीयाकतमास्तायाअध्यात्ममिति प्राणएवपुरोनुवाक्या अपानोयाज्याव्यानःशस्याकिंताभिर्जयतीतिपृथिवीलोकमेवपुरोनुवाक्ययाजयत्यंतरिक्षलोकंयाज्ययाद्युलोकंशस्ययाततोहहो ताआश्वलउपरराम ॥ १० ॥ इत्याश्वलब्राह्मणं ॥ ५ ॥ १ ॥

भाष्यं ॥ आकाशंपरमात्मानमेव ।

त्मा ऽऽकाशंव्याप्तंस्वमूलरूपपरमात्मानमेवाप्येतिगच्छतीत्यर्थइतिभावः । एतेनात्माजीवआकाशमेतीतिजीवगंतव्यस्यस्वय मेवोक्तत्वात् क्वायंतदापुरुषोभवतीतिप्रश्नोऽयुक्तइत्येतदपिपरास्तं । ननुनेतिहोवाचयाज्ञवल्क्यइतिप्राणानामुत्क्रमणाभावोक्तिः कथं । तमुत्क्रामंतंप्राणोनूत्क्रामतीत्यादिविरोधादितिचेत् । न प्राणाउत्क्रामंतिनवेतिप्रश्नवाक्यस्येंद्रियाभिमानिदेवताविशिष्टोजी वोपरोक्षज्ञानीब्रह्मनाड्योत्क्रामतिनवेत्यर्थमभिप्रेत्यज्ञानीउत्क्रामतिनवेतिप्रश्नस्यनेतिपरिहारात् । तथापिअपरोक्षज्ञानिनउत्क्रमणा भावोक्तिःकथं । तस्यहैतस्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतनेनैषआत्मानिष्क्रमतीत्युत्तरवाक्यविरोधादित्यतोऽधिकारविशेषपरतयेदं व्याचष्टे ॥ केचित्त्विति ॥ आत्मत्वमात्रोपासकाअल्पाल्पामानुषाइत्यर्थः । यथोक्तं । आत्मेत्येवंपरंदेवमुपास्यहरिमव्ययं । के चिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचन । अत्रैवचस्थितिस्तेषामिति । सउच्छ्वयतिआध्मायतिआध्मातोमृतःशेतइत्यस्यार्थः मरणोच्छून तादीनिति । नन्वपरोक्षज्ञानिनउत्तरपूर्वाघयोरश्लेषविनाशोक्तेर्दोषान्भुक्त्वैवसर्वशइतिकथमुक्तंइत्यतउक्तं ॥ स्वकीयारब्धकर्म जानिति ॥ प्रारब्धकर्मणस्तुभोगेनैवक्षयइतिभावः । अतएवसर्वशोभुक्त्वैवेत्युक्तं । बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छति । योगीतावन्नमुक्तःस्यादित्युक्तेरत्रैवतिष्ठंतीतिकथमुक्तमित्यतआह ॥ दृष्ट्वाविष्णुमिति ॥ सकृच्छ्वेतद्वीपंगत्वातत्रविष्णुंदृष्ट्वेत्य र्थः । अत्रैवसमवनीयंतइत्येतद्व्याचष्टे ॥ अत्रैवतिष्ठंतीति ॥ पूर्वमप्यत्रैवस्थितत्वात्कोविशेषइत्यतःसंशब्दार्थमाह ॥

भाष्यं ॥ केचित्तुमानुपामुक्तिमनुक्रम्यैवदेहतः । देहपातेतुदेहस्यदोषान्भुक्त्वैवसर्वशः । मरणोच्छूनतादींस्तुस्वकीयारब्धकर्मजान् । देहे क्षीणेतुगच्छंतिदृष्ट्वाविष्णुमनुज्ञया । पुनरत्रैवतिष्ठंति

नित्यानंदैकभोगिनइति॥तथाचयत्रायंपुरुषइत्येतत्जात्येकवचनमित्युक्तंभवति।केचिदत्यल्पामानुषाअपरोक्षज्ञानिनोदेहपाते
प्रत्यासन्नेस्वकीयारब्धकर्मजन्मरणोच्छूनतादींस्तुदेहस्यदोषान्सर्वशोभुक्त्वैवस्थितानांदेहेक्षीणेदेहतोनुक्रम्यैवब्रह्मनाड्याऽनूक्र 3339
म्यैवचक्षुरादिद्वारांतरेणनिर्गत्यमुक्तिंलिंगभंगरूपांगच्छंतिप्राप्नुवंति । तदनंतरंसकृत्श्वेतद्वीपंगत्वातत्रविष्णुंदृष्ट्वातदनुज्ञयापुनर
त्रैवभूलोकएवनित्यानंदैकभोगिनःसंतस्तिष्ठंतीतियोजना । उत्क्रमणप्रतिपादकवाक्यस्यविषयमाह ॥ देहादिति ॥ तुशब्दो 339
विशेषार्थः । मनुष्यकुलेजातादेवास्तुदेहाद्ब्रह्मनाड्योत्क्रम्ययांति । स्वमूलरूपमितिशेषः । यद्वातुशब्दश्चशब्दार्थः । तेनसमु
च्चिताःसच्चिदानंदआत्मेतिचतुर्गुणोपासकामनुष्योत्तमाब्रह्मनाड्यादेहादुत्क्रम्यसनातनंविष्णुंयांतीत्यर्थः । यद्वाऽत्रैवसमवनीयं
तइतिवाक्यमस्मिन्नेवदेहेलीयंतइतिप्रतीतिनिरासायव्याचष्टे ॥ देहादिति ॥ देवाइंद्रियाभिमानिनोदेहान्मुच्यमानजीवदेहा
दुत्क्रम्यनिर्गत्य । विष्णुमनुयांतीत्यर्थः । यद्वक्ष्यति । अनुयांतिशरीरस्थाइत्यादि । अनेनात्रैवजीवमादायगच्छतिविष्णावेवस
मवनीयंतेतमनुगच्छंतीतिवात्रानेनजीवमादायगच्छताविष्णुनासमवनीयंतेस्वसहायेननीयंतइतिवार्थउक्तोभवति । देवानिति
क्वचित्पाठः । तत्रकेचिन्मानुषाःइत्यनुवर्तते । तुशब्दश्चशब्दार्थः । केचिन्मनुष्याश्चतुर्गुणोपासकादेहादुत्क्रम्यदेवान्विष्णुंचयां
तीत्यर्थः । अग्निंवागप्येतीत्यादिनापुरुषेमृतेवागादयोऽग्न्यादीन्प्रतियांतीत्युक्तिःकथं । प्राणैर्वावनवियुज्यतइतिश्रुतिविरोधादि

भाष्यं ॥ नित्यानंदैकभोगिनः । देहादुत्क्रम्यदेवास्तुयांतिविष्णुंसनातनं । देहादुत्क्रम्ययातानांदेवाभागतएववु ।

त्यतस्तदभिप्रायमाह ॥ देहादिति ॥ देवावागाद्यभिमानिनः । भागतएवरूपांतरेणैव । स्वाधिदैवमग्न्यादिकं । तानुक्रम्यया
तान्जीवान् । ननुप्राज्ञेनात्मनान्वारूढउत्सर्जद्यातीतिमरणकालेपरमात्मनोपिजीवेनसहगत्युक्तेराकाशमात्मेतिकथमुक्तमित्यत
स्तद्व्याचष्टे ॥ आकाशाख्यमिति ॥ भागतोयातीतिसंबंधः । पुण्यःपुण्येनकर्मणेत्यत्रकर्मसाध्यत्वेनोक्तःपुण्योनमोक्षः । त
स्यज्ञानमात्रसाध्यत्वात् । तस्मात्तदुपलक्षणपरमितिभावेनज्ञानस्यस्वातंत्र्यनिरासायाह ॥ ज्ञानस्थितेनेति ॥ पुण्यपापयोरेव
पुण्यलोकादिहेतुत्वमितिप्रतीतिनिरासायपुण्यंपुण्येनेत्यादिवाक्यंव्याचष्टे ॥ पुण्यस्थितेनेति ॥ हरिरित्यनुवर्तते । ददातीति
शेषः । अन्यगःपापगः । इदंचाप्यतिगोप्यत्वात् यस्मैकस्मैचननवाच्यमितिभावेनाह ॥ रहस्यमेतदिति ॥ ज्ञानस्थितेनरूपे
णेत्याद्युक्तमेतत्देवानांरहस्यंदैवतैर्गोप्यं । अन्येषामप्येतादृशज्ञानसत्वेकथमेतद्देवानांरहस्यमित्यतआह ॥ विदुरिति ॥ मानु
षाःस्वर्गनरकहेतु । पुण्यपापरूपंकर्मेतिविदुः । तस्माद्देवरहस्यत्वादेतत्ज्ञानादिस्थितरूपेणमुक्त्यादिदानरूपंविष्णोःकर्म एत
ज्जनेपुसाधारणजनेषु नप्रकाशयेदित्यर्थः । एकांतेसंमंत्रणेकिंप्रयोजनमित्यतआह ॥ अतएवेति ॥ यद्वात्रैवैतदुपनिषद्गतमवष्टं
भकमाह ॥ अतएवेति ॥ यतोजनेषुनप्रकाशयेदतएवेत्यर्थः । कर्महैवतदूचतुरित्यादावुक्तकर्मशब्दार्थमाह ॥ कर्मनामात्विति ॥

भाष्यं ॥ स्वाधिदैवंप्रजंत्यद्धाभागतोनुव्रजंतितान् । आकाशाख्यंस्वरूपंतुविष्णुस्तद्धृदिसंस्थितः । भागतोभागतश्चैताननुयातिजनार्दनः ।
ज्ञानस्थितेनरूपेणदेवानांमुक्तिदोहरिः । पुण्यस्थितेनरूपेणस्वर्गंनिरयमन्यगः । रहस्यमेतद्देवानांविदुःकर्मेतिमानुपाः । तस्मान्नैवज्जनेष्वेतद्विष्णोःक
र्मप्रकाशयेदितिच । अतएवयाज्ञवल्क्योनजनेपूवाच । कर्मनामातुभगवान्फलकर्तृत्वतोहरिः ।

अनेनपुण्येनकर्मणेत्युक्तकर्मशब्दोपिव्याख्यातः । पुण्येनपापेनेत्येतत्पुण्यस्थेनपापस्थेनहरिणेतिव्याख्यातं । तत्रंपुण्यपापशब्दौनिर्वक्ति ॥ **पातनादिति** ॥ **ततश्चायंखंडार्थः** ॥ अथाश्वलोपरमानंतरं । जरत्कारुगोत्रापत्यंजारत्कारवः । ऋतभागस्यापत्यमार्तभागः । एनंयाज्ञवल्क्यंपप्रच्छयाज्ञवल्क्येतिसंबोध्योवाच । गृह्णंतिविषयानितिग्रहाइंद्रियाणि । कतिकतिसंख्याकाः ग्रहंगृह्णंतिस्वाभिमुख्येनाहरंतीत्यतिग्रहाःविषयाः । कतीत्यर्थः । इतिपृष्टोयाज्ञवल्क्यउत्तरमाह ॥ **अष्टाविति** ॥ संख्येयान्पृच्छति ॥ **एतइति** ॥ एतेष्टौग्रहाःअष्टावतिग्रहाश्चोक्तास्तेकतमेकइत्यर्थः ॥ १ ॥ उत्तरमाह ॥ **प्राणोवाइति** ॥ प्राणोघ्राणेंद्रियंवैग्रहः । अतिग्रहत्वप्रदर्शनपूर्वकंप्राणातिग्रहंदर्शयति ॥ **सइति** ॥ सप्राणोपानेनापानाभिमन्यमानेनगंधेनातिग्रहेणगृहीतः । अनेनघ्राणंगृह्णातिस्वाभिमुख्येनाहरतीतिगंधस्यघ्राणातिग्रहत्वमित्युक्तंभवति । प्राणस्यग्रहत्वंदर्शयति ॥ **अपानेनेति** ॥ अपानाभिमन्यमानेनघ्राणेन । हियस्मात्गंधंजिघ्रति तस्मात्प्राणोवैग्रहइत्यर्थः ॥ २ ॥ वागतिग्रहंदर्शयति ॥**सइति**॥ सवाग्रूपोग्रहोनाम्नाऽतिग्रहेणगृहीतः । वाचोग्रहत्वंदर्शयति ॥ **वाचाहीति** ॥ एवमुत्तरत्रापि कामेनकाम्येन । उपसंहरति ॥ 341

---

भाष्यं ॥ पातनात्पापनामासौपुनातेःपुण्यनामवानितिभारते ॥ इत्यार्तभागब्राह्मणं ॥ ५ ॥ २ ॥

उप० ॥ अथहैनंजारत्कारवआर्तभागःपप्रच्छयाज्ञवल्क्येतिहोवाचकतिग्रहाःकत्यतिग्रहाइत्यष्टौग्रहाअष्टावतिग्रहाइतिएतेष्टौग्रहाअष्टावतिग्रहाः कतमेतइति ॥ १ ॥ प्राणोवैग्रहःसोपानेनातिग्रहेणगृहीतोपानेनहिगंधान्जिघ्रति ॥ २ ॥ वाग्वैग्रहःसनाम्नातिग्रहेणगृहीतोवाचाहिनामान्यभिवदति ॥ ३ ॥

इत्यष्टाविति ॥ पादपायूपस्थानांहस्तएवांतर्भावइतिभावः । अतएवसकर्मणातिग्रहेणेतिकर्ममात्रस्यहस्तातिग्रहत्वमुक्तं॥३–९॥ प्रमेयांतरंपृच्छति ॥ याज्ञवल्क्येति ॥ यदिदंप्रमाणप्रसिद्धंसर्वं यस्यमृत्योरन्नं समृत्युःकादेवता सचमृत्युः यस्यादेवतायाः अन्नंसाचदेवताकेतियोजना । प्रथमप्रश्नोत्तरमाह ॥ अग्निरिति ॥ अग्नावेवसर्वेदेवाविलीयंतइतिश्रुतेरित्यर्थः । द्वितीयप्रश्नोत्तरमाह ॥ सइति ॥ सोग्निरपांसूर्यस्यान्नं । अत्रसर्वदेवतावाचकाऽप्शब्देनसूर्योग्राह्यः । यद्वावरुणवत्सूर्योप्यपामभिमानी । अधमाभिमन्यमानकस्योत्तमाभिमन्यमानकत्वात् । ततअप्शब्देनसूर्यग्रहणं । कुतएवंव्याख्येयमितिचेत् । सूर्योग्नियुक्त इति अग्नेःसूर्यान्नत्वस्योक्तत्वात् । यद्वायदिदंसर्वंपूर्वोक्तंप्राणादींद्रियगंधादिविषयाभिमानिदेवताजातं यस्यमृत्योरन्नं सादेवताका सचमृत्युर्यस्यादेवतायाअन्नंसाचदेवताकेतिपृष्टे प्रथमप्रश्नोत्तरमग्निरिति । अग्निरग्निनामकोग्न्यंतर्गतश्चतुर्मुखोमृत्युः सोग्निनामाचतुर्मुखः अपांआपालनादप्शब्दवाच्योविष्णुस्तस्यान्नं । एवंवेत्तुःफलमाह ॥ अपपुनरिति ॥ यएवंवेदेतिशेषः । पुनर्मृत्युंमृतिमपजयतिमोक्षंप्राप्नोतीत्यर्थः । अपरोक्षज्ञानिनोयन्मरणानंतरमेवमोक्षःतत्रविशेषंपृच्छति ॥ याज्ञवल्क्येति ॥

---

उप० ॥ जिह्वावैग्रहः सरसेनातिग्रहेणगृहीतोजिह्वयाहिरसान्विजानाति ॥ ४ ॥ चक्षुर्वैग्रहः सरूपेणातिग्रहेणगृहीतश्चक्षुषाहिरूपाणिपश्यति ॥ ५ ॥ श्रोत्रंवैग्रहः सशब्देनातिग्रहेणगृहीतःश्रोत्रेणहिशब्दान्शृणोति ॥ ६ ॥ मनोवैग्रहः सकामेनातिग्रहेणगृहीतोमनसाहिकामान्कामयते ॥ ७ ॥ हस्तौवैग्रहः सकर्मणातिग्रहेणगृहीतोहस्ताभ्यांहिकर्मकरोति ॥ ८ ॥ त्वग्वैग्रहः स्पर्शेनातिग्रहेणगृहीतस्त्वचाहिस्पर्शान्वेदयतइत्येतेऽष्टौग्रहाअष्टावतिग्रहाः ॥ ९ ॥ याज्ञवल्क्येतिहोवाचयदिदंसर्वंमृत्योरन्नंकास्वित्सादेवतायस्यामृत्युरन्नमित्यग्निर्वैमृत्युःसोपामन्नमपपुनर्मृत्युंजयति ॥ १० ॥

अयमात्मत्वमात्रोपासनजब्रह्मापरोक्षज्ञानवान्पुरुषोयत्रयदाम्रियते तदास्मात्ज्ञानिनोदेहात् प्राणावागादींद्रियाभिमानिन उत्क्रामंति ॥ आहोनेति ॥ आहोइत्यत्रप्लुतिर्विचारणार्था । मरणकालेइंद्रियाभिमानिदेवैःसहअयमपरोक्षज्ञानीब्रह्मनाड्योत्क्रामतिनवेतिप्रश्नवाक्यार्थः । ज्ञान्युत्क्रामतिनवेत्यस्यउत्तरमाह ॥ नेतीति ॥ अयमपरोक्षज्ञानीनब्रह्मनाड्योत्क्रामति किंतु चक्षुःश्रोत्रादिरूपद्वारांतरेणनिर्गच्छतीत्यर्थः । इदानींप्राणविषयप्रश्नोत्तरमाह ॥ अत्रैवेति ॥ अत्रैवजीवमादायगच्छति विष्णावेव समवनीयंतेदेहमुत्सृज्यतमनुयांतीत्यर्थः । अत्रानेनजीवमादायगच्छताविष्णुनासमवनीयंतेस्वसहायेननीयंतइतिवार्थः । अत्रैवस्वमूलरूपाग्र्यादावेव समवनीयंतेदेहमुत्सृज्यतान्प्रतिगच्छतीतिवार्थः । नकेवलंब्रह्मनाड्योत्क्रमणाभावमात्रंज्ञानिनः । किंतुसअपरोक्षज्ञानिदेहः । उच्छ्वयति उच्छूनतांप्रतिपद्यते । आध्मायतिदृतिवद्बाह्येनवायुनापूरितोभवति । आध्मातोमृतोनिश्चेष्टःशेते । एवंप्रारब्धकर्मफलभूतंदेहोच्छूनतादिकमनुभूयचक्षुरादिद्वारादेहान्निर्गत्यमुक्तिंगच्छतीत्यर्थः ॥ ११ ॥ प्रकृतमुक्तौविशेषंपृच्छति ॥ याज्ञवल्क्येति ॥ अयंपुरुषोब्रह्मापरोक्षज्ञानी यत्रयदा म्रियतेमुक्तोभवति तदाएनंकिंनजहातीत्युवाचेतिसंबंधः । उत्तरमाह ॥ नामेति ॥ सर्वंजहाति नाममात्रंनजहाति कुतइत्यतआह ॥ अनंतमिति ॥ शेषोमुक्तः विरिंचोमुक्तइतिमुक्तानामपितत्तन्नाम्नाव्यवहारादित्यर्थः । वाच्यानांदेवानामंतवत्त्वेखलुतद्वाचकशब्दस्यांतवत्त्वं । तदेवनास्तीत्या

---

उप० ॥ याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतउदस्मात्प्राणाःक्रामंत्याहो३नेतिनेतिहोवाचयाज्ञवल्क्योत्रैवसमवनीयंतेसउच्छ्वयत्याध्मायत्याध्मातोमृतःशेते ॥ ११ ॥ याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतेकिमेनंनजहातीतिनामेत्यनंतं

ह ॥ अनंताइति ॥ एवंवेत्तुःफलमाह ॥ अनंतमेवेति ॥ यएवंवेदेतिशेषः ॥ १२ ॥ इदानीमत्रैवसमवनीयंतइत्युक्तमनुव
दन् सर्वसाधारणमरणेविशेषंपृच्छति ॥ याज्ञवल्क्येति ॥ यत्रयदा मृतस्यपुरुषस्यवाक्वागभिमानीअग्नि रग्निंस्वमूलरूपमेके
नरूपेणाप्नोतिप्राप्नोति एवमुत्तरत्रापि । आत्माहृदिस्थःपरमात्मा । आकाशंवहिर्व्याप्तंपरमात्मानमप्येति । अयंपुरुषःक्वभव
तिकस्मिन्स्थानेतिष्ठतीत्यर्थः । पृष्टस्योत्तरंवक्तुंतस्यातिरहस्यत्वात्तदयोग्येषुनप्रकाशनीयमितिभावेनोपोद्घातमाह ॥ आहरेति॥
हेसौम्यहस्तमाहरदेहि । कुतः । हेआर्तभागावामेवैतस्यैतत् त्वयापृष्टंतत्वं वेदिष्यावः नौआवाभ्यां सजनःअयोग्योज
नः एतत्प्रमेयं नजानीयादिति । तौयाज्ञवल्क्यार्तभागौ उक्रम्यमंत्रयांचक्राते । तौकिंमंत्रयामासतुरित्यतःश्रुतिःस्वयमाह ॥
तौहेति ॥ कर्मैवकर्मफलदातृत्वात् भगवान्कर्मेत्युच्यते । क्वायंतदापुरुषोभवतीतिप्रश्नस्यकिमुत्तरमुक्तवानित्यतआह ॥ पुण्य
इति ॥ समृतःपुरुषोयदिपुण्यकर्मा । तर्हिपुण्येनकर्मणातत्स्थेनपरमात्मना पुण्योभवतिस्वर्गादिपुण्यलोकवान्भवति । यदि
पापकर्मा तर्हिपापेनकर्मणातत्स्थपरमात्मना पापोनरकादिलोकवान्भवति । यदिज्ञानीतर्हिज्ञानस्थेनपरमात्मनामुक्तिमानि

---

उप० ॥ वैनामानंतावैविश्वेदेवाअनंतमेवसतेनलोकंजयति ॥ १२ ॥ याज्ञवल्क्येतिहोवाचयत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणश्चक्षु
रादित्यंमनश्चंद्रंदिशःश्रोत्रंपृथिवीꣳशरीरमाकाशमात्मौषधीर्लोमानिवनस्पतीन्केशाअप्सुलोहितंचरेतश्चनिधीयतेक्वायंतदापुरुषोभवतीत्याहरसोम्यह
स्तमार्तभागाऽऽवामेवैतस्यवेदिष्यावोननावेतत्सजनइतितौहोत्क्रम्यमंत्रयांचक्रातेतौहयदूचतुःकर्महैवतदूचतुरथयत्प्रशशꣳसतुःकर्महैवतत्प्रशशꣳस
तुःपुण्योवैपुण्येनकर्मणाभवतिपापःपापेनेति

त्यपिग्राह्यं । अनेनक्केत्यस्यस्वर्गादावित्युत्तरमुक्तंभवति । ततःस्वपृष्टप्रश्नानामुत्तरकथनाज्जारत्कारवआर्तभागउपरराम ॥ ७ ॥ आर्तभागब्राह्मणं ॥ ७ ॥ अत्रपारीक्षिताइत्यस्यपरितोदुरितंक्षीयतेयेनसपरीक्षित्अश्वमेधःतद्याजिनःपारीक्षिताइतिव्याख्यानमसत् । क्कपारिक्षिताइतिप्रश्नस्यागच्छन्वैतेतद्यत्राश्वमेधयाजिनोगच्छंतीतिपरिहारानुपपत्तेः । नह्यश्वमेधयाजिनःक्कसंतीतिप्रश्नेयत्राश्वमेधयाजिनस्तत्रागच्छन्निति परिहारःसंभवति । नचाधुनातनाःपारीक्षिताःक्केतिप्रश्नेपूर्वतनाअश्वमेधयाजिनोयत्रेतिपरिहारःसंभवतीतिवाच्यं । अश्रुतकल्पनापत्तेरितिभावेनपारीक्षिताइत्येतद्व्याचष्टे ॥ **पारीक्षिताइति** ॥ ननुतथापि यत्राश्वमेधयाजिनस्तत्रपारीक्षिताआगच्छन्नितिपरिहारानुपपत्तिः । नह्यश्वमेधयाजिनांपुरुषाणांयत्स्थानंस्वर्गादिकंतत्प्रद्युम्नानां स्थानं । तेषांदेवत्वेनाश्वमेधयाज्यपेक्षयोत्तमत्वादित्यतोऽश्वमेधयाजिपदंव्याचष्टे ॥ **अश्वमेधयाजिनइति** ॥ प्रद्युम्नानांइंद्राणांचसमत्वेनैकस्थानत्वमुपपन्नमितिभावः । उक्तार्थेप्रमाणंवदन्समग्रब्राह्मणंप्रमाणेनव्याचष्टे ॥ **प्रद्युम्नइति** ॥ प्रद्युम्नेपारीक्षितशब्दंनिर्वक्ति ॥ **सर्वेक्षणादिति** ॥ अन्येषामप्यश्वमेधयाजित्वात्कथमश्वमेधयाजिनइंद्राइतिव्याख्यानमित्यतआह ॥ **शताश्वमेधेति** ॥ असाधारण्येनव्यपदेशाभवंतीतिभावः । ननुइंद्रकामयोरेकैकत्वात्कथंबहुवचनं । कथंवातेषामेकस्थानत्वोक्तिः ।

---

उप० ॥ ततोहजारत्कारवआर्तभागउपरराम ॥ १३ ॥ इत्यार्तभागब्राह्मणं ॥ ५ ॥ २ ॥

भाष्यं ॥ पारिक्षिताःप्रद्युम्नाः । अश्वमेधयाजिनइंद्राः । प्रद्युम्नःकामनामासौपारिक्षितइतीरितः । सर्वेक्षणात्परोविष्णुःपरीक्षिदितिकीर्तितः । तत्पुत्रत्वात्कामदेवःपारिक्षितइतिस्मृतः । शताश्वमेधयाजित्वादिंद्राएवाश्वमेधिनः ।

इंद्रस्थानेस्वर्गेकामस्यावस्थानाभावादित्यतआह ॥ अतीतेति ॥ इंद्रःसुपर्णोभूत्वेतिकथं । पुरंदरस्यसुपर्णत्वेनभवनायोगादि त्यतआह ॥ इंद्रनामात्विति ॥ कुतइत्यतआह ॥ सामर्थ्यादिति ॥ ऐश्वर्यादित्यर्थः । यद्वाइंद्रशब्दसामर्थ्यादेव । इंद्रः सुपर्णोगरुडइत्यभिधानादित्यर्थः । ननुगरुडःसुपर्णोभूत्वेतिकथं सिद्धत्वेनावक्तव्यत्वादित्यतआह ॥ तस्येति ॥ सौपर्णपक्षिसं बंधि पौरुषंपुरुषसंबंधि । इंद्रस्सुपर्णोभूत्वावायवेप्रायच्छदित्येतद्व्याचष्टे ॥ तत्रेति ॥ अत्रवायुशब्देनचतुर्मुखोविवक्षितः । वा युरात्मनिधित्वातत्रागमयद्यत्राश्वमेधयाजिनोभवन्नितिवाक्यंव्याचष्टे ॥ वायुरिति ॥ तत्रागमयदितिशेषः । एवमिववैसवायु मेवप्रशशंसेत्यस्यतात्पर्यमाह ॥ एवमिति ॥ तस्माद्वायुरेवव्यष्टिर्वायुरेवसमष्टिरित्येतद्व्याचष्टे ॥ तस्मादिति ॥ सर्वोत्तमइति व्यष्टिसमष्टिशब्दतात्पर्यकथनं । व्यष्टिशब्दार्थमाह ॥ विविधमिति ॥ अशूव्याप्तावित्यस्मात्कर्तरिक्तिच्कौचसंज्ञायामिति क्तिच् । विविधंअश्नुतइतिव्यष्टिः । विविधमित्यस्यैवविवरणंयदष्टकमिति । यद्वाविविधमष्टकमस्यास्तीतिव्यष्टिरित्यर्थः । सम ष्टिशब्दार्थमाह ॥ संपूर्णानिति ॥ संसमीचीनमश्नुतइतिसमष्टिः समीचीनमष्टकमस्यास्तीतिवासमष्टिः । समीचीनमित्यस्य

भाष्यं ॥ अतीतानागतानांचकामानांवज्रिणामपि । एकमेवहिमुक्तानांस्थानंवेदोदितंसदा । इंद्रनामातुगरुडःसामर्थ्यादेवकथ्यते । तस्यरू पद्वयंनित्यंसौपर्णपौरुषंतथा । तत्रपौरुषरूपीसन्भूत्वासौपर्णरूपवान् । कामदेवानुपादायमुक्तौवायोःप्रयच्छति । वायुस्तान्स्वशरीरस्थान्कृत्वेंद्रायत्र मुक्तिगाः । प्रद्युम्ननामकेविष्णावेवंवायुर्हिमोक्षदः । तस्मात्सर्वोत्तमोवायुर्विविधंतुयदष्टकं । देवानृषीन्पितॄन्यक्षान्गंधर्वान्मानुषोरगान् । असुरांश्च वशेनित्यंनयत्यमितपौरुषः ।

विवरणं ॥ संपूर्णानिति ॥ अपपुनर्मृत्युंजयतीतिफलवाक्यंव्याचष्टे ॥ एवमिति ॥ तमेवंविद्वानितिश्रुतिविरोधपरिहारा योक्तं ॥ तत्परमिति ॥ अप्रतीतेर्मद्रेषुचरकाइत्युक्तचरकशब्दार्थमाह ॥ चरकइति ॥ द्वात्रिंशतंवैदेवरथान्ह्यानीत्यत्राहःश ब्दस्यदिनार्थत्वेप्रकृतेऽसंभवात् मुहूर्तप्रकाशरूपार्थद्वयंविवक्षितं । तत्राभिधानमाह ॥ अहरिति ॥ ननुषष्टिघटिकात्मकस्यैक स्यदिवसस्यत्रिंशन्मुहूर्तात्मकत्वात् द्वात्रिंशतंवैदेवरथान्ह्यानीतिकथमुक्तमित्यतोमुहूर्तपरिमाणंतावदाह ॥ मुहूर्तमिति ॥ घ टिकाष्टभागोनंचतत्घटिकाद्वयंचेतितथोक्तं । तावदुत्तरःघटिकाष्टमभागाधिकोद्विघटिकात्मकःकालोमुहूर्तइत्यर्थः । अत्रविघ टिकामात्राधिक्यंद्रष्टव्यं । किंततइत्यतआह ॥ द्वात्रिंशत्त्विति ॥ अथवेति ॥ अष्टाविंशत्रिंशन्मुहूर्तमितिपक्षांतरद्योतकः । कथमेतत्संगतंइत्यतआह ॥ मुहूर्तोन्मानभेदतइति ॥ प्रागुक्तमुहूर्तोत्कृष्टपरिमाणभेदतइत्यर्थः । पक्षत्रयेपिदिवसस्यषष्टिघ टिकात्मकत्वंनविहन्यतइतिभावः । तथाचश्रुतौ अष्टभागोनघटिकाद्वयात्मकमुहूर्तापेक्षयाद्वात्रिंशतंवैदेवरथान्ह्यानीत्युक्तमिति

---

भाष्यं ॥ संपूर्णाश्चसुपर्णेशशेषेंद्रांस्तत्स्त्रियोपिच । अष्टौनयत्युन्नयतिवशीकृत्यस्वयंप्रभुः । अतोव्यष्टिःसमष्टिश्चवायुरेवाभिधीयते । एवंव्य ष्टिंसमष्टिंचयोवायुंवेदतत्वतः । तत्परंचहरिंनित्यंमुच्यतेसंसृतेःपुमानितिपरमसंहितायां । चरकस्तीर्थसंचारीवित्तार्थीकरकस्मृतइत्यभिधानं । अह मुहूर्तंविज्ञेयमहर्मासोपिभण्यते । अहर्दिनंप्रकाशश्चकचिज्ज्ञानंवलंतथेतिच । मुहूर्तमष्टभागोनघटिकाद्वयमिष्यते । कचिद्विघटिकापिस्यात्कचित्स्या त्तावदुत्तरइतिकालनिर्णये । द्वात्रिंशत्तुमुहूर्तानांदिनमेकंविदुर्बुधाः । त्रिंशन्मुहूर्तमथवामुहूर्तोन्मानभेदतइतिच ।

तात्पर्यं । द्वात्रिंशतंवैदेवरथान्ह्यानीतिवाक्यंव्याख्यातुंतदुपयुक्तत्वेनसूर्यरथपरिभ्रमणपरिमाणमाह ॥सप्तकोटिमिति॥ शतपंचकस्यसप्तमभागसहितंसप्तांशशतपंचकं। रथपरिभ्रमणदेशपरिमाणमुक्त्वाचक्रपरिभ्रमणदेशपरिमाणमाह ॥तत्रिभागाधिकमिति॥सप्तकोटिमित्याद्युक्तरथपरिभ्रमणदेशपरिमाणतृतीयभागाधिकदेशमित्यर्थः।उक्तंचपंचमस्कंधे।एवंनवकोट्यएकपंचाशल्लक्षाणियोजनानांमानसोत्तरगिरिपरिवर्तनस्योपदिशंतीति । रथसंबंद्धचक्रपरिभ्रमणदेशस्यतत्रिभागाधिकत्वंकथमित्यतउक्तं ॥ मानसोत्तरगमिति ॥ रथस्तुमानसोत्तरपर्वतापेक्षयांतर्देशएववर्ततइत्यर्थः । सप्तकोटिमित्युक्तंयोजनंकेषांमानतइतिजिज्ञासायामाह ॥ नृणामिति ॥ तुशब्दएवार्थे कार्तयुगानामेवनृणामंगुलिमानतोयोजनाभवेत् । तद्यथा चतुर्विंशत्यंगुलोहस्तः । हस्तचतुष्कोदंडः । दंडसहस्रंक्रोशः । क्रोशचतुष्कंयोजनमिति । इदानींद्वात्रिंशतंदेवरथान्ह्यान्ययंलोकइतिवाक्यंव्याचष्टे ॥ यावत्सूर्यइति ॥ यावत्यावद्योजनात्मकेदेशे । तावत्तावतिदेशे । सूर्यस्यप्रकाशःसूर्यस्यपार्श्वयोर्मेरुपर्वतभागेलोकालोकपर्वतभागे । चसर्वतःसर्वस्मिन्देशेस्यात् । अनेनद्वात्रिंशतंद्वात्रिंशद्देवरथस्यपरिवर्तमानस्यसूर्यरथस्याहानिमुहूर्तानिदेवरथाहानितैर्व्याप्तानियोजनानिदेवरथान्ह्यानि यावंतियावंतियोजनानिदेवस्यसूर्यस्याहोभिःप्रकाशैर्वाव्याप्तानि । अयंप्रकाशव्याप्तोदेशोलोकोलो

---

भाष्यं ॥ सप्तकोटिंचलक्षाणांचतुर्दशचनित्यशः । अष्टाविंशत्सहस्रंचसप्तांशशतपंचकं । सौरोरथस्त्वहोरात्रात्परियातिदिविस्थितः । तत्रिभागाधिकंचक्रंमानसोत्तरगंचरेत् । नृणांकार्तयुगानांतुयोजनामानतोभवेत् । यावत्सूर्यरथोयातिदिवारात्रेणपार्श्वयोः । सूर्यस्यतावदेवस्यात्प्रकाशः सर्वतस्तथा ।

कनामेतिव्याख्यातंभवति । यद्वादेवस्यान्ह्यानीत्येतदनावर्त्यतावद्योजनात्मकेदेशेऽयंलोकःसूर्यस्यप्रकाशइतिव्याख्यातंभवति । ननुसूर्यरथपरिभ्रमणपरिमाणंसप्तकोटिंचलक्षाणामित्याद्युक्तंअयुक्तंसूर्यरथपरिभ्रमणपरिमाणस्य(सूर्यप्रकाशव्याप्तदेशस्य)तावत्त्वेतावतःप्रदेशस्यलोकशब्दवाच्यत्वंकथमुच्यते । सप्तकोटिविस्तरात्मकप्रदेशस्यैवलोकशब्दवाच्यत्वेननिर्णीतत्वात् । अयंद्वीपःसागरश्चलक्षयोजनविस्तृतौ । तदन्येतुक्रमेणैवद्विगुणेनोत्तरोत्तराः । अंत्याध्यर्धस्थलंहैमंबाह्यतोवाज्रलेपिकं । एतत्सर्वंलोकनामेतीतिवाक्यार्थपर्यालोचनयातथैवलाभादितिचेत् न । सौरप्रकाशस्यभूप्रदेशइवमेर्वादिलोकालोकांतपर्वतोपरिभागवर्तित्वेनतद्व्याप्तदेशस्यसप्तकोट्यपेक्षयाचतुर्दशलक्षाणामित्युक्तसंख्याधिक्येपिअयंलोकइत्यत्रसौरप्रकाशव्याप्तसप्तकोटिसंख्याकभूसमुद्रप्रदेशमात्रस्यैवलोकशब्दवाच्यत्वेनविवक्षितत्वादिति । तंसमंतमितिवाक्यंव्याचष्टे ॥ **तमोंधमिति** ॥ तस्मात्सूर्यप्रकाशव्याप्तदेशात् । तर्हिश्रुतौपृथिवीशब्दप्रयोगःकथमित्यतआह ॥ **काठिन्यादिति** ॥ तांपृथिवींद्विस्तावत्समुद्रइत्येतद्व्याचष्टे ॥ **ततइति** ॥ सतिचैवंब्रह्मांडांतःकियत्परिमाणंजातमित्यतआह ॥ **पंचाशदिति** ॥ ननूक्तगणनतयाब्रह्मांडांतरेकोनपंचाशत्कोटित्वप्राप्तेःकथमेतदितिचेत् न । लोकालोकपर्वताक्रांतस्यपार्श्वद्वयगतस्यमिलितस्यकोटियोजनपरिमितस्यभूप्रदेशस्यात्रानुक्तस्यापिग्राह्यत्वात् । यथोक्तं । लोकालोकप्रदेशस्तुपंचाशल्लक्षविस्तृतइति । नचैवंसपंचाशत्सहस्रश्चेत्युक्तत्वेनलोकालोकप्रदेशोलक्षाधिककोटिसंख्याकस्तथाचलक्षयोजनाधिक्यंस्यादितिवाच्यं । जंबूद्वीपस्यलक्षमात्रयोजनत्वेनलोकनामकप्रदेशस्यलक्षन्यूनसप्त



भाष्यं ॥ तमोंधंद्विगुणंतस्मात्काठिन्यात्पृथ्विनामकं । ततोमंडोदकंचापिद्विगुणंपरिकीर्तितं । पंचाशत्कोटिविस्तारमेवमंडांतमुच्यते ।

कोटिसंख्याकत्वादिति । तद्यावतीक्षुरस्यधारेत्यादिकंव्याख्यातुंतदुपयुक्तमाह ॥ ततइति ॥ मंडोदकात्परतः । तद्याचष्टे ॥ सुषिरमिति ॥ ततःहरिणाभिन्नत्वात् । सर्वतोदिक्षुसुषिरमस्ति । तानिंद्रेइत्यस्यतात्पर्यमाह ॥ सुपर्णइति ॥ तेनमार्गेण ॥ ततश्चायंखंडार्थः ॥ अथआर्तभागोपरमानंतरं । लह्यस्यापत्यंलाह्यायनिः । भुज्युरितिनामवान् । एनंयाज्ञवल्क्यं पप्रच्छ । एतस्यप्रश्नस्यत्वयोत्तरंवक्तुंनशक्यतइतिद्योतयितुंकांचनकथामाह ॥ याज्ञवल्क्येति ॥ चरकाःतीर्थचारिणःसंतोवयं । मद्रेषु मद्रदेशेषु । पर्यव्रजामपर्यटितवंतः । तेवयं । काप्यस्यकपिगोत्रोत्पन्नस्य । पतंजलस्यपतंजलनाम्नः । गृहान्आवसथान् । ऐमआगतवंतः । तस्यपतंजलस्य । दुहितागंधर्वेणगृहीता । आसीत् तंदुहितर्याविष्टंगंधर्वं । त्वंकःकिंनामासीतिवयमपृच्छाम । सोस्मान्प्रत्यब्रवीत् । नाम्नासुधन्वा गोत्रेणांगिरसःइति । तत्स्वरूपंज्ञात्वा । तंगंधर्वं यदालोकानांलोकादीनां अंतान्निर्णयान् अवसानान्वा अपृच्छाम । अथतदा एनंगंधर्वं पारीक्षिताःपरितईक्षतइतिपरीक्षित्विष्णुःतत्पुत्रत्वात्पारीक्षिताःअतीतानागतकामदेवाः । क्वाभवन्क्वगताइत्यब्रूम । सःगंधर्वादाप्तविद्योहं । क्वपारीक्षिताअभवन् तत्स्थानं त्वात्वां पृच्छामि । हेयाज्ञव

भाष्यं ॥ ततस्त्वंडंचसौवर्णंतद्भिन्नंहरिणापुरा । सुपिरंसर्वतोदिक्षुक्षुरधारासमंततः । सुपर्णोवायवेतनमुक्तान्कामान्प्रयच्छतीतितत्वसंहितायां । भुज्युब्राह्मणं ॥ ३ ॥

उप० ॥ अथहैनंभुज्युर्लाह्यायनिःपप्रच्छयाज्ञवल्क्येतिहोवाच मद्रेपुचरकाःपर्यव्रजाम तेपतं(च)जलस्यकाप्यस्यग्रहानैम तस्यासीदुहितागंधर्वगृहीता तमपृच्छामकोसीति सोत्रवीत्सुधन्वांगिरसइति तंयदालोकानामंतानपृच्छामाथैनमब्रूमक्वपारीक्षिताअभवन्निति क्वपारीक्षिताअभवन्सत्वापृच्छामियाज्ञवल्क्यक्वपारीक्षिताअभवन्निति ॥ १ ॥



350

ल्क्यत्वंयदिजानासि तर्हिक्कपारीक्षिताअभवन्नित्यस्योत्तरंकथय ॥ १ ॥ सःएवंभुज्युनापृष्टयाज्ञवल्क्योहउवाच । सःसुधन्वांऽगिरसः तुभ्यंउवाचवै । अहंतुब्रवीमि । तेपारीक्षिताः तत्तत्र अगच्छन्वै । क्व यत्रशताश्वमेधयाजित्वेनाश्वमेधयाजिनःइंद्राः अतीतानागताःमुक्ताःगच्छंतीति । पुनःपृच्छति ॥ क्वेति ॥ तेषांस्थानंवक्तुंभुवनकोशपरिमाणमाह ॥ द्वात्रिंशतमिति ॥ द्वात्रिंशतंद्वात्रिंशत् । देवरथस्यसूर्यरथस्यपरिवर्तमानस्यअहानिमुहूर्तानिदेवरथाहानितैर्व्याप्तानियोजनानिदेवरथान्ह्यानियावंति । तावंतियोजनानि । देवरथस्यसूर्यस्यअहोभिःप्रकाशैर्व्याप्तानि । अयंसौरप्रकाशव्याप्तोदेशः । लोकोनामेतियोजना । द्वात्रिंशन्मुहूर्तात्मिकाहोरात्राभ्यांयावंतंदेशंसूर्यरथःपरिभ्रमति तावतिदेशेसौरप्रकाशोस्ति । यावतिसौरप्रकाशोस्तितावद्देशोलोकइत्युच्यतइत्यर्थः । यावान्लोकनामकोदेशःद्विस्तावत्द्विगुणितंतावत्काठिन्यात्पृथिवीनामकंतमः । तंलोकंसमंतंसमंतात् । पर्येतिपरितोवर्तते । यावान्तमःप्रदेशः द्विस्तावत्समुद्रःघनोदकनामा तांपृथिवींसमंतंपर्येतिपरितोवर्तते । ततस्त्वंडंचसौवर्णतच्छिन्नंहरिणापुरेतिग्राह्यं । यावतीक्षुरस्यधाराअग्रं । यावद्वामक्षिकायाःपत्रं तावान् । तत्तत्रसौवर्णांडेअंतरेणाकाशोस्ति । तेन मार्गेण इंद्रःसामर्थ्यादिंद्रनामापुरुषरूपीगरुडः सुपर्णोभूत्वा सुपर्णशब्देनस्वकीयमेवसौपर्णरूपमुच्यते तद्भूत्वा । तान्पारीक्षि 351

उप०॥सहोवाचोवाचवैसोगच्छन्वैतेतद्यत्राश्वमेधयाजिनोगच्छंतीति कन्वश्वमेधयाजिनोगच्छंतीति द्वात्रिꣳशतंवैदेवरथान्ह्यान्ययंलोकस्तꣳसमंतंपृथिवीद्विस्तावत्पर्येतिताꣳसमंतंपृथिवींद्विस्तावत्समुद्रःपर्येतितद्यावतीक्षुरस्यधारायावद्वामक्षिकायाःपत्रंतावानंतरेणाकाशस्तानिंद्रःसुपर्णोभूत्वा

तान्वायवेप्रायच्छत् । वायुःतान्पारीक्षितान्आत्मनिस्वशरीरेधित्वाधृत्वातत्रागमयत् । क यत्रप्रद्युम्ननामकेविष्णौअश्वमेधयाजिनोमुक्ताइंद्राःअभवन्इति । यथाअहंपारीक्षितानांमोक्षदातृतयावायुंस्तौमिएवमिवएवमेव । वै सःगंधर्वोवायुमेवप्रशशंस । वेदपुरुषःस्वयंवायुंस्तौति ॥ तस्मादिति ॥ पारीक्षितानांमोक्षदातृतया । वायुरेवव्यष्टिः विविधंप्रत्येकंअनेकविधंदेवर्ष्यादिरूपंयदष्टकंतन्नयतीतिव्यष्टिः । वायुरेवसमष्टिः संपूर्णयत्सुपर्णादिरूपमष्टकं तन्नयतीतिसमष्टिरित्यर्थः । व्यष्टिसमष्टित्वेनवायुज्ञानिनःफलमाह ॥ अपपुनरिति ॥ २ ॥ भुज्युब्राह्मणं ॥ ३ ॥ यत्साक्षादपरोक्षादित्यस्ययद्ब्रह्मबृहत्तमं साक्षादव्यवहितमपरोक्षाद्विभक्तिव्यत्ययेनापरोक्षमगौणंनतुनामब्रह्मेत्यादिवत्गौणमितिव्याख्यानमसत् । अपरोक्षादित्यस्यैवार्थांतरपरत्वेन प्रथमांतत्वसंभवेपंचम्यंतत्वमंगीकृत्यविभक्तिव्यत्यासस्यानाश्रयणीयत्वात् । अगौणमित्यस्याशाब्दत्वाच्चेतिभावेनतदनूद्यव्याचष्टे ॥ यत्साक्षादिति ॥ अपरोक्षमितिक्रियाविशेषणं । अदित्यस्यार्थोत्तीति भक्षणार्थत्वस्यप्रकृतानुपयोगात्तत्तात्पर्यमाह ॥ अनुभवतीति ॥ विषयानुक्तेस्तदुक्तिपूर्वकमपरोक्षादित्यस्यफलितमर्थमाह ॥ स्वरूपमिति ॥ नन्वनेनापरोक्षतयाजानातीत्य

उप० ॥ वायवेप्रायच्छत्तान्वायुरात्मनिधित्वातत्रागमयद्यत्राश्वमेधयाजिनोभवन्नित्येवमिववैसवायुमेवप्रशशंसतस्माद्वायुरेवव्यष्टिर्वायुःसमष्टिरपपुनर्मृत्युंजयतियएवंवेदततोहभुज्युर्लाह्यायनिरुपरराम ॥ २ ॥ इतिभुज्युब्राह्मणं ॥ ३ ॥

भाष्यं ॥ यत्साक्षादपरोक्षात् । साक्षादेवापरोक्षमत्तिअनुभवतिस्वरूपमन्यच्चसर्वपश्यतीतिसाक्षादपरोक्षात् ।

परोक्षादित्यर्थउक्तोभवति । तथाचसाक्षादितिविशेषणंव्यर्थस्यादित्यतआह ॥ आपरोक्ष्येणेति ॥ पश्यतांजानतां (पश्यार्थं श्चानालोचनइतिज्ञानमात्रेपितत्प्रयोगात् । नचस्वरूपमन्यच्चपश्यतीत्युक्त्यैवान्यत्राप्रसंगात्साक्षादितिविशेषणवैयर्थ्यंतदवस्थ मेवेतिवाच्यं । स्वरूपमन्यच्चेत्यस्यस्वरूपमात्रकथनपरत्वेनशब्दार्थांतर्गतत्वाभावात् । अतएवापरोक्ष्येणपश्यतामित्येवानुवादः कृतइतिभावः । ननुसाक्षादित्यनेनयद्यनन्यापेक्षत्वमुक्तंतर्हिब्रह्मेतिविशेषणंव्यर्थंस्यात् । अनन्यापेक्षस्यपूर्णत्वनियमेनतदुक्त्यै वतल्लाभादित्यतआह ॥ अनन्यापेक्षस्यापीति ॥ कस्मिंश्चिद्विषयेनन्यापेक्षस्यापिअपूर्णत्वंभवतीत्यतःपूर्णत्वप्रतिपादनाय ब्रह्मेतिविशेषणंनव्यर्थमित्यर्थः । यद्वाअनन्यापेक्षस्यनपूर्णत्वनियमः । अनन्यापेक्षस्यापरिपूर्णत्वंभवतिसंभवतीत्यप्रयोजकत्वा त् । तथाचनतदुक्त्यापूर्णत्वंलभ्यतइत्याशंकमानंप्रतिपूर्णत्वप्रतिपादनार्थंतद्विशेषणमितिभावः । आत्माजीवइतिव्याख्यानम सत् । तस्यसर्वांतरत्वायोगात् । नतुजीवस्यापरिच्छिन्नत्वमस्ति येनपरिच्छिन्नत्वभ्रमव्युदासायतत्सार्थकंस्यादितिभावेनब्रह्मश ब्दागतार्थतयात्मशब्दंव्याचष्टे ॥ अन्येषामिति ॥ इत्यतइतिनिमित्तात् । परमात्मनोन्यनियामकत्वंनिमित्तीकृत्यात्मेत्युक्त मित्यर्थः । ननुयदिसर्वांतरत्वंसर्वांतस्थत्वमात्रंतदाकाशादिसाधारण्यापत्तिः । यदिचनियामकतयेतिविवक्षितंतदात्मशब्देनग तार्थमित्यतस्तन्निवर्त्याशंकांसूचयन्व्याचष्टे ॥ अन्येति ॥ आत्मशब्देनपरमात्मनोन्यनियंतृत्वोक्तौतच्चब्रह्मादीनामिवान्यापे 353

भाष्यं ॥ आपरोक्ष्येणपश्यतामप्यन्येषांभगवत्प्रसादादेवदर्शनंभवति । नभगवतोन्यापेक्षयेतिसाक्षादितिविशेषणं । अनन्यापेक्षस्याप्यपूर्ण त्वंभवतीत्यतोब्रह्मेति । अन्येषांनियंतृत्वंचास्तीत्यतआत्मा । अन्यनियंतृत्वेप्यन्यापेक्षानास्तीत्यतःसर्वांतरः ।

क्षयाकिमित्येतच्छंकापरिहारार्थमन्यनियंतृत्वेप्यन्यापेक्षानास्तीत्यतोहेतोस्सर्वांतरइत्युक्तमित्यर्थः । सर्वांतरशब्देनकथमेतल्लभ्यतइत्यतस्तद्व्याचष्टे ॥ **सर्वमिति** ॥ स्वतोसमर्थस्यान्यापेक्षेतिभावः । योमआत्मेत्युषस्तेनानुक्तत्वात्तआत्मेतिकथंयाज्ञवल्क्येनानुवादःकृतइत्यतआह ॥ **जीवेति** ॥ उषस्तेनजीवब्रह्मणोरेकत्वंवुध्वाजीवस्वरूपंपृष्टमितिमंदानांजीवब्रह्माभेदप्रतीतिनिरासार्थंयाज्ञवल्क्येनतआत्मेत्यनुवादःकृतइत्यर्थः । एतेनैतदपिनिरस्तंयत्परैरुक्तंयत्साक्षादपरोक्षंब्रह्म यश्चात्माजीवः सर्वांतरस्तंब्रह्माभिन्नमेवव्याचक्ष्वेति । जीवब्रह्माभेदस्यप्रश्नविषयकत्वेतआत्मेतिजीवेश्वरभेदानुवादानुपपत्तेरिति । ननुतआत्मेत्यनुक्तावपिजीवेशभेदःसाक्षादपरोक्षत्वादिविशेषणोक्त्यैवसिध्यति । अतस्तदुक्तिर्व्यर्थेत्यतआह ॥ **साक्षादिति** ॥ यद्यपिसाक्षादपरोक्षत्वादिगुणैरेवजीवेशभेदःसिध्यति । जीवेतदभावस्यानुभवसिद्धत्वात् । तथापितेषांधर्माणांव्यावहारिकत्वात्तत्कृतोभेदोपिव्यावहारिकः । सचनपरमार्थतोजीवेश्वरचैतन्याभेदविरोधीतितच्चैतन्ययोरभेदःस्यादित्यतःपरमार्थतोपिमुक्तौजीवेश्वरचैतन्याभेदनिवृत्यर्थंतआत्मेत्युक्तं । ननुतआत्मेतिवाक्यप्रतिपाद्योपिभेदःव्यावहारिकःकिंन्नस्यादितिचेन्न । जीवेश्वरभेदस्यवेदप्रधानतात्पर्यविषयत्वेनपरमार्थतयामुक्तावपिसिद्धेः । नतुतत्रप्रधानतात्पर्यमेवकुतःसिद्धमित्यतआह ॥ **तत्रेति** ॥ जीवेशभेदेइत्यर्थः । अभ्यासमात्रंतात्पर्यंज्ञापयतिपुनःपुनरभ्यासस्तुमहातात्पर्यंज्ञापयतीत्यर्थः । तंमेव्याचक्ष्वब्रह्माभिन्नंजीवंव्याचक्ष्वशृंगेगृहीत्वागामिव

---

भाष्यं ॥ सर्वसामर्थ्यंस्वांतरेवास्तीति । जीवेश्वराभेदनिवृत्त्यर्थंतआत्मेति । साक्षादपरोक्षत्वादिगुणैरेवभेदेसिद्धेपिपरमार्थतोपिजीवेश्वराभेदनिवृत्त्यर्थंतआत्मेति । तत्रप्रधानतात्पर्यज्ञापनार्थंपुनःपुनरभ्यासः ।

दर्शयेतिप्रश्नस्योक्तमुत्तरंव्यधिकरणमितिप्रश्नोत्तरयोर्वैयधिकरण्यमाशंकते सहोवाचेतीतिव्याख्यानमसत् । तंमेव्याचक्ष्वेत्यस्य शब्दवाह्यत्वदुक्ताभिप्रायकत्वाभावेनपरमात्मानंव्याचक्ष्वेत्यर्थत्वेउक्तोत्तरस्यसमानाधिकरणत्वादितिभावेनस्वयमन्यथातद्वक्ता र्थंव्याचष्टे ॥ देवतांतरस्यापीति ॥ ब्रह्मरुद्रादिरूपस्येत्यर्थः । समानमिति तथाचातिव्याप्तिरित्यर्थः । यद्यपियःप्राणेनप्रा णितीत्यादियाज्ञवल्क्योक्तब्रह्मलक्षणएवातिव्याप्तिराशंक्या । तथापिस्वोक्तस्यापिसाक्षादपरोक्षत्वादिलक्षणस्यवस्तुतोनिर्दुष्टस्य याज्ञवल्क्यस्याभिप्रेतत्वेनतत्राप्यतिव्याप्तिशंकेतिध्येयं । नन्वेवंयदन्यानिष्टंविष्णोर्लक्षणंतन्मेव्याचक्ष्वेतिप्रश्नवाक्यार्थः । एत स्यचनोत्तरमुपलभ्यते । नदृष्टेर्द्रष्टारमित्याद्युक्तलक्षणस्यापिपूर्ववदतिव्याप्तिशंकाग्रस्तत्वादित्यतआह ॥ अतइति ॥ यतइतर लक्षणानामतिव्याप्तिशंकाविषयत्वमित्यर्थः । विशेष्यतइतिविशेषः । किमनेनविशेषनामोक्तंविष्णोरित्यतःतद्व्याचष्टे ॥ अतो न्यदिति ॥ नन्वतःशब्दस्यप्रकृतपरामर्शकत्वात्कथंविष्णोरन्यदितिव्याख्यानमित्यतआह ॥ अइतीति ॥ हिशब्देनअःइ तिब्रह्मअकारोवासुदेवःस्यादित्यादिश्रुतिस्मृतिप्रसिद्धिंदर्शयति । अनेनअइत्येवविशेषनामेत्युक्तंभवति । नचैतदपिअन्यसमा नं । अकारनामानान्योस्तितमृतेपुरुषोत्तमं । ब्रह्मरुद्रादिनामानिब्रह्मादिष्वप्यमुख्यतः । वर्ततेनत्वकारोयंवर्ततेकेशवंविना । नारायणादिनामानिनृणांनामक्रियास्वपि । विहितान्यकारोनैवायंविहितस्तमृतेप्रभुरितिवचनादकारस्यविशेषनामत्वावगमात् ।

भाष्यं ॥ देवतांतरस्यापीदंलक्षणंसमानमितिपृच्छति । यथाविब्रूयादित्यादिना । चतुष्पात्त्वादिलक्षणंगोरश्वस्यापियथासममेवसाक्षादपरो क्षत्वादिलक्षणंतत्तद्देवतावादिभिस्तस्यास्तस्याअंगीक्रियतएव । अतोविशेषनामवक्ति । अतइति । अतोन्यद्विष्णोरन्यदार्तं । अइतिविष्णोर्नाम ।

ननूक्तलक्षणानामतिव्याप्तिशंकाग्रस्तत्वात्किमसाधारणंलक्षणमितिप्रश्नेनदृष्टेरित्यादिनेंद्रियागोचरत्वंकथमुच्यते । तस्यापितथा त्वादित्यतस्तदपिश्रुतिसिद्धत्वेनासाधारणमित्यभिप्रेत्याह ॥ नतइति ॥ चक्षुराद्यगोचरत्वादेर्विष्णवन्यानिष्ठत्वेआद्याश्रुतिः । चक्षुराद्यगोचरत्वस्यविष्णुनिष्ठत्वेतदन्यानिष्ठत्वेचद्वितीया । हेविष्णोदेव तेमहिम्नश्चक्षुराद्यगोचरत्वादिरूपस्य । परमंतंसीमानं जायमानोनप्राप्नोति जातोनाप जनिष्यमाणोनाप्स्यतीत्यर्थः । हेविष्णोस्त्वमूर्त्यैवापरिच्छिन्न मापयंतिविषयानितिमात्रेंद्रियगण स्ततस्त्वंपरोसि तेमहित्वमिंद्रियागोचरत्वलक्षणं केपिनप्राप्नुवंतीत्यर्थः । नतेविष्णावितिसामान्यश्रुतिमुदाहरतासाक्षादपरोक्षत्वा दीनामुक्तसर्वलक्षणानामतिव्याप्तिःपरिहृता । अतएवोदाहरिष्यमाणप्रमाणे यद्यप्येतेगुणाःसर्वेविष्णोरेवनचान्यगा इत्युक्तमि तिज्ञातव्यं । एवंस्ववाक्येनब्राह्मणंव्याख्यायतद्दार्ढ्यायतद्व्याख्यानरूपंप्रमाणंउदाहरति ॥ **विनैवेत्यादिना** ॥ साक्षादित्यस्या र्थः विनैवान्यप्रसादेनेति । अपरोक्षेत्यस्यार्थःपश्यन्नेवेति । अदित्यस्यार्थोनुभवतीति । पूर्णसर्वगुणात्मकंस्वरूपमितित्रिषयो क्तिः । नकेवलंस्वस्वरूपं किंतुसर्वंजडाजडमन्यज्जगच्चाव्यवधानेनपश्यति । साक्षादित्यस्यार्थोव्यवधानेननान्यद्वारमंतरेणेति । अपरोक्षादित्यस्यार्थःपश्यतीति । साक्षाच्छब्दस्योक्तार्थत्वमुपपादयति ॥ **साक्षाच्छब्दइति** ॥ आहेतिशेषः । अपरोक्षशब्द

---

भाष्यं ॥ नतेविष्णोपरोमात्रयेत्यादिश्रुतिप्रसिद्धंविष्णोर्लक्षणं । नदृष्टेर्द्रष्टारमित्यादिनावक्ति । विनैवान्यप्रसादेनपूर्णसर्वगुणात्मकं । पश्यन्न नुभवत्येवस्वरूपंकेशवःप्रभुः । पश्यत्यव्यवधानेनसर्वंचान्यज्जडाजडं । साक्षादेवापरोक्षात्सविष्णुरेवततःस्मृतः । साक्षाच्छब्दःस्वतंत्रत्वम्

स्योक्तार्थत्वमुपपादयति ॥ **अपरोक्षइति** ॥ अपरोक्षशब्दः । अदित्यस्योक्तार्थत्वमुपपादयति ॥ **अदनमिति** ॥ भोगःस्वानुभवइत्यर्थः । ब्रह्मात्मसर्वांतरशब्दान्व्याचष्टे ॥ **ब्रह्मेति** ॥ सर्वैरनियम्यत्वतइतिसंबंधः । यःप्राणेनप्राणितीत्यादिव्याचष्टे ॥ **प्राणादीति** ॥ अनेनयोविष्णुः प्राणेनप्राणनाम्नामुख्यवायुरूपेण निमित्तेन प्राणितिजगत्प्राणनरूपंव्यापारंकरोतीत्यादिव्याख्यातंभवति । नदृष्टेर्द्रष्टारंपश्येरित्यादिव्याचष्टे ॥ **नदृश्यइति** ॥ ननुविष्णुस्वरूपस्यसर्वथाचक्षुराद्यगोचरत्वेद्रष्टव्यः श्रोतव्यइत्यादिश्रुतिविरोधइत्यतआह ॥ **अनंतात्वदिति** ॥ तथाचसाकल्येनचक्षुराद्यगोचरइत्यर्थः । नदृष्टेर्द्रष्टारमित्यादिकमुपलक्षणपरमितिभावेनोक्तमवाच्यइति । यथाविब्रूयादित्यादिव्यपदिष्टंभवतीत्यंतस्यतात्पर्यमाह ॥ **यद्यपीति** ॥ नतेविष्णावित्यादिश्रुतेरित्यर्थः । तर्हिंकिंविष्णुमात्रनिष्ठंलक्षणमुक्तमित्यतआह ॥ **अनाम्नेति** ॥ यतएतैर्गुणैर्युक्तान्शिवादिकान्प्राहुस्ततइत्यर्थः । वेदाअतोन्यदार्तमित्याद्याः । केननिमित्तेनअनामवाच्यत्वंविष्णोरित्यतआह ॥ **अदोषतइति** ॥ उक्तमनुवदन्नर्थांतरमाह ॥ **अदोषत्वादिति** ॥ अनेनअइत्यस्याभावार्थकत्वमंगीकृत्यार्थउक्तः । विरुद्धार्थत्वमंगीकृत्याह ॥ **गुणोद्रे**

भाष्यं ॥ अपरोक्षस्त्वनावृतिं । अदनंभोगउद्दिष्टस्तस्माद्विष्णुस्तथास्मृतः । ब्रह्मासौगुणपूर्णत्वादात्मासर्वनियंतृतः । अनियम्यत्वतोनित्यंसर्वैः सर्वांतरःस्मृतः । प्राणादिपंचरूपोयोवायुःसर्वनियामकः । नियंतापरमोविष्णुर्वायोस्तस्यापिसर्वदा । नदृश्यश्चक्षुषाचासौनमनोबुद्धिगोचरः । अनंतत्वान्महाविष्णुरवाच्योऽश्राव्यएवच । यद्यप्येतेगुणाःसर्वेविष्णोरेवनचान्यगाः । तथाप्येतैर्गुणैर्युक्तानज्ञाःप्राहुःशिवादिकान् । अनाम्नैवततोविष्णुमाहुर्वेदाअदोषतः । अदोषत्वाद्गुणोद्रेकादइत्युक्तोहरिःस्वयं ।

कादिति ॥ अभावार्थत्वमंगीकृत्यार्थांतरमाह ॥ अगम्यत्वाच्चेति ॥ अतोन्यदार्तमित्येतद्व्याचष्टे ॥ अतइति ॥ एवंवैतमा त्मानंविदित्वेत्यादिव्युत्थायेत्यंतोत्तरब्राह्मणगतवाक्यतात्पर्यमाह ॥ तत्प्रसादतइत्यादिना ॥ अथभिक्षाचर्यंचरंतीत्यस्यता त्पर्यमाह ॥ मुक्तानामिति ॥ गार्गिब्राह्मणतात्पर्यमाह ॥ तारतम्येनेति ॥ तारतम्योक्त्यालब्धमर्थमाह ॥ यथेति ॥ वि रुद्धधर्माधिकरणत्वादित्यर्थः । अंतर्यामिब्राह्मणतात्पर्यमाह ॥ एवमिति ॥ आर्तमित्येतद्दुःखिनइतिव्याख्यातं । तत्रप्रमाण माह ॥ आर्तिरिति ॥ एतेनातोस्मादात्मनोन्यदार्तंविनाशि रज्जुसर्पादिवत्मिथ्याभूतमितिपरव्याख्यानंप्रमाणविरुद्धमित्यु क्तंभवति । विष्णोरप्यार्तिमत्त्वेतोन्यदार्तमितिकथमुच्यतइत्यतआह ॥ अनार्तइति ॥ ननुविष्णोर्विशेषनामवक्तव्यंचेद्विष्णुर इत्युच्यतइत्येतावता पूर्तेरतोन्यदार्तमितिकिमर्थमुक्तइत्यतआह ॥ अतोन्यदिति ॥ तआत्मेत्युक्तिसमुच्चयार्थश्चशब्दः । वि ष्णोरितिशेषः । अन्यदितिभेदवाचकशब्दसद्भावादार्तत्वोक्त्याचभेदःप्रकर्षेणसिद्धइत्यर्थः । ननुविष्णवन्यज्जडंकिंनस्यात्तथा चकथंजीवानांविष्णोर्भेदसिद्धिरित्यतआह ॥ नहीति ॥ ब्राह्मणार्थमुपसंहरति ॥ अतइति ॥ तआत्मेत्याद्युक्तहेतुभ्योविष्णु

भाष्यं ॥ अगम्यत्वाच्चबुध्यादेरतोन्येसर्वएवतु । ब्रह्मरुद्रादयोजीवादुःखिनस्तत्प्रसादतः । दुःखमुक्तानिजानंदंप्राप्नुयुर्नित्यमंजसा । मुक्तानामपि सर्वेषांविष्णुरेवनियामकः । पूर्णानंदस्यतस्यैवमुक्ताविप्रुट्सुखात्मकाः । तारतम्येनतिष्ठंतिब्रह्माद्यास्तेष्वधिकःसदा । यथाचंद्रात्सदाभिन्नाःसर्वेतुहिनबिंदवः । एवंविष्णोःसदाभिन्नामुक्ताब्रह्मादिकागणाः । एवंनियंताभगवान्पूर्णसर्वगुणार्णवः । एकएवपरोविष्णुरनियम्यःसदोदितइत्यादिबृहच्छ्रुतिः । आर्तिर्दुःखं समुद्दिष्टमनार्तोविष्णुरच्युतइतिच । अतोन्यदार्तमित्येतस्माच्चजीवानांभेदःप्रसिद्धः । नहिजीवादन्यस्यार्तिर्युज्यते । अतोजीवेभ्योन्यश्चविष्णुरेव ।

जीवेभ्योन्यइति । अतआर्त्तिमत्वात्तदन्येब्रह्मरुद्रादयःसर्वेजीवाएवेतिचसिद्धमित्यर्थः । ब्रह्मरुद्रादयःसर्वेजीवाएवेत्यनेनातोन्यदार्तमित्युक्तौब्रह्मरुद्रादयोजीवाएवनतत्तद्वाद्युक्तरीत्याईश्वरपुरुषाइतिनसाक्षादपरोक्षत्वादिलक्षणस्यातिव्याप्तिरितिप्रयोजनांतरमप्युक्तंभवति । ननुअतोन्यदार्तमित्यस्यतदन्येब्रह्मरुद्रादयोजीवाःदुःखिनइतिव्याख्यानेनलक्ष्म्याअनार्तत्वंसिद्धं । तस्याः दुःखस्पृष्टत्वलक्षणजीवत्वाभावात् । तथाचश्रुतौअतइति । विष्णुरिवसापिप्रतियोगित्वेनकुतोनोच्यतइत्यतआह ॥ **प्रकृतिरिति** ॥ प्रकृतिर्लक्ष्मीः । अतिसामीप्यात् तत्पत्नीत्वेनेत्यर्थः । तत्रदृष्टांतमाह ॥ **नस्त्रियइति** ॥ अष्टौवसवएकादशरुद्राद्वादशआदित्याइंद्रःप्रजापतिरितित्रयस्त्रिंशत्सुदेवेषुनिरूप्यमाणेषुतत्स्त्रियोनभेदिताःपृथक्नोक्ताइत्यर्थः । यद्यपिवसुषुअग्निवाय्वादित्यशब्दवाच्यानांवींद्रवायुमहेश्वराणांस्त्रियःपृथिव्यंतरिक्षद्युशब्दवाच्यत्वेनपृथगुक्ताः । तथैवोत्तरत्रव्याख्यानात् । तथापिनक्षत्रादिशब्दवाच्येंद्रादित्रिंशद्देवतास्त्रीणांपृथगनुक्तत्वात्तदभिप्रायेणेयमुक्तिरितिज्ञेयं ॥ ततश्चायंखंडार्थः ॥ अथभुज्यूपरमानंतरमेनंयाज्ञवल्क्यं चक्रस्यापत्यंचाक्रायणः उपस्तनामा पप्रच्छ । याज्ञवल्क्येतिसंबोध्योवाच । यत्साक्षादपरोक्षात्यत्ब्रह्म । साक्षादन्यप्रसादंविनाऽपरोक्षंयथाभवतितथाअस्तिअनुभवति स्वरूपमन्यच्चेतिशेषः । इतिसाक्षादपरोक्षात् । ब्रह्म सर्वगुणपरिपू

भाष्यं ॥ तदन्येब्रह्मरुद्रादयःसर्वेजीवाएवेतिसिद्धं । प्रकृतिस्त्वतिसामीप्यादनार्तापिपृथङ्नतु । उच्यतेनस्त्रियोयद्वत्त्रयस्त्रिंशत्सुभेदिताइतिच ॥ इत्युषस्तब्राह्मणं ॥ ४ ॥

उप० ॥ अथहैनमुषस्तश्चाक्रायणःपप्रच्छयाज्ञवल्क्येतिहोवाचयत्साक्षादपरोक्षाद्ब्रह्म

र्णं । यश्चात्मासर्वेषांनियंता सर्वांतरःसर्वसामर्थ्यंस्वांतरेवास्तीतिनियमनाद्युपयुक्तसर्वसामर्थ्यवान् । तंविष्णुंमेव्याचक्ष्वविशेषेण वदेति । उत्तरमाह ॥ एषइति ॥ तेतवात्मानियामकःसर्वांतरः । उक्तविशेषणोपलक्षणमेतत् । एषःजीवेश्वराभेदनिवृत्त्यर्थंत आत्मेत्युक्तं । एषइतिकइतिपृच्छति ॥ कतमइति ॥ सर्वांतरएषइत्युक्तोयःसकतमःकइत्यर्थः । उत्तरमाह ॥ यइति ॥ यः प्राणेनप्राणनाम्नामुख्यप्राणरूपेणनिमित्तेन प्राणितिजगत्प्राणनंकरोति सतेआत्मासर्वांतरइत्यर्थः । एवमुत्तरत्रापि । यस्समाने नसमानितीत्यपिग्राह्यं । उपसंहरति ॥ एषइति ॥ तेआत्मासर्वांतरःएषप्राणादिपंचरूपमुख्यवायुप्रेरकत्वलक्षणइत्यर्थः ॥ १ ॥ देवतांतरस्यापीदंलक्षणंसमानमितिपृच्छति ॥ सहोवाचेति ॥ कागौःकोश्वइतिपृष्टेसौचतुष्पात्गौरसौचतुष्पादश्वइतियथा कश्चिद्विब्रूयात्वदेत् । एवमेवत्वयाव्यपदिष्टमुक्तमेतत्मुख्यप्राणद्वारासर्वजगच्चेष्टकत्वादिकंलक्षणंभवति । यथाचतुष्पात्त्वादि लक्षणंगोरश्वस्यापिसमत्वादतिव्याप्तंतथेदमपिहरहिरण्यगर्भादावतिव्याप्तंतैस्तैर्वादिभिस्तथांगीक्रियमाणत्वादित्यर्थः । तस्माद्य देवान्यानिष्टलक्षणयुक्तंतल्लक्षणोपेतं । तादृशंलक्षणमितियावत् । व्याचक्ष्वेतिपृष्टेपूर्ववदुत्तरमाह ॥ एषइति ॥ पूर्ववत्पृच्छति

उप० ॥ यआत्मासर्वांतरस्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरोयःप्राणेनप्राणितिसतआत्मासर्वांतरोयोपानेनापानितिसतआत्मासर्वांतरोयोव्यानेनव्यानितिसतआत्मासर्वांतरोयउदानेनोदानितिसतआत्मासर्वांतरो(यःसमानेनसमानितिसतआत्मासर्वांतर)एषतआत्मासर्वांतरः ॥ १ ॥ सहोवाचोषस्तश्चाक्रायणोयथाविब्रूयादसौगौरसावश्वइत्येवमेवैतद्व्यपदिष्टंभवति । यदेवसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरः

कतमइति ॥ उत्तरमाह ॥ नदृष्टेरिति ॥ त्वंद्रष्टारंसर्वमापरोक्ष्येणपश्यंतंदृष्टेश्चक्षुषोनपश्येः । परमात्माचक्षुरगोचरइत्यर्थः । एवमुत्तरत्रापि । श्रुतेःश्रोत्रात् मतेर्मनसः विज्ञातेर्बुद्धेः । नचचक्षुःश्रोत्रमनोबुद्ध्याद्यगोचरत्वमपिलक्षणंपूर्ववदतिव्याप्तमितिवाच्यं । परोमात्रयेत्यादिश्रुतिसिद्धत्वेनातिव्याप्त्यभावात् अतएवविष्णोरकारवाच्यत्वंविशेषलक्षणंवदन्पूर्वोक्तलक्षणातिव्याप्त्युद्धारोपयोगित्वेनब्रह्मरुद्रादीनांदुःखित्वमाह ॥ अतइति ॥ अतःअकारवाच्याद्विष्णोरन्यत्ब्रह्मरुद्रादिकमार्तंदुःखीत्यर्थः।ततः स्वपृष्टप्रश्नोत्तरकथनानंतरमुषस्तश्चाक्रायणउपरराम ॥ २ ॥ उषस्तब्राह्मणं ॥ ४ ॥ ननुयदुषस्तेनपृष्टंतदेवकहोळोपिपृच्छति। तदयुक्तं जनसंसद्येवयाज्ञवल्क्येनप्रेरकत्वाज्ञेयत्वादिभगवल्लक्षणस्योक्तत्वेनउत्तरस्यजातत्वादित्यतआह ॥ यदेवेति ॥ एतेन किंचिद्विशेषकथनायपूर्वोक्तप्रश्नप्रतिवचनयोरनुवादोयमितिव्याख्यानमपहस्तितं । तस्यगत्यंतराभावएवाश्रयणीयत्वात् । ननु कथमनेनवाक्येनायमर्थोज्ञायते । अवधारणद्वयबलादितिचेन्न । तस्ययएवात्माउषस्तेनपृष्टस्तमेवाहंपृच्छामीतिविद्यैक्यद्योतनार्थत्वादितिचेन्न । विद्यैक्येब्राह्मणभेदानुपपत्तेरितिभावेनतद्व्याचष्टे ॥ यदेवब्रह्मेति ॥ यदेवेत्येवकारव्यावर्त्यकथनंतदन्यइति। ननुयदेवब्रह्मनत्वन्यदितिज्ञापनाययदेवसाक्षादपरोक्षाद्ब्रह्मतंमेव्याचक्ष्वेत्येतावतापूर्तेर्द्वितीयएवशब्दोव्यर्थइत्यतआह ॥

उप० ॥ कतमोयाज्ञवल्क्यसर्वांतरोनदृष्टेर्द्रष्टारंपश्येर्नश्रुतेःश्रोतारꣳशृणुयानमतेर्मतारंमन्वीथानविज्ञातेर्विज्ञातारंविजानीयाएषतआत्मासर्वांतरोऽतोन्यदार्तंततोहोषस्तश्चाक्रायणउपरराम ॥ २ ॥ इत्युषस्तब्राह्मणं ॥ ४ ॥

भाष्यं ॥ यदेवसाक्षादितिपुनःप्रश्नोमुक्तानामपिभगवतोभेदोस्तीतिज्ञापयितुं । यदेवब्रह्मतदन्येब्रह्मादयोमुक्ताअपियन्नैवभवंतिकदाचन ।

मुक्तजीववैलक्षण्येनेति ॥ (द्वितीयएवशब्दार्थइति । आत्मस्वरूपापेक्षयाद्वितीयोमुक्तवैलक्षण्यरूपएवशब्दार्थइत्यर्थः । यद्वावु
द्ध्याविवेकेनयोद्वितीयएवशब्दस्तस्यार्थइत्यर्थः) । तंमेव्याचक्ष्वेत्येवोक्तेवस्तुगत्यायदेवब्रह्मनत्वन्ये तंतत्स्वरूपंव्याचक्ष्वेतिपरमा
त्मस्वरूपस्यैवप्रश्नविषयत्वंस्यान्नमुक्तवैलक्षण्यस्य । अन्यथासाक्षादपरोक्षत्वादीनामपिप्रश्नविषयत्वापत्तेः । तथाचपरिहारेमुक्त
वैलक्षण्योक्तिरसंगतास्यात् । अतएवकारःप्रयुक्तः । तथाचतमेवनस्वरूपमात्रंकिंतुइतरव्यावृत्तंमुक्तवैलक्षण्यसहितमितिप्रश्नवा
क्यार्थइतिभावः । ननुयद्येवंप्रश्नवाक्यार्थस्तर्हिकथंयोशनायापिपासेइत्यादिपरिहारोक्तिः । अशनायाद्यतीतत्वस्यलक्ष्मीमुक्तसा
धारण्यादितिशंकांपरिहरन् मुक्तपरमात्मवैलक्षण्यप्रतिपादकतयायोशनायेत्यादिवाक्यंव्याचष्टे ॥ **सत्विति** ॥ तथाहिस्मृतिः ।
नित्यतीर्णाशनायादिरेकएवहरिःस्वतः । अशनायादिकानन्येतत्प्रसादात्तरंतिहीति । अत्रमुक्तव्यावृत्त्यर्थमतीतानागतेत्याद्युक्तं ।
रमाव्यावृत्त्यर्थंस्वतएवेति । यद्यपिस्वतएवेत्यनेनोभयव्यावृत्तिसिद्धिः । तथाप्यशनायाद्यतीतत्वस्यकादाचित्कत्वशंकापरिहारा
यातीतानागतेत्याद्युक्तं । सापेक्षनिरपेक्षयोश्चनिरपेक्षंस्वीकर्तव्यमितिभावः । यदिमुक्तानामपीदृशमशनायाद्यतीतत्वंस्यात्तर्हिकं
थसिदंतद्व्यावर्तकमित्यतएतंवैतमात्मानंविदित्वेत्यारभ्यव्युत्थायेत्यंतस्यतात्पर्यमाह ॥ **ब्रह्मादयस्त्विति** ॥ अत्येष्यंति अशना
यादिकमितिशेषः । अशनायापिपासादेरेषणात्मकत्वादेषणाभ्योव्युत्थायेत्यस्यतात्पर्यमिदं । **स्वतएवेत्यस्यप्रतियोगीतत्प्रसादा**

---

भाष्यं ॥ तमेवमेव्याचक्ष्वमुक्तजीववैलक्षण्येनसहेतिद्वितीयएवशब्दार्थः । सतुभगवान्स्वतएवातीताशनायादिरतीतानागतवर्तमानकालेषु
ब्रह्मादयस्तुतंविदित्वातत्प्रसादादेवपश्चादत्येष्यंति ।



Scanned by CamScanner

देवेति । अतीतानागतेत्यस्यप्रतियोगीपश्चादिति प्रसादानंतरमित्यर्थः । ननुतर्हिंतमित्येतावतापूर्तेरेतमितिव्यर्थमित्यतआह ॥ **एतमिति** ॥ एतंवैतमित्यत्रएतमित्यस्येत्यर्थइतिसंबंधः । एतेनतमित्युषस्तब्राह्मणोक्तलक्षणंत्वंपदार्थरूपंपरामृशति । एतमिति कहोळब्राह्मणोक्तमशनायादिरहितंतत्पदार्थरूपंपरामृशति । सामानाधिकरण्यात्तुसिद्धमेकत्वंवैशब्दोवधारयतीतिपरकीयव्याख्यानमपास्तं । उषस्तब्राह्मणेसाक्षादपरोक्षत्वादिब्रह्मलक्षणानामेवोक्तत्वेनत्वंपदार्थनिरूपणाभावादिति । अथभिक्षाचर्यंचरंतीत्यत्रभगवतोमुक्तवैलक्षण्यंनप्रतीयतइतितदनुपयुक्तमित्याशंकावारणायतावत्तद्वाक्यमनूद्यव्याचष्टे ॥ **भिक्षाचर्यमिति** ॥ अपिशब्देनकिंसंसारिणइतिद्योतयति । विप्रुडानंदमेव नतुब्रह्मानंदवत्निरवधिकमित्यर्थः । नन्वत्रमुक्तवाचकपदाभावात्कथं मुक्ताअपीत्युक्तमित्यतआह ॥ **ब्राह्मणनादिति** ॥ ब्रह्मप्रतिगमनादित्यर्थः । अणपणगतावितिधातोः आत्मानंविदित्वाब्राह्मणइतिब्राह्मणशब्देनेत्यर्थः । ब्राह्मणाःब्रह्मनिष्ठाःब्राह्मण्यजातिमंतोवा एषणाभ्योव्युत्थायसंन्यासंकृत्वाथानंतरंशेषकालेदेहस्थित्यर्थंभिक्षाचर्यंचरंतीतिपरेषांव्याख्यानंदूषयति ॥ **नहीति** ॥ संन्यासःखलुज्ञानार्थंविधेयः । तच्चज्ञानंजातमेव एतंवैतमात्मानंविदित्वेत्युक्तत्वात् तथाचतद्विधानंव्यर्थं । नहिनिष्पन्नफलंप्रतिसाधनंविधेयमितिभावः । ननुआत्मानंविदित्वेतिपरोक्षज्ञानमेवोच्यतेतदनंतरंचसंन्यासस्यकर्तव्यतास्यादेवेतिचेन्न । प्रथमब्राह्मणोमुक्तइतिप्रमाणेप्रथमब्राह्मणपदस्यमुक्तपरत्वेनव्याख्यात 363

---

भाष्यं ॥ एतंवैतमित्येतादृशैर्गुणैःसाक्षादपरोक्षत्वजीवभेदादिभिर्युक्तमित्यर्थः । भिक्षाचर्यंचरंतिमुक्ताअपिब्रह्मादयस्तस्मादेवपरमेश्वराद्विप्रुडानंदमेवभिक्षंतोवर्तंते । ब्राह्मणनान्मुक्ताएवब्राह्मणशब्देनोच्यंते । नहिज्ञानादनंतरंसंन्यासस्यकर्तव्यता ।

तयातत्साधनीभूतापरोक्षज्ञानस्यैवविदित्वेत्यनेनग्राह्यत्वात् । ननुव्युत्थायभिक्षाचर्यंचरंतीतिवर्तमानापदेशादर्थवादोयं नविधायकः प्रत्ययोस्ति । अतःसंन्यासस्यकर्तव्यतेतिकथमुक्तमितिचेन्न । परेणैवमेवाशंक्य यज्ञोपवीतंवेदांश्चसर्वंतद्वर्जयेद्यतिरित्यादिश्रुत्यनुसारेणास्यवाक्यस्यसर्वकर्मपरित्यागलक्षणसंन्यासविधायकत्वांगीकारेणतदनुसारेणतथोक्तत्वात् । ननुअपरोक्षज्ञानिनामपिसनकादीनांविहिततयासंन्यासानुष्ठानस्यप्रमितत्वात् कथंज्ञानानंतरंसंन्यासस्याकर्तव्यतेत्यतआह ॥ येषामिति ॥ तद्योग्यताज्ञानानंतरमपिसंन्यासयोग्यता । ज्ञानार्थत्वेनविशेषज्ञानार्थत्वेन । नचात्रापिज्ञानानंतरमपिविशेषज्ञानार्थत्वेनैवसंन्यासविधानमितिवाच्यं । तादृशाधिकारिविशेषज्ञापकपदस्यश्रुतावभावादितिभावः । नन्वथभिक्षाचर्यंचरंतीत्यनेनभगवतःकिंमुक्तवैलक्षण्यमुक्तमित्यतआह ॥ मुक्ताअपीति ॥ ननुमुक्ताअपियदिभिक्षंतितर्हिदुःखिनःस्युः । लोकेभिक्षुकाणांदुःखदर्शनादित्यतआह ॥ तथापीति ॥ भिक्षुकत्वेपीत्यर्थः । एषणायाएवदुःखसाधनत्वादित्यर्थः । याह्येवपुत्रैषणेतिश्रुतौपुत्रैषणायावित्तैषणायांवित्तैषणायाःलोकैषणायामंतर्भावउच्यतइतिप्रतीयते तदयुक्तं । एवमंतर्भावोक्तौनिमित्ताभावात् । नचवित्तस्यलोकार्थत्वात्वित्तेषणायालोकेषणायामंतर्भावोयुक्तइतिवाच्यं । तथासतिपुत्रस्यापिलोकार्थत्वेनपुत्रैषणायाअपिलोकैषणायामंतर्भावापत्तेरित्यतःतद्वाक्यंयथावद्व्याचष्टे ॥ पुत्रस्येति ॥ पुत्रवित्तैषणयोरितिशेषः । अनेनयापुत्रैषणायाचवित्तैषणासैवहिलोकैषणेति

भाष्यं ॥ येषांतद्योग्यतातेषामपिज्ञानार्थत्वेनैवसंन्यासः । मुक्ताअपियंभिक्षंतेसोतिपूर्णमहानंदोभगवान्स्वतएव । तदन्येब्रह्मादयोमुक्ताअपिततएवविप्रुडानंदभिक्षुकाइतिविशेषः । तथापितेषामेषणातीतत्वान्नदुःखं । पुत्रस्यवित्तस्यचलोकार्थत्वाल्लोकैषणायामंतर्भावः ।

वाक्यंयोजितंभवति । ननुतर्हिवित्तस्यलोकार्थत्ववत्पुत्रार्थत्वाच्चवित्तैषणायाएवपुत्रैषणायामंतर्भावोवक्तव्योनतुपुत्रैषणयावित्तै षणायामित्यतोयाह्येवपुत्रैषणासावित्तैषणेतिवाक्यंव्याचष्टे ॥ वित्तस्यापीति ॥ वित्तैषणायाइतिशेषः । अंतर्भावइतिवर्तते । अनेनयावित्तैषणासैवहिपुत्रैषणेतियत्तच्छब्दव्यत्यासेनवाक्यंयोजितंभवति । ननूभेह्येतइतिवाक्यंकिमर्थंप्रवृत्तमित्यतआह ॥ लोकैषणायाअपीति ॥ स्वर्गादिलोकस्ययागादिनासर्वैरभ्यर्थ्यमानतयालोकैषणायाःसत्वात्कथंलोकैषणायाश्चव्युत्थायेत्युक्त मित्याशंकापरिहारायलोकैषणायाअपिदुःखरूपत्वात् सालोकैषणापितेषांमुक्तानांनास्त्येवेतिदर्शयितुमिदंप्रवृत्तमित्यर्थः । नन्व नेनवाक्येनलोकैषणायाअपिदुःखरूपत्वंनप्रतीयतइत्यतःतद्व्याचष्टे ॥ उभेअपीति ॥ एषणात्वादित्यनेनहियस्मात्एषणेइति व्याख्यातंभवति । दुःखरूपइतिशेषोक्तिः । नन्वेषणानांत्रित्वादंतर्भावेप्येकत्वादुभेइतिकथमुक्तमित्याशंकापरिहारायोक्तंदृष्टा दृष्टविषयेति । कथमनेनतिसृणांसंग्रहःकृतइत्यतआह ॥ पुत्रेति ॥ पुत्रवित्तैषणेउभेअपिदृष्टविषयत्वादेकैव । अदृष्टविषयिणी लोकैषणाचापरेतिउभेएवेत्युक्तमित्यर्थः । उभेइत्येवोक्तमितिवासंबंधः । तस्माद्ब्राह्मणइत्युक्तब्राह्मणशब्दस्यमुक्तपरत्वेपरोक्षज्ञा निपरत्वेवापांडित्यंनिर्विद्येत्याद्ययुक्तेस्तदर्थमाह ॥ द्वितीयइति ॥ अणितुंद्रष्टुं अप्रतीतेःपांडित्यबाल्यशब्दार्थावाह॥ पांडित्य

---

भाष्यं ॥ वित्तस्यापिप्रायःपुत्रार्थत्वात्पुत्रैषणायांलोकैषणायाअपिदुःखरूपत्वात्सापितेषांनास्त्येवेतिदर्शयितुमुभेह्येतेएषणेएवभवतइत्याह । उ भेअपिदृष्टादृष्टविषयेएषणात्वाद्दुःखरूपेएवेत्यर्थः । पुत्रवित्तैषणेउभेअपिदृष्टविषयत्वादेकैवेत्युभेएवेत्युक्तं । द्वितीयोब्राह्मणोब्रह्माणितुंयोग्यः । पांडि त्यमागमजंज्ञानं ।

मिति ॥ आगमजज्ञानमित्यर्थः । सहितं ज्ञानमितिवर्तते । युक्तिःसहितंसहायःकारणंयस्यतद्युक्तिसहितंयुक्तिजन्यमित्यर्थः । यद्वक्ष्यति वाल्यंयुक्तिसहायतेति । यद्वायुक्तिसहितमागमज्ञानमितिसंवंधः । वाल्यशब्देनकथमयमर्थोलभ्यतइत्यतआह ॥ वलेति ॥ वलयुक्तंवाल्यंवलंचयुक्तिरतोयुक्तिसहितंज्ञानंवाल्यशब्देनोच्यतइत्यर्थः । मननस्यवाल्येनेत्यनेनैवोक्तत्वात्मौनशब्दार्थमाह ॥ **मौनमिति** ॥ अमौनंमौनाभावमितिप्रतीतिनिरासायव्याचष्टे ॥ **अमौनमिति** ॥ निर्विद्येत्यस्यवैराग्यार्थकत्वे जुगुप्साविरामप्रमादार्थानामुपसंख्यानमितिकात्यायनवचनात् पांडित्यस्यविरामार्थकधातुयोगेनापादानत्वप्राप्तौपांडित्यादिति पंचमीस्यादितिभावेनतदनूद्यव्याचष्टे ॥ **निर्विद्येति** ॥ प्राप्येतितात्पर्यमुक्तं । तत्कथमित्यतोधात्वर्थमाह ॥ **लब्ध्वेति** ॥ तत्रधातुंपठति ॥ **विद्लृलाभइति** ॥ अथब्राह्मणइतिब्राह्मणशब्दस्यद्वितीयब्राह्मणशब्दवत् ब्रह्माणनयोग्यार्थकत्वप्रतीतिनिरासायार्थमाह ॥ **अथेति** ॥ सब्राह्मणइतिवाक्यंप्रकृतोपयुक्ततयाव्याचष्टे ॥ **समुक्तइति** ॥ भोगेनेतिशेषः । एवकारव्यावर्त्यमाह ॥ **नेति** ॥ तदन्येब्रह्मादयोमुक्तास्ततएवविप्रुडानंदभागिनइत्युक्तार्थेएतदुपनिषद्गतवाक्यमेवसंवादयति ॥ **एतस्यैवेति** ॥ मात्रांतत्प्रतिविंवांशं । नन्वस्यवाक्यस्यान्यानिभूतानिसुप्तानि । एतस्यानंदस्यमात्रामुपजीवंतीत्यमुक्तपरत्वात् मुक्ताःपरमात्म

---

भाष्यं ॥ वाल्यंयुक्तिसहितं । बलयुक्तत्वात् । मौनमुपासनाजं । अमौनमपरोक्षज्ञानं । निर्विद्यनितरांप्राप्यलब्ध्वा । विद्लृलाभइतिधातोः । अथब्राह्मणोमुक्तोभवतीत्यर्थः । समुक्तोयेनकेनापिवर्तयन्नीदृशएवभिक्षुकएव । नकदाचित्स्वतंत्रोभवति । एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिचवक्ष्यति ।

विप्रुडानंदभागिनइत्यर्थेकथंप्रमाणतयोदाहरणमित्यतःप्रतिजानीते ॥ मुक्तेति ॥ चशब्देनामुक्तसंग्रहः । कुतइत्यतआह ॥ अत्रेति ॥ अत्रपिताभवतीत्यादितत्प्रस्तावेतस्यैतस्यैवानंदस्येतिप्रकरणस्यप्रस्तावेप्रारंभेविषयेतदधिकृत्येतियावत् । भगवद्वचनमस्तियतइत्यर्थः । इदमुक्तंभवति । एतस्यैवानंदस्येतिवाक्यंमुक्तविषयं । अत्रपितेत्यादिमुक्तविषयकोपक्रमेणास्यप्रकरणस्यमुक्तविषयत्वावगमात् । नचोपक्रमस्यापिमुक्तविषयकत्वंकुतःसिद्धमितिवाच्यं । भगवतासूत्रकारेणतथाव्याख्यातत्वादिति । सूत्रार्थमाचार्यएववक्ष्यति । नकेवलंपूर्ववाक्यबलादेतन्मुक्तविषयंकिंत्वव्यवहितोत्तरवाक्यबलाच्चेत्याह ॥ तत्रैवेति ॥ ननुतत्राप्यमुक्तानामेवानंदतारतम्यमुच्यतेनमुक्तानामित्यतआह ॥ श्रोत्रियत्वेति ॥ ननुभवतुश्रोत्रियत्वादिकंमुक्तेष्वेवमुख्यं यश्चश्रोत्रियोवृजिनोकामहतइतिश्रुतौत्वमुख्यमेवश्रोत्रियत्वादिकममुक्तानामुच्यतइतिकिंनस्यादित्यतआह ॥ यश्चेति ॥ हियस्माद्यश्चश्रोत्रियइत्यभ्यासस्तस्मान्नामुख्यंश्रोत्रियत्वादिकंश्रुतावुच्यते अभ्यासेनतदनुपचरितत्वज्ञापनादित्यर्थः । भवतुश्रुतावुच्यमानमवृजिनत्वादिकंमुख्यमेव । तच्चामुक्तानामपिकिंनस्यादित्यतआह ॥ नहीति ॥ अमुक्ताःश्रोत्रियाश्चनेत्याह ॥ नचेति ॥ उपपादनसापेक्षत्वात्पृथगुक्तिः । अमुक्तानामपिश्रुतिफलप्राप्तिसद्भावात्सम्यगित्युक्तं । ननुश्रोत्रियंश्छंदोधीयतइतिस्मृतिसिद्धं

---

भाष्यं ॥ मुक्तविषयंचैतत् । अत्रपिताऽपिताभवतीत्यादितत्प्रस्तावेस्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीतिभगवद्वचनं । तत्रैवमुक्तानामानंदतारतम्यंचोक्तं । सयोमनुष्याणांराद्धःसमृद्धोभवतीत्यादिना । श्रोत्रियत्वावृजिनत्वाकामहतत्वानांमुक्तेष्वेवमुख्यत्वात् । यश्चश्रोत्रियइतिह्यभ्यासः। नह्यमुक्ताअवृजिनाअकामहतावा । नचश्रुतिफलंसम्यक्प्राप्ताः ।

श्रोत्रियशब्दप्रवृत्तिनिमित्तममुक्तेष्वप्यस्ति। अतःकिमेतदुच्यतइत्यतआह॥श्रुतिफलप्राप्तिरिति॥हिशब्देनप्राप्तश्रुतिफलत्वाच्च श्रोत्रियाःप्राप्तमोक्षिणइत्यादिप्रमाणप्रसिद्धिंदर्शयति । अमुक्तानांश्रोत्रियत्वावृजिनत्वाकामहतत्वानिकुतोनसंभवंतीत्यतस्तत्रहेतुंवक्तुंतत्साधकानुमानांगव्याप्तौप्रमाणमाह ॥ सर्वेइति ॥ इमेप्रसिद्धाः सर्वेब्रह्मादयस्तवमाययेच्छयादेव्यावा तनुभृतःशरीरधारिणः अतएवविमोहितधियः कथं बहिरर्थभावाः बहिरर्थापेक्षयैवतेषांमोहः । परमसुखसाधनादन्योर्थोबहिरर्थइत्यर्थः । सर्वेषांब्रह्मपदवीयोग्यानांपूर्वमेवतु । अभावस्त्वापरोक्षस्यमोहोज्ञानस्यभण्यतइत्यादिनान्यत्रब्रह्मणोपिमोहोपपादनंकृतमनुसंधेयं । एवंव्याप्तिसाधकंप्रमाणमभिधायतांव्याप्तिमाह ॥ शरीरेति ॥ आदिपदेनाज्ञानंग्राह्यं । इदमुक्तंभवति । अमुक्तानश्रोत्रियत्वादिमंतः मोहादियुतत्वात् । मोहादियुतानांचश्रोत्रियत्वाद्यभावात् । नचासिद्धिः । अमुक्तामोहादियुताःशरीरसंबंधित्वात् येशरीरसंबंधिनस्तेमोहादियुताःइतिव्याप्तेरिति । शरीरसंबंधित्वस्यश्रोत्रियत्वाद्यभावेऽप्रयोजकत्वात्परंपराश्रयणं । मोहादीनांचदुःखादिकंप्रतिकारणत्वेननाप्रयोजकत्वमितिध्येयं । अदुःखित्वमित्युक्त्यावृजिनशब्दोदुःखपरत्वेनव्याख्यातः तत्राभिधानमाह ॥ वृजिनमिति ॥ अत्रवदंति । नेदंमुक्ततारतम्यप्रतिपादकंकिंतुयश्चश्रोत्रियोऽवृजिनोऽकामहतइतितेषुतेषुपदेष्वकामस्यतत्तत्समानानंदत्वमत्रोच्यतइति । तन्न । एवंहिवदतापूर्वपूर्वपदाकामिभ्यउत्तरोत्तरपदाकामिनांशतगुणसुखवत्त्वंव

भाष्यं॥ श्रुतिफलप्राप्तिर्हिश्रोत्रियत्वं । सर्वेविमोहितधियस्तवमाययेमेब्रह्मादयस्तनुभृतोबहिरर्थभावाइतिभागवते।शरीरसंबंधिनांमोहादियुतत्वं। मोहादियुतानांनश्रोत्रियत्वमदुःखत्वमकामहतत्वंवा । वृजिनंव्रजनंदुखंक्लेशोवाधेतिचोच्यतइत्यभिधानं ।

क्तव्यं नचतदस्ति । तत्रप्रमाणाभावादित्याह ॥ **नचेति** ॥ सयोमनुष्याणांराद्धइत्यस्यमुक्तविषयत्वमुपपाद्योपसंहरति ॥ **अत इति** ॥ श्रोत्रियत्वादेर्मुक्तेष्वेवमुख्यत्वादन्यथाव्याख्यानस्यचायुक्तत्वादित्यर्थः । एवंसयइतिवाक्यस्यमुक्तविषयत्वेनतद्बलादेतस्यैवेतिवाक्यंमुक्तविषयंभवत्येवेत्युपपादितं तद्बोपसंहरति ॥ **अतइति** ॥ ननुभवतुएतस्यैवेतिवाक्यंमुक्तपरं तथापितत्रान्येषांमुक्तानांपरमात्मानंदैकदेशप्राप्तिरेवोच्यते । ततएवनमुक्ताःपरमात्मभिन्नाः तदानंदभोक्तृत्वात् । तथाचकथमुक्तार्थेइदंप्रमाणमितिचेत् न । एवंश्रुत्यर्थकथनेप्रमाणांतरविरोधापत्तेरितिभावेनमुक्तानांतदानंदानवाप्तौतद्भेदव्याप्यतदनुग्राह्यत्वेचप्रमाणमाह ॥ **परोमात्रयेति** ॥ आद्यंप्रमाणद्वयंतदानंदानवाप्तौ । उत्तरद्वयंतुभगवदनुग्राह्यत्वेइतिविवेकः । अश्नुवंतीत्यत्रकर्तृविशेषानुक्तेर्मुक्ताअमुक्ताश्चेतिशेषः । ब्रह्मेशानादिशब्देनमुक्ताअमुक्ताश्चगृह्यंते । संकोचेकारणाभावात् । हेहरेब्रह्मेशानादिभिःदेवैर्यत्कैवल्यंसर्वोत्तमत्वंप्राप्तुंनैवशक्यतेतत् यत्यत्स्वभावःयस्यनैसर्गिकं सभवान् । कुतः यतःकेवलोजडामिश्रइतियोजना । एवंस्वयंब्राह्मणंव्याख्यायतद्दार्ढ्यायव्याख्यानरूपंप्रमाणमुदाहरति ॥ **बंहित्यादिना** ॥ पूर्वब्राह्मणेतआत्मेतिबहुधाप्रयुक्तस्य । परमार्थतोपिजीवेश्वराभेदनिवृत्त्यर्थस्तआत्मेति। तत्रप्रधानतात्पर्यज्ञापनार्थंपुनःपुनरभ्यासइतितात्पर्यमुक्तं तत्रेदंप्रमाणं॥बंहिति॥

भाष्यं ॥ नचदेवादिपदाकामानामिंद्रादिपदाकामानांचकश्चिद्विशेषोदृश्यते । अतोमुक्तविषयमेवैतत् । परोमात्रयातन्वावृधानन्नतेमहित्वमन्वश्नुवंति । ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे । मुक्तानांपरमागतिः । कृष्णोमुक्तैरिज्यतेवीतमोहैरित्यादिवचनैश्चभगवदनुग्राह्यत्वंतदानंदानवाप्तिश्चमुक्तानांदृश्यते । बह्वभ्यासात्तआत्मेतिमुक्तौजीवेशयोर्भिदा ।

तआत्मेत्युक्त्यामुक्तौजीवेशयोर्भेदोदृश्यते । नचैतद्वाक्यप्रतिपाद्योभेदःसांसारिकःकिंनस्यादितिवाच्यं । तआत्मेत्यत्यादरातद्ब
ह्वभ्यासेनसिद्धेनप्रधानतत्परत्वेनभेदस्यमुक्तावपिसिद्धेरित्यर्थः । नकेवलंतआत्मेतिवाक्यप्रधानतात्पर्यविषयत्वाज्जीवेश्वरभेदः
पारमार्थिकः किंतुहेत्वंतराच्चेत्याह ॥ महातात्पर्ययोगाच्चेति ॥ सएव मुक्तौजीवेशयोर्भेदएव । कुत्रकस्यमहातात्पर्यमित्याह
॥ तात्पर्यमिति ॥ देवताधर्मादिस्वरूपेतात्पर्यावगमात्कथमेतदित्यतआह ॥ अन्यदिति ॥ तदर्थतः उच्यतइतिशेषः । न
नुविष्णोःसर्वोद्रेकेसर्वागमानांमहातात्पर्ययोगेनमुक्तौजीवेशभेदःकथंसिध्यतीत्यतआह ॥ सचेति ॥ सर्वोद्रेकः । जीवेशयोर्भे
देपारमार्थिकेसत्येव युज्यते हियस्मात्तस्मात्तत्सिद्धिरित्यर्थः । प्रतिबंदीमोचनायपुनःप्रस्तावयति ॥ बह्विति ॥ ततःमुक्तपरमा
त्मनोर्भिन्नत्वादेवेत्यर्थः । ननुयदितआत्मेतिसंबंधवचनेनभेदसिद्धिःतदास्वदेहमुद्दिश्यममात्माभूतभावनइतियत्रविष्णुवाक्यंत
त्रापिस्वस्यस्वदेहाद्भेदसिद्धिःस्यात् । संबंधवचनत्वाविशेषादित्यतआह ॥ ममात्मेतीति ॥ यत्रप्रकरणेविष्णोरपिभिन्नदेहर
हितस्यापि देहस्यापिलोकेभिन्नत्वेनप्रतीतस्यापि ज्ञानादिसमुच्चयार्थोवायमपिशब्दः । तत्प्रयोजनं ममात्मेतिसंबंधवचनप्रयो
जनं । तथाचयत्रममात्माभूतभावनइतिप्रयोगोस्ति तत्रस्वदेहस्यापिभूतभावनत्वादिस्वलक्षणयोगकथनेनस्वस्वरूपत्वज्ञापनंप्रयो

---

भाष्यं ॥ प्रधानतत्परत्वेनदृश्यतेत्यादरात्सदा । महातात्पर्ययोगाच्चसएवार्थोवगम्यते । तात्पर्यंपरमंविष्णोरत्युद्रेकेविशेषतः । सर्वश्रुतिस्मृ
तीनांचदृश्यतेन्यत्तदर्थतः । सचजीवेशयोर्भेदेसर्वोद्रेकोहियुज्यते । बह्वभ्यासस्तआत्मेतिश्रुतावादरतस्ततः । ममात्मेतिवचोयत्रविष्णोरपिचदृश्य
ते । देहस्यापिस्वरूपत्वज्ञापनंतत्प्रयोजनं ।

जनमस्तीत्यर्थः । किमेवंसंबंधवचनस्यप्रयोजनोपपादनेन व्यर्थमेवतत्किंनस्यादित्यतआह ॥ **नहीति** ॥ नन्वात्माभूतभावनइत्युक्त्यैवदेहस्वरूपत्वज्ञापनस्यसंभवात् किंममेतिपदेनेत्यतआह ॥ देहेति ॥ यद्यप्यात्माभूतभावनइतिदेहस्यभूतभावनत्वादिविष्णुलक्षणकथनेनविष्णोर्देहस्वरूपताज्ञापयितुंशक्या तथापिममेतिपदंविनासम्यग्ज्ञापयितुंनशक्येत्यर्थः । यद्यपिआनंदंब्रह्मणोविद्वानितिव्यवहारवद्विशेषबलेनैवममात्मेतिव्यवहारोपपादनंसंभवति तथापितदविहायैवप्रकारांतरमेतदित्यदोषः । अनेन निमित्तांतराभावेसंबंधवचनस्यभेदसाधकत्वमित्युक्तंभवति । नच तआत्मेत्येतदपिप्रयोजनांतरेणान्यथासिद्धमितिवाच्यं । अत्र तादृशप्रयोजनांतरादर्शनादितिभावेनोपसंहरति ॥ ततइति ॥ निमित्तांतरंविनासंबंधवचनस्यभेदसाधकत्वात्प्रकृतेचनिमित्तांतराभावादित्यर्थः । नचतेत्वयापृष्टआत्मेत्यर्थोवाच्यः । वृथाविभक्तिव्यत्यासस्यानाश्रयणीयत्वात् । नचतआत्मास्वरूपमित्यर्थोवक्तव्यः । तथात्वेषष्ठ्याऔपचारिकत्वप्रसंगात् । जीवात्मैक्यस्यनिरस्तत्वाच्च । किंचतथात्वेभिक्षाचर्यंचरंतीत्येतदप्ययुक्तमित्याह ॥ **भिक्षयेति** ॥ ततोभिन्नत्वादेव । तस्माद्विष्णोर्भिक्षयामुक्तानामानंदस्यविप्रुण्मात्रस्यभक्षणमवदच्छ्रुतिरितिसंबंधः । यद्येवंतर्हिमुक्तानामपूर्णत्वंस्यादित्यतआह ॥ मुक्तानामिति ॥ यद्यपिमुक्तानामानंदस्यब्रह्मानंदव्यपेक्षयाएकदेशत्वं तथापिअ 371

भाष्यं ॥ नह्यप्रयोजकंवेदपदंवर्णोंथवास्वरः । देहस्वरूपताविष्णोर्नममेतिपदंविना । सम्यक्ज्ञापयितुंशक्याततस्तत्पदमिष्यते । ततस्तआत्मेतिवचोभेदाभावेनयुज्यते । भिक्षयाभक्षणंतस्मादानंदस्यततोवदेत् । मुक्तानामेकदेशत्वंब्रह्मानंदव्यपेक्षया ।

मुक्तानामानंदव्यपेक्षयापूर्णत्वमितिसंबंधः । एकदेशत्वेभेदःस्यादित्यतआह ॥ विप्लुट्त्वमिति ॥ एकदेशत्वमित्यर्थः । यद्वा नमुक्तेशयोर्भेदोयुक्तः । एतस्यैवानंदस्येतिमुक्तानांपरमात्मानंदविप्लुट्त्वोक्तेः । तथाहिस्मृतिः । एषएवपरोविष्णुःपूर्णानंदःप्रकीर्तितः । यस्माद्ब्रह्मापिमुक्तःसन्विप्लुण्मात्रंसमश्नुतइति । तत्राह ॥ विप्लुट्त्वमिति ॥ प्रतिबिंबत्वंतदधीनत्वेसतितत्सदृशत्वमित्यर्थः । नकेवलममुक्तानंदापेक्षयामुक्तानंदस्यपूर्णत्वं किंतुमुक्तब्रह्माद्यानंदस्यस्वावरशेषाद्यानंदापेक्षयापीतिभावेनाह ॥ ब्रह्मादेरिति ॥ मुक्तावेवेत्येवकारअन्यत्रपूर्णत्वावधिभूतंनमृग्यमित्यर्थे सदातनमेवेतिवासंबंधः । यद्वामुक्तानांतारतम्याच्चनमुक्ता भगवदभिन्नाइत्याह ॥ ब्रह्मादेरिति ॥ मुक्तानांतारतम्येद्वेषेर्ष्यादिनादुःखंस्यादित्यतआह ॥ दृष्टेति ॥ यद्वामुक्ताभिक्षंतेचेत्दुःखिनःस्युरित्यतआह ॥ दृष्टेति ॥ अनेनपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणाश्चव्युत्थायेतिवाक्यंव्याख्यातंभवति । पुत्रवित्तैषणयोर्दृष्टैषणत्वात् । लोकैषणायाःअदृष्टैषणत्वात् । ननुमुक्तानांब्रह्मणोभेदेपरब्रह्माणिमुक्तिगाइतिपरब्रह्मत्वोक्तिःकथमित्यतआह ॥ परेति ॥ यत्रमुक्तानांपरब्रह्मत्ववचनंतत्रतेषांपरब्रह्मताबद्धजीवोच्चतामता । बद्धजीवोत्तमत्वंकथंपरब्रह्मत्वमित्यतउक्तं ॥ जीवेष्विति ॥ ब्रह्माणिजीवास्सर्वेपीति ब्रह्मशब्दोक्तेः । अभेदाभिप्रायत्वेतस्य प्रकृतिःपरमंब्रह्मपरमंमहदच्युतइति

भाष्यं ॥ विप्लुट्त्वंप्रतिबिंबत्वंश्रुतिपूक्तंहिसर्वशः । तथापिपूर्णानंदत्वममुक्तानांव्यपेक्षया । ब्रह्मादेस्तारतम्यंचमुक्तावेवसदातनं । दृष्टादृष्टेषणानाशान्निर्दुःखत्वंचसर्वदा । परब्रह्मत्ववचनंमुक्तानांयत्रदृश्यते । जीवेषुब्रह्मशब्दोक्तेःपरत्वंतुविमुक्तितः । तत्परब्रह्मतातेषांबद्धजीवोच्चतामता ।

वाक्यशेषविरोधइतिभावः । तस्माद्ब्राह्मणःपांडित्यंनिर्विद्येतिवाक्यंव्याचष्टे ॥ मतइति ॥ यतोब्रह्मापरोक्षज्ञानिनांमुक्तौविष्णोर्भिक्षयाऽऽनंदभक्षणंततइत्यर्थः । पांडित्यशब्दार्थमाह ॥ पांडित्यमिति ॥ आगमार्थज्ञत्वमित्यर्थः । बाल्यशब्दार्थमाह ॥ बाल्यमिति ॥ आगमजज्ञानस्येतिशेषः । मौनामौनशब्दार्थावाह ॥ मौनमिति ॥ पांडित्यंचनिर्विद्येत्यादिअथब्राह्मणइत्यंतवाक्यतात्पर्यमाह ॥ एतानीति ॥ आप्यस्थितस्येतिशेषः ॥ सब्राह्मणःकेनस्यादित्यादिव्याचष्टे ॥ मुक्तइति ॥ ननुमुक्तानामपिभिक्षुकत्वेकोविशेषोऽमुक्तेभ्यस्तेषामित्यतआह ॥ नहीति ॥ अन्यभिक्षित ममुक्तभिक्षितं । यदिमुक्तभिक्षितंविष्णुर्नियमतोदद्यात्तर्हिनिरवधिकानंदादिकंभिक्षंतेचेत्कथमित्यतआह ॥ अयोग्येति ॥ तेनेदृशएवेत्येवकाराभिप्रायमाह ॥ येनेति ॥ एतत्प्रकरणगतब्राह्मणशव्दानामेकार्थत्वप्रतीतिनिरासायार्थभेदमाह ॥ प्रथमइति ॥ नन्वथब्राह्मणइतिब्राह्मणशब्दस्यमुक्तपरत्वांगीकारेस्तुत्यधिकरणविरोधःस्यात् । तत्रतस्यब्राह्मणशब्दस्यजीवन्मुक्तपरत्वांगीकारादित्यतस्तत्संग्रहायापरोक्षविन्मुक्तयोरित्युक्तं । अतोन्यदार्तमित्यस्यतात्पर्यमाह ॥ अतइति ॥ श्रुत्यादेर्भगवदुत्कर्षेमहातात्पर्यमस्तीत्यत्रगीतावाक्यमपिप्रमाणयति ॥

भाष्यं ॥ ततोब्रह्माणनेयोग्यःपांडित्यंप्राप्नुयात्परं । पांडित्यमागमज्ञत्वंबाल्यंयुक्तिसहायता । मौनंतूपासनासिद्धिरमौनंभगवदृशिः । एतान्याप्यभवेन्मुक्तिर्मुक्तोवैभिक्षुकोभवेत् । नह्यन्यभिक्षितंविष्णुर्दद्यान्नियमतःक्वचित् । मुक्तस्यभिक्षितंसर्वंदद्यान्नियमतोहरिः । अयोग्यभिक्षणंतेषांनकदाचित्तुयुज्यते । येनकेनापिनैतेषांभिक्षावृत्तिर्विनश्यति । प्रथमोब्राह्मणोमुक्तोद्वितीयोयोग्यउच्यते । अपरोक्षविन्मुक्तयोस्तुतार्तीयेनोभयोर्ग्रहः । अंतोमुक्ताअमुक्ताश्चनस्वतंत्राःकदाचन । स्वतंत्रस्तुसएवैकोभगवान्पुरुषोत्तमइत्यादिब्रह्मतर्के ।

द्वाविमाविति ॥ व्याख्यातमेतत् ॥ ततश्चायंखंडार्थः ॥ अथोषस्तोपरमानंतरं । कहोळोनामतः कुषीकतस्यापत्यंकौषीतकेयः । एनंयाज्ञवल्क्यं । पप्रच्छ याज्ञवल्क्येतिसंबोध्योवाच । यदेवसाक्षादपरोक्षाद्ब्रह्मयएवात्मासर्वांतरःनत्वन्येब्रह्मादयोमुक्ताअपि तमेवमुक्तवैलक्षण्यविशिष्टंपरमात्मानं मुक्तपरमात्मवैलक्षण्यमितियावत् । मेव्याचक्ष्वेति । मुक्तपरमात्मनोर्वैलक्षण्यं वक्तुंपरमात्मस्वरूपंतावदाह ॥ एषइति ॥ तेआत्मानियामकःसर्वांतरएषः । एषइतिकइतिपृच्छति ॥ कतमइति ॥ उत्तरमाह ॥ यइति ॥ यःपरमात्माअशनायाऽशितुमिच्छाच पिपासापातुमिच्छाचेत्यशनायापिपासे शोकंदुःखं मोहंमिथ्याज्ञानं जरामत्येतिस्वतएवानाद्यनंतकालेष्वतिक्रम्यवर्तते । एवंपरमात्मस्वरूपंनिरूप्यमुक्तस्वरूपमाह ॥ एतमिति ॥ एतंसाक्षादपरोक्षत्वजीवभेदादिअशनायाद्यतीतत्वविशेषणविशिष्टंतंपरमात्मानं विदित्वावैविदित्वैवापरोक्षीकृत्यैव तत्प्रसादादेव पश्चात्पुत्रैषणाया वित्तैषणायालोकैषणायाश्चव्युत्थाय ब्रह्मप्रत्यणनात्गमनात् ब्राह्मणामुक्ताभवंति । अथमुक्त्यनंतरं भिक्षाचर्यंचरंतिपरमात्मन

भाष्यं ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच । क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते । उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः । इत्यादिनाचभेदेनमहोत्कर्षेपरमतात्पर्यंसर्वशास्त्राणामाह ॥ इतिकहोळब्राह्मणं ॥ ५ ॥

उप० ॥ अथहैनंकहोळःकौषीतकेयःपप्रच्छयाज्ञवल्क्येतिहोवाचयदेवसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तमेवमेव्याचक्ष्वेत्येषतआत्मासर्वांतरः । कतमोयाज्ञवल्क्यसर्वांतरोयोशनायापिपासेशोकंमोहंजरांमृत्युमत्येत्येतंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंति

एवविप्लुडानंदंभिक्षंतोवर्तते । अत्रमुक्तपरमात्मवैलक्षण्योपपादनंभाष्यएवस्पष्टं । किंतिस्रोप्येषणाःपरस्परंसमप्रधानभावोपेताः नेतिभावेनाह ॥ याह्येति ॥ यावित्तैषणासैवपुत्रैषणा । वित्तस्यप्रायःपुत्रार्थत्वात् । वित्तैषणापुत्रैषणायामंतर्भवति । यापुत्रैषणायाचवित्तैषणासालोकैषणा । पुत्रवित्तयोःस्वर्गादिलोकसाधनत्वात् । पुत्रैषणावित्तैषणयोर्लोकैषणायामंतर्भावइत्यर्थः । ननु स्वर्गादिलोकस्ययागादिनाप्रार्थ्यमानत्वात् तदेषणायाव्युत्थायेतिकथमुक्तमित्यतस्तस्याअपिदुःखरूपत्वात् ततोव्युत्थानंयुज्यत इतिदर्शयितुमाह ॥ उभेइति ॥ पुत्रवित्तैषणेदृष्टविषयत्वात् एका अदृष्टविषयिणीलोकैषणाचापरेति । उभेदृष्टादृष्टविषयेहि यस्मादेषणेतस्माद्दुःखरूपएवेत्यर्थः । एवंयस्मात्ब्रह्मापरोक्षज्ञानात्मोक्षस्तस्माद्ब्राह्मणोब्रह्माणनयोग्यः । पांडित्यमागमजंज्ञानं प्राप्नुयात् । एवंपांडित्यंनिर्विद्यलब्ध्वा बाल्येनयुक्तिबलसहितज्ञानेन तिष्ठासेत्स्थातुमिच्छेत् । युक्तिजंज्ञानमापादयेदितियावत् एवंबाल्यंपांडित्यंचनिर्विद्याथानंतरं मुनिर्ध्यानीभवति । एवंमौनमुपासनाजंज्ञानं । चशब्दाच्छ्रवणमननेच निर्विद्य अमौनंभगवदपरोक्षज्ञानंचप्राप्नोति । अथभगवदपरोक्षज्ञानानंतरंब्राह्मणोमुक्तोभवति । सब्राह्मणोमुक्तोयेनस्यात्केनस्यात्येनकेनापिभोगे नवर्तयंस्तेनवर्तनेनेदृशएव । यथासंसारावस्थायांभिक्षुकस्तथापरमात्मनोविप्लुडानंदभिक्षुकएवेत्यर्थः । उपसंहरति ॥ अतइति॥ अतस्तस्मादतोस्मात्परमात्मनोन्यन्मुक्तामुक्तजातमार्तंकदाचित्दुःखि तथाचपरमात्मैवस्वतंत्रोन्यन्मुक्तामुक्तजातमस्वतंत्रमित्य

उप० ॥ याह्येवपुत्रैषणासावित्तैषणासालोकैषणोभेह्येतेएषणेएवभवतस्तस्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेद्बाल्यंचपांडित्यंचनिर्विद्याथमुनिरमौनंचमौनंचनिर्विद्याथब्राह्मणःसब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशएवातोन्यदार्तं

र्थः । ततोहकहोळःकौषीतकेयउपरराम ॥ १ ॥ कहोळब्राह्मणं ॥ ५ ॥ ७ ॥ यस्सर्वांतरइत्युक्तंकिंतत्सर्वमित्याकांक्षायामनात्मभूतान्सर्वपदार्थांस्तावत्गार्गिब्राह्मणेनाहेतिपरकीयब्राह्मणप्रतिपाद्यवर्णनमसदितिभावेनैतद्ब्राह्मणप्रतिपाद्यमाह ॥ मुक्तानामिति ॥ नन्वंतरिक्षलोकेपुगार्गीत्यादौलोकशब्दप्रयोगादनात्मपदार्थप्रतिपादनमेवात्रक्रियतइतिज्ञायते नतुमुक्तानांतारतम्यमुच्यतइति तत्राह ॥ लोकाइति ॥ उच्यंतइतिशेषः । ननुमुक्तानामंतःकरणाभावात्कथमानंदानुभवाइत्यतउक्तं ॥ स्वरूपभूताइति ॥ कुतइत्यतआह ॥ अप्स्विति ॥ अप्सुवायाविति अप्वायुशब्दवाच्यचक्रवर्त्यादिस्वरूपस्यैवप्रस्तुतत्वेनांतरिक्षलोकेष्वित्यादावपिलोकशब्देनांतरिक्षादिशब्दवाच्यदेवतास्वरूपभूतएवानंदानुभवोग्राह्यः । अन्यथाप्रक्रमविरोधादितिभावः । नकेवलमुपक्रमवशाल्लोकशब्दस्यस्वरूपभूतानंदानुभवपरत्वं किंतूपसंहारवशाच्चेत्याह ॥ अनतीति ॥ कस्मिन्खलुब्रह्मलोकाओताश्चप्रोताश्चेतिप्रश्नस्तावद्देवतास्वरूपविषयकएवावगम्यते । अनतिप्रश्न्यांदेवतामतिपृच्छसीतिब्रह्मलोकपदोक्तार्थेदेवताशब्दप्रयोगात् । ततश्चब्रह्मपदेनैवदेवतास्वरूपस्योक्तेः ब्रह्मलोकपदस्यब्रह्मस्वरूपभूतानंदानुभवपरत्वेअवश्यंवक्तव्येइतरत्रापिलोकशब्दस्यतत्परत्वमेवांगीकार्यमित्यर्थः । लोकशब्दस्योक्तार्थत्वमनंगीकृत्यप्रसिद्धार्थत्वांगीकारेबाधकमाह ॥ नचेति ॥ यदिलोकश

उप० ॥ ततोहकहोळःकौषीतकेयउपरराम ॥ १ ॥ इतिकहोळब्राह्मणं ॥ ५ ॥

भाष्यं ॥ मुक्तानांतारतम्यंहिगार्गिब्राह्मणेनोच्यते । लोकाइतिमुक्तानामानंदानुभवाःस्वरूपभूताः । अप्सुवायावितिस्वरूपस्यैवप्रस्तुतत्वात् अनतिप्रश्न्यांवैदेवतामतिपृच्छसीतिदेवतास्वरूपप्रश्नस्यैवावगम्यमानत्वाच्च ।

ब्दस्यप्रसिद्धलोकार्थत्वंस्यात्तर्हिंआदित्यादिलोकानांचंद्रादिलोकाश्रितत्वोक्तिरयुक्तास्यात् । चंद्रादिलोकानामुपरितनत्वात् ।
आदित्यादिलोकानांचाधस्तनत्वात् । नचोपरितनलोकेष्वधस्तनलोकाआश्रिताइत्यर्थः । किंचैवंकस्मिन्खलुवायुरोतश्चप्रोतश्चेति
गंधर्वलोकेषुगार्गीतिवायोर्गंधर्वलोकाश्रितत्वमुच्यते तदप्ययुक्तंस्यादित्यतआह ॥ **नचवायुरिति** ॥ कुतोनेत्यतआह ॥ वा
य्वाश्रयत्वेति ॥ श्रुतेः श्रवणात् । नेनीयंते पुनःपनःभृशंवाधार्यंते । तत्रैवस्मृतिमपिपठति ॥ **सप्तेति** ॥ दूषणांतरमाह ॥
**नचेति** ॥ ब्रह्मस्वरूपभूतानंदानुभवव्यावृत्त्यर्थमात्रपदं । यदिलोकशब्दःप्रसिद्धलोकार्थःस्यात्तदाब्रह्मलोकस्योक्तमनतिप्रश्न
त्वमयुक्तंस्यात् । प्रसिद्धब्रह्मलोकस्याधारांतरसंभवेनतस्यानतिप्रश्नत्वाभावादित्यर्थः । नकेवलमुपरितनलोकेषुअधस्तनलोकाअ
नाश्रिताइत्येव किंतुवैपरीत्यमेवास्तीत्याह ॥ अधस्तनेष्विति ॥ नन्वत्रगंधर्वलोकाश्रितत्वेनोच्यमानोवायुर्नमुख्यः येनश्रुत्या
दिविरोधःस्यात् किंनामएकोनपंचाशन्मरुत्सुकश्चित् । तथाचनोदाहृतश्रुत्यादिविरोधइत्यतआह ॥ **नचेति** ॥ मरुतामितिनि
र्धारणेषष्ठी । योहियतोवरःसतमाश्रयते । नहिमरुतामेकोपिगंधर्वलोकादवरोस्ति । येनतमाश्रयेतेत्यर्थः । यद्वानन्त्रनतिप्रश्न्यां
देवतामतिपृच्छसीतिवाक्योक्तंनबाधकं । देवताभिमन्यमानत्वेनदेवताशब्दोपपत्तेरित्यतस्तदुपपादयति ॥ **नचानतिप्रश्नत्व**
**मिति** ॥ नचोपरितनलोकेष्वित्यपिबाधकमुपपादयति ॥ अधस्तनेष्विति ॥ **नचवायुरित्यपिनबाधकं** । वायुनाहिसर्वेलोका

भाष्यं ॥ नचोपरितनलोकेष्वधस्तनलोकाआश्रिताःनचवायुर्गंधर्वलोकाश्रितः । वाय्वाश्रयत्वश्रुतेःसर्वलोकानां । वायुनाहिसर्वेलोकानेनीयं
तइत्यादिना । सप्तस्कंधगतोलोकान्योबिभर्तिमहाबलइतिहरिवंशेषु । नचानतिप्रश्नत्वंलोकमात्रस्यास्ति । अधस्तनेषुचोपरितनालोकास्तिष्टंति ।

नेनीयंतइतिसामान्यवचनस्यैतद्वाक्यबलेनस्वाश्रयगंधर्वलोकव्यतिरिक्ताःसर्वइत्यर्थोपपत्तेरित्यतस्तदप्युपपादयति ॥ **नचमरुता** **मिति** ॥ एकोपिनविद्यते किमुमुख्यवायुरित्यर्थः । पररीत्याएतदुक्तं । सिद्धांतेवायुशब्दस्यान्यपरत्वादितिभावः । **नकेवलंलो** कशब्दस्यप्रसिद्धार्थत्वानुपपत्त्यास्वरूपानंदानुभवार्थत्वं । किंतुब्राह्मणव्याख्यानपरप्रमाणादपीतिभावेनाह ॥ **उक्तंचेति** ॥ **ता** **मुक्तिंपठति** ॥ **आपिबंतीति** ॥ अनेनकस्मिन्नापइत्युक्तंआपइत्येतद्व्याख्यातं । कस्मिन्नापओताश्चप्रोताश्चेतिवायौगार्गीत्यस्यार्थ माह ॥ **तेषामिति** ॥ अनेनवायुशब्दोनप्रधानपरोनवाएकोनपंचाशन्मरुत्सुकश्चित्परः किंतुअप्शब्दोवायुशब्दश्चजडपरएवेति परास्तं । कस्मिन्खलुवायुरोतश्चप्रोतश्चेतिगंधर्वलोकेष्वित्यस्यार्थमाह ॥ **तस्यचेति** ॥ कस्मिन्खलुगंधर्वलोकाओताश्चप्रोताश्चेत्यं तरिक्षलोकेष्वित्यस्यार्थमाह ॥ **तत्सुखानामिति** ॥ अंतरिक्षगःअंतरिक्षाभिमानी । कस्मिन्नुखल्वंतरिक्षलोकाःओताश्चप्रोता श्चेत्यादित्यलोकेषुगार्गीत्यस्यार्थमाह ॥ **तत्सुखानामिति** ॥ कस्मिन्नुखल्वादित्यलोकाओताश्चप्रोताश्चेतिचंद्रलोकेषुगार्गीत्य स्यार्थमाह ॥ **सौराणामिति** ॥ सूर्याचंद्रमसोस्समानत्वात्कथमाश्रयाश्रयीभावइत्यतआह ॥ **आह्लादनादिति** ॥ चंद्रशब्द

भाष्यं ॥ नचमरुतामेकोपिगंधर्वलोकादवरोविद्यते । उक्तंच । आपिबंत्यखिलान्भोगानित्यापश्चक्रवर्तिनः । मुक्तास्तेषांवायुसुतश्चक्रोनाम व्यपाश्रयः । मुक्तस्तस्यचमुक्तस्तुमरुद्गंधर्वनामवान् । सुतोवायोस्तत्सुखानांमौक्तानामंतरिक्षगः । मरुतामेकएवासावंतरिक्षस्तुवायुजः । तत्सुखा नांतुमौक्तानामानंदाःसूर्यरूपकाः । सौराणांचापिमौक्तानामानंदाश्चंद्ररूपकाः । आह्लादनाच्चंद्रनामादेवोसावनिरुद्धकः । ॥ १८९ ॥

वाच्यत्वेनिमित्तांतरमाह ॥ **सएवेति** ॥ कस्मिन्नुखलुचंद्रलोकाओताश्चेतिनक्षत्रलोकेष्वित्यस्यार्थमाह ॥ **अनिरुद्धेति** ॥ नक्ष त्रशब्दमिंद्रेनिर्वक्ति ॥ **नैवेति** ॥ अस्येंद्रस्यान्यःक्षत्रियोरक्षकोनैवेत्यर्थः । ननुब्रह्मादीनांसत्वात्कथमेतदित्यतआह ॥ **त्रिषुलोकेष्विति** ॥ एवमपिकथंतद्यावृत्तिरित्यतआह ॥ **ब्रह्माद्याइति** ॥ कस्मिन्नुखलुनक्षत्रलोकाओताश्चप्रोताश्चेतिदेवलोकेष्वित्यस्यार्थमाह ॥ **आनंदानामिति** ॥ अत्ररुद्रशब्देनशेषोग्राह्यः । कस्मिन्खलुदेवलोकाओताश्चप्रोताश्चेतिइंद्रलोकेषुगार्गीत्यस्यार्थमाह ॥ **इंद्रेति** ॥ इंद्रासरस्वती । तस्यामिंद्रशब्दंनिर्वक्ति ॥ **शिवोहीति** ॥ यद्यानन्विंद्रत्वंपरमेश्वरत्वंतत्रकईश्वरोयत्परमत्वेनास्याइंद्रत्वमित्यतआह ॥ **शिवोहीति** ॥ कस्मिन्नुखल्विंद्रलोकाओताश्चप्रोताश्चेतिप्रजापतिलोकेष्वित्यस्यार्थमाह ॥ **तत्सुखानामिति** ॥ ब्रह्माचतुर्मुखः आधिराश्रयः कस्मिन्नुखलुप्रजापतिलोकाओताश्चप्रोताश्चेतिब्रह्मलोकेष्वित्यस्यार्थमाह ॥ **तत्सुखानामिति** ॥ चतुर्मुखसुखानामित्यर्थः । एवंमुक्तपरत्वेनब्राह्मणंव्याख्यायसंसारिपरत्वेनापिव्याचष्टे ॥ **एवमेवेति** ॥ संसारेचेतिसंबंधः । एवमेवव्याख्येयमितिशेषः । मुक्तिसंसारयोश्चक्रवर्त्याद्यानंदानांवायुसुतचक्राद्यानंदाश्रितत्वंकुतइत्यतआह

---

भाष्यं ॥ सएवचंद्रमाविश्यस्थितस्तन्नामकोपिसः । अनिरुद्धसुखानांचमौक्तानामिंद्रआश्रयः । नक्षत्रनामवानिंद्रोनैवान्यःक्षत्रियोस्यहि । विद्यतेत्रिपुलोकेषुब्रह्माद्यास्तूर्ध्वलोकगाः । आनंदानांतथेंद्राणांमौक्तानांदेवआश्रयः । देवेतिलिंगनामस्याल्लिंगात्मारुद्रउच्यते । इंद्राश्रयःशिवस्यापि सुखानांमुक्तिगामिनां । शिवोहीश्वरनामास्यात्तत्पारम्यात्सरस्वती । इंद्रेत्युक्तातत्सुखानांब्रह्माधिर्मुक्तिगामिनां । तत्सुखानांपरंब्रह्ममुक्तिगानांपराश्रयः । एवमेवचसंसारे

379

॥ बिंबत्वादिति ॥ अनतिप्रश्न्यांदेवतामितिपरब्रह्मणआश्रयप्रश्नाविषयत्वमुक्तंतत्रहेतुमाह ॥ नेति ॥ मातिप्राक्षीरितिप्रश्नोन कर्तव्यइत्युक्त्वातत्रहेतुरुच्यते मातेमूर्धाव्यपप्तदिति । तस्यशिरश्छेदमात्रार्थत्वप्रतीतिंनिवारयंस्तद्घटयति ॥ तस्येति ॥ उपसंहरति ॥ तस्मादिति ॥ उक्तार्थेप्रमाणांतरमाह ॥ रुद्रमिति ॥ देवाःरुद्रमुक्तप्रकारेणसमाश्रिताः । प्रमाणांतरसंवादाच्चायमेवार्थइत्याह ॥ अथातइति ॥ प्रमाणेलोकशब्दःमुक्तस्वरूपभूतसुखपरत्वेनव्याख्यातः तद्युत्पाद्यदर्शयति ॥संसारादिति॥ लुप्तानामित्यस्यैवतात्पर्यमाह ॥ मुक्तानामिति ॥ लोकाइत्यानंदानुभवाउच्यंतइत्युक्तंतद्युत्पाद्यदर्शयति ॥ रोचमानानीति॥ लोकइत्यस्यार्थोरोचमानानीति कानिसुखानि। नन्वेवंलोकशब्दनिर्वचनेलोकमितिनपुंसकलिंगंस्यात् । सुखवाचककशब्दस्यनपुंसकलिंगत्वात् । नतुलोकइतिपुंलिंगनिर्देशइत्यतआह ॥ लीनमिति ॥ पूर्वलीनंपश्चादभिव्यक्तंसुखंकइत्युक्तं । अत्रसंसारेयत्सुखंक्षीयतेस्थीयतेतत्कंनामेत्यर्थः ॥ ततश्चायंखंडार्थः ॥ अथकहोळोपरमानंतरं । गार्गीगर्गगोत्रोत्पन्ना । वाचक्नवी वचक्नो

---

भाष्यं ॥ विंबत्वादुत्तरोत्तरं । नपरब्रह्मणःकश्चिदाश्रयःस्वाश्रयंयतः । तस्याश्रयोस्तिवेत्येवंपृच्छतोपिशिरःसदा । भिद्यतेपर्वतैरंधेतमसिस्थस्य दैवतैः । तस्माद्ब्रह्मपरंनित्यंज्ञेयंपूर्णमनाश्रयमितिब्रह्मांडे । रुद्रंसमाश्रितादेवारुद्रोब्रह्माणमाश्रितः । ब्रह्मामामाश्रितोनित्यंनाहंकंचिदुपाश्रितइतिभारते । अथातआनंदस्यमीमांसाभवतीत्यादेश्च । संसाराल्लुप्तानांमुक्तानांकानिसुखानिलोकाःरोचमानानिकानिलोकाः । लीनंसुखंकइत्युक्तंकंनामक्षीयतेत्रयत् ॥ इतिगर्गिब्राह्मणं ॥ ६ ॥

उप० ॥ अथहैनंगार्गीवाचक्नवी

रपत्यंस्त्रीवाचक्नवी। एनंयाज्ञवक्यं पप्रच्छ । यइदंसर्वंमुक्तमनुष्योत्तमजातं । अप्सुअप्शब्दवाच्येषुमुक्तचक्रवर्तिषु । ओतमाश्रितं । नैतदौपचारिकमित्याह ॥ प्रोतमिति ॥ ताःआपःकस्मिन्नोताःप्रोताश्चेति । उत्तरमाह ॥ वायाविति ॥ अत्रवायुशब्देनप्रधानवायुपुत्रश्चक्रनामामुक्तोग्राह्यः । तदुत्तरकक्ष्यंपृच्छति ॥ कस्मिन्निति ॥ गंधर्वलोकेषुगंधर्वशब्दवाच्यस्यमुक्तस्यवायुपुत्रस्यसुखेषु अंतरिक्षलोकेषुअंतरिक्षाख्यस्यवायुपुत्रस्यमुक्तस्यमरुतःसुखेषु आदित्यलोकेषुमुक्तसूर्यानंदेषु चंद्रलोकेषुचंद्रशब्दवाच्यमुक्तानिरुद्धानंदेषु नक्षत्रलोकेषुनक्षत्रशब्दवाच्यमुक्तेंद्रानंदेषु देवलोकेषुमुक्तशेषानंदेषु इंद्रलोकेषुमुक्तसरस्वत्यानंदेषु प्रजापतिलोकेषुमुक्तब्रह्मानंदेषु ब्रह्मलोकेषुपरब्रह्मानंदेषु परब्रह्मानंदस्याप्याश्रयंपृच्छति ॥ कस्मिन्निति ॥ अति अतिक्रम्य मा प्राक्षीः तेमूर्धाशिरोमाव्यपप्तत् । अंधेतमसिविविच्य विस्पष्टं मापततु । कुतःयतस्त्वमनतिप्रश्न्यांआश्रयवत्वप्रश्नानर्हांदेवता

उप० ॥ पप्रच्छयाज्ञवल्क्येतिहोवाचयदिदꣳसर्वमप्स्वोतंचप्रोतंचेतिकस्मिन्नुखल्वापओताश्चप्रोताश्चेतिवायौगार्गीतिकस्मिन्नुखलुवायुरोतश्च प्रोतश्चेत्यंतरिक्षलोकेषुगार्गीतिकस्मिन्नुखल्वंतरिक्षलोकाओताश्चप्रोताश्चेतिगंधर्वलोकेषुगार्गीतिकस्मिन्नुखलुगंधर्वलोकाओताश्चप्रोताश्चेत्यादित्यलोकेषु गार्गीतिकस्मिन्नुखल्वादित्यलोकाओताश्चप्रोताश्चेतिचंद्रलोकेषुगार्गीतिकस्मिन्नुखलुचंद्रलोकाओताश्चप्रोताश्चेतिनक्षत्रलोकेषुगार्गीतिकस्मिन्नुखलुनक्षत्रलोकाओताश्चप्रोताश्चेतिदेवलोकेषुगार्गीतिकस्मिन्नुखलुदेवलोकाओताश्चप्रोताश्चेतींद्रलोकेषुगार्गीतिकस्मिन्नुखल्विंद्रलोकाओताश्चप्रोताश्चेतिप्रजापतिलोकेषुगार्गीतिकस्मिन्नुखलुप्रजापतिलोकाओताश्चप्रोताश्चेतिब्रह्मलोकेषुगार्गीतिकस्मिन्नुखलुब्रह्मलोकाओताश्चप्रोताश्चेतिसहोवाचगार्गिमातिप्राक्षीर्मातेमूर्धाव्यप(त)प्तदनतिप्रश्न्यांवैदेवता

मपिअतिक्रम्यपृच्छसि । तदाश्रयप्रश्नश्चानर्हहेतुरितिभावः ॥ १ ॥ **गार्गिब्राह्मणं** ॥ ६ ॥ ७ ॥ **अंतर्यामिब्राह्मणेअंतर्यामित्वं**
प्रकृतेस्तत्तज्जीवस्यचोच्यते । श्रुत्युक्तपृथिव्यादिशरीरत्वस्यप्रकृतावुपपत्तेः । शरीरशब्दस्यस्वरूपेपिप्रयोगात् । **प्रकृतेश्चपृथि**
व्यादिसर्वात्मकत्वात् । नचपृथिव्यांतिष्ठन्नित्यादेरनुपपत्तिः । व्याप्तंकार्येषुकारणमित्यादिनाकारणस्यकार्यस्थत्वोक्तेः । पृथिवीं
यमयतीत्येतत्उपचारेणनेतव्यं । पृथिव्यादिजीवस्यचपृथिव्यादिशरीरत्वादिकंसुघटमेवेतिशंकापरिहारायब्राह्मणप्रतिपाद्यमाह
॥ **पुनरिति** ॥ ब्रह्मलोकेषुगार्गीतियःसर्वमुक्ताश्रयत्वेनोक्तः । तस्यविष्णोरेव नतुप्रकृतेस्तत्तज्जीवस्यवेत्यर्थः । **एषतआत्मेतिवि**
ष्णोर्नियंतृत्वस्योक्तत्वात्पुनःकिमर्थमेतदित्यतउक्तं ॥ **सर्वेति** ॥ यआत्मासर्वांतरइतिआत्मशब्देनसर्वनियंतृत्वस्याप्युक्तत्वात्
पुनरित्युक्तं । आत्मेत्युक्तमेवविविच्योच्यतइतिनवैयर्थ्यमितिभावः । विष्णोरेवसर्वनियंतृत्वमुच्यतइतिकुतइतिचेत् । **अंतर्या**
मिप्रश्नवाक्येयोंऽतरोयमयतीतिविष्णुवाचकयशब्दश्रवणात् । अन्यथायइमंचलोकंपरंचलोकंसर्वाणिचभूतान्यंतरोयमयतीत्ये
तावतापूर्णत्वात् योंऽतरोयमयतीतिपुनर्यइतिव्यर्थमित्याह ॥ **यइति** ॥ नचैवंस्वेनैवांऽतर्यामिणोवि[illegible]ष्णुत्वस्योक्तत्वात्प्रश्नानुपप
त्तिः । काप्येनापिविष्णुत्वस्ययशब्देनज्ञानान्नवेदेत्यनुपपत्तिश्च । तमंतर्यामिणंविष्णुंविशेषेणवेत्थकिमितिगंधर्वप्रश्नेनवदेतिका
प्यवचनात् । यशब्दस्यविष्णुवाचकत्वेऽभिधानमाह ॥ **अकयेति** ॥ विष्णावकयादिशब्दानांप्रवृत्तौनिमित्तमप्याह ॥ **अइत्ये**

उप० ॥ मतिपृच्छसिगार्गिमातिप्राक्षीरितिततोहगार्गीवाचक्नव्युपरराम ॥ १ ॥ गार्गित्राह्मणं ॥ ६ ॥

भाष्यं ॥ पुनस्तस्यैवसर्वनियंतृत्वमुच्यते । योंतरोयमयतीतिद्वितीयोयशब्दोविष्णुशब्दपर्यायः । अकयप्रविसंभूमसखहाविष्णुवाचकाः ।

षइति ॥ योवैतत्काप्यसूत्रंविद्यात्तंचांतर्यामिणमितिसब्रह्मविदितिवाक्यंइतिशब्दोव्यर्थइत्यतआह ॥ इतीति ॥ येनायंचलोकःपरश्चलोकःसर्वाणिभूतानिचसंदृब्धानीति यइमंचलोकंपरंचलोकंसर्वाणिभूतानियोंतरोयमितीतिचस्वप्रतिज्ञातप्रकारेणेत्यर्थः। तथाचस्वप्रतिज्ञातप्रकारवाचीतिशब्दाभावेसूत्रांतर्यामिस्वरूपमात्रज्ञानिनोब्रह्मवित्त्वादिकमुच्यमानमयुक्तंस्यादितितत्सार्थकमितिभावः। ननुस्वप्रतिज्ञातप्रकारेणसूत्रांतर्यामिविदोपिकथंब्रह्मवित्त्वादिकमित्यतःसब्रह्मविदित्यादिवाक्यंव्याचष्टे ॥ ब्रह्मविदिति ॥ शक्तिज्ञानादिपूर्णविज्ञानादित्यर्थः। सूत्रस्यसर्वाश्रयत्वमंतर्यामिणःसर्वनियंतृत्वंचजानंस्त[illegible]युक्तशक्तिज्ञानादिपूर्णत्वमपिजानात्येवेतिभावः। लोकानांकर्तृवेदनादिति। धारणनियमनकर्तृवेदनादित्यर्थः । सूत्रस्यलोकधारणकर्तृत्वज्ञानंअंतर्यामिणःलोकनियामकत्वज्ञानंचलोकज्ञानंविनासनसंभवतीतिभावः। देवानांदेववेदनादिति। देवानांयोदेवत्वप्रदस्तदाश्रयःतन्नियामकश्चेतियावत्तद्वेदनादित्यर्थः। सूत्रांतर्यामिणोःसर्वाश्रयत्वसर्वनियामकत्वज्ञानेदेवाश्रयत्वतन्नियामकत्वमपिज्ञातमेव । तच्चदेवज्ञानाभावे नसंभवतीतिभावः ॥ वेदार्थेति ॥ सर्वाश्रयत्वसर्वनियामकत्वयोर्वेदार्थत्वादित्यर्थः । प्रतिपादकवेदज्ञानाभावेतत्प्रतिपाद्यार्थज्ञानाभावादितिभावः ॥ तन्नियंतृपरिज्ञानादिति ॥ नियम्यरूपभूतज्ञानाभावेतन्नियंतृत्वेनतज्ज्ञानमपिनसंभव

---

भाष्यं ॥ एकाक्षराअइत्येषनिर्दोषत्वाज्जनार्दनः। आनंदत्वात्कइत्युक्तःपूर्णत्वाद्यइतीर्यतइत्यादिशब्दनिर्णये। इतिस्वप्रतिज्ञातप्रकारेण । ब्रह्मवित्पूर्णविज्ञानाल्लोकानांकर्तृवेदनात्। लोकविद्देवविच्चासौदेवानांदेववेदनात् । वेदार्थवेदनाच्चैववेदविद्भूतवित्तथा। तन्नियंतृपरिज्ञानादात्मवित्

तीतिभावः । तदाश्रयपरिज्ञानादित्यपिग्राह्यं ॥ आप्तवेदनादिति ॥ तदाप्तस्यैवतदाश्रयत्वंतन्नियामकत्वंचेति आश्रयत्वनियं तृत्वाभ्यांसूत्रांतर्यामिणोर्ज्ञानेतदाप्तत्वज्ञानमावश्यकमितिभावः । सर्वसारज्ञःसर्वाश्रयसर्वनियंत्रोःसर्वसारत्वात् । पुरुषोत्तमंपु रुषशब्दोत्राधिकारिपरश्चेतनपरश्च । तथाचाधिकार्युत्तमंसूत्रंचेतनोत्तमंविष्णुंचेत्यर्थः । ननूत्तमाधिकारिणामुक्तप्रकारेणलोकवे दादिसर्वज्ञानसंभवेप्यन्येषांनसंभवति । तेषामसर्वज्ञत्वादितिचेत् न । तदालोकानांकर्तृवेदनात्लोकविदित्युच्यतइत्यौपचारि कत्वांगीकारात् । तथासतितत्रप्रयोजनंवाच्यमितिचेन्न । निरूढोपचारत्वेनतत्रप्रयोजनानपेक्षणादितिभावेनाह ॥ देशेति ॥ वैदिकं व्याहरणमितिशेषः । वायुर्वैगौतमतत्सूत्रमित्युक्तं । तत्रसूत्रशब्दंवायौनिर्वक्ति ॥ स्यूतमिति ॥ एषतआत्मांतर्यामीति प्रकृतेस्तत्तज्जीवस्यवांतर्यामित्वमुक्तन्यायेनोच्यतइतिप्रतीतिनिरासायांऽतर्यामिशब्दंनिर्वक्ति ॥ तंचेति ॥ चशब्दस्तस्मादित्य र्थे । नकेवलंपृथिव्यादिकं किंतुतमपिसूत्रनामानंवायुमपि । अंतस्थित्वेतिशेषः । अस्मिन्ब्राह्मणेसूत्रांतर्यामिणोःसमप्रधानभावे नप्रतिपाद्यत्वभ्रमनिवारणायतमपीत्युक्तं । नन्वंतर्यामित्वंप्रकृतेस्तत्तज्जीवस्यैववायुक्तं नतुहरेः । पृथिव्यादिशरीरत्वस्योक्तन्या येनतत्रसंभवात् । हरावसंभवात् । तस्यपृथिव्यादिभिन्नचिच्छरीरत्वोररीकारेणपृथिव्यादिशरीरत्वानंगीकारादितिचेत् न । यतोत्रपृथिव्यादिशब्दादेवतावाचकाएव । इत्यधिदैवतमितिपृथिव्यादीनामधिदैवत्वोक्तेः । यंपृथिवीनवेदेत्यादौपृथिव्यादेर्ज

भाष्यं ॥ आप्तवेदनात् । सर्ववित्सर्वसारज्ञोयोवेदपुरुषोत्तमं । देशाधिष्ठातृविज्ञानाद्देशज्ञइतिचोच्यते । यथातद्वद्धरेर्ज्ञानात्सर्वज्ञइतिवैदिकमि तिब्रह्मतर्के । स्यूतंजगदिदंयस्मिन्सूत्रंवायुरसौस्मृतः । तंचापियमयेद्यस्मादंतर्यामीहरिःस्मृतः ।

डत्वेयमित्यस्यवैयर्थ्याच्च । यंविज्ञानंनवेदेत्यस्यानुपपत्तेश्च । अप्रस्तुतप्रतिषेधापत्तेश्च । नचपृथिव्यादिशब्दाभिधेयदेवताशरीरत्वंप्रकृतेःपृथिव्यादिजीवस्यवायुक्तं । विष्णोस्तुगौणंपृथिव्यादिदेवताशरीरत्वंयुज्यतएवेतिभावेनाह ॥ पृथिव्याद्याइति ॥ यस्यशरीरमितिसंबंधः । यच्छब्दस्यसोंतरइत्युत्तरेणान्वयः । नकेवलंतद्वशत्वगुणयोगेनपृथिव्यादिदेवतानांविष्णुशरीरत्वं किंतुतत्प्रविष्टत्वलक्षणगुणयोगेनापीतिभावेनाह ॥ अंतस्थइति ॥ योदेवानामंतस्थश्च । नन्वेवंपृथिव्यादिशरीरत्वंगौणमंगीकृत्य किंबलादंतर्यामित्वंहरेरंगीकर्तव्यमितिचेत् अंतर्यामिणःपृथिव्याद्यवेद्यत्वादिविष्णुधर्मव्यपदेशात् । नचपृथिव्यादिदेवताऽविदितत्वादिकंप्रकृतेस्तत्तज्जीवस्यवोपपद्यतइतिभावेनयंपृथिवीनवेदयमापोनविदुरित्यादिवाक्यंतावद्व्याचष्टे ॥ नविदुरिति ॥ यःपृथिव्यांतिष्ठन्योप्सुतिष्ठन्नित्यादेरर्थमाह ॥ प्रविष्टत्वादिति ॥ यःपृथिवीमंतरोयमयतीत्याद्यंतरशब्दंव्याचष्टे ॥ सोंतरइति ॥ अंतरशब्देनस्ववशत्वंकथंलब्धमित्यतअंतरशब्दार्थमाह ॥ बाह्येति ॥ अंतरेवरमतइत्यंतरः । अंतरेवेत्यस्यार्थःबाह्यापेक्षांविनेति । स्वाभिन्नापेक्षांविनेत्यर्थः । तस्यैवार्थांतरमाह ॥ अतिप्रियत्वाच्चेति ॥ अंतःस्थित्वारनयतीतिअंतरइतिभावः । नन्वतिप्रियत्वंनामनिरुपाधिकंप्रियत्वंतच्चस्वात्मनएवनतुविष्णोरित्यतआह ॥ जीवानामिति ॥ एवंपृथिव्याद्यविदितत्वादि

भाष्यं ॥ पृथिव्याद्यादेवतास्तुदेहवद्वशत्वतः । शरीरमितिचोच्यंतेयस्यविष्णोर्महात्मनः । अंतःस्थोदेवतानांचनविदुर्यंचदेवताः । प्रविष्टत्वाद्देवतास्थःसोंतरःस्ववशत्वतः । बाह्यापेक्षांविनायस्तुरमतेसोंतरःस्मृतः । अतिप्रियत्वाच्चहरेरंतरत्वमुदाहृतं । जीवानांस्वप्रियत्वंचविष्णुनानियतं यतः । तस्यप्रियत्वंनान्येनदेवस्यनियतंक्वचित् ।

हेतुबलाद्विष्णुरेवांतर्यामीत्युक्तं । इदानीमंतर्यामिशब्दार्थस्यविष्णावेवसंभवात् प्रकृत्यादावसंभवाच्चविष्णुरेवांतर्यामीतिभावे नांतर्यामिशब्दार्थमाह ॥ स्वतंत्रइति ॥ ततःतस्मादिति तच्छब्दश्रवणात्यत्यस्मादित्यपिग्राह्यं । अंतरेवयामीत्यंतर्यामी । तत्रांतरेवेत्यस्यतात्पर्यंस्वतंत्रइति । यामीत्यस्यार्थोनियंतेति । ननुयामीत्यस्यकथंनियंतेतिव्याख्यानंतयोरेकार्थत्वाप्रतीतेरित्यत स्तयोरेकार्थत्वसिध्यर्थंतदुभयशब्दार्थावाह ॥ देवतानामिति ॥ स्वभावोधर्मः । यतइतिश्रवणादतइतिग्राह्यं । इत्यधिदैवतं इत्यधिभूतंइत्यध्यात्ममित्युक्ताधिदैवादिशब्दानामर्थमाह ॥ अधिभूतमिति ॥ सर्वजीवाःमनुष्यादयः । तच्छरीरगास्तदिंद्रि याद्यभिमानिन्यः । याइंद्रियाद्यभिमानिन्यःतारूपांतरेणस्वलोकस्थाः । अत्राधिलोकाधियज्ञेतिमूलानुक्तंमाध्यंदिनशाखाभि प्रायेण । तत्राथाधिलोकंयःसर्वेषुलोकेषुतिष्ठन्सर्वेभ्योलोकेभ्योंऽतरः । अथाधियज्ञंयःसर्वेषुयज्ञेषुतिष्ठन्नित्येवंरूपेणपाठात् । जीवेष्वधिभूतशब्दंव्युत्पाद्यदर्शयति ॥ भवनाधिकारइति ॥ अधिभूतशब्दंसम्यंतमंगीकृत्योक्तंभवनाधिकारइति । स्थित त्वादितिशेषोक्तिः । भूतंभवनमुत्पत्तिमधिकृत्यवर्ततइत्यधिभूतं । तस्मिंस्थितत्वादित्यर्थः । यद्वाभवनाधिकारइतिउत्पत्ति॰

---

भाष्यं ॥ स्वतंत्रःसन्नियंतासावंतर्यामीततःस्मृतः । देवतानांस्वभावोपिस्वरूपमपिसर्वदा । तदधीनंयतोयामीवासुदेवःप्रकीर्तितः । स्वभाव सत्तादातृत्वंयंतृत्वमितिकथ्यतइतिब्रह्मतर्के । अधिभूतंसर्वजीवाअध्यात्मंतच्छरीरगाः । देवतास्ताःस्वलोकस्थाअधिदैवाभिधामताः । लोकाभिमा निन्यस्ताएवाधिलोकाइतीरिताः । यज्ञाभिमानिनोदेवाअधियज्ञाइतिस्मृताइतिच । भवनाधिकारेस्थितत्वादधिभूतं ।

पादग्रंथविशेषस्यसंज्ञा । तत्रस्थितत्वात् । तत्प्रतिपाद्यत्वादित्यर्थः । पृथिव्याद्यादेवाइत्युक्तं केतेकेननिमित्तेनपृथिव्यादिशब्दवाच्याइत्येतत्सर्वंप्रमाणेनाह ॥ **पृथुमिति** ॥ वाति गच्छति । हरेअंतरिक्षशब्दंनिर्वक्ति ॥ **स्वांतर्गतमिति** ॥ कृते तिशेषः । अंतरित्यस्यार्थःस्वांतर्गतमिति । इइत्यस्यार्थः । इच्छयेति । क्षइत्यस्यार्थःक्षपयेदिति विद्युत्द्यौर्नामस्यात् । द्यौर्वावविद्युदिति श्रुतेः । कासाद्यौरित्यतआह ॥ **देवीसरस्वतीति** ॥ कुतइत्यतआह ॥ **साक्षादिति** ॥ साक्षादेवसर्ववस्तूनांद्योतनादिति संग्लपयेत् । तसुग्लपनइतिधातोः । हियस्मात्पृथूदरःतस्मादासमंतात्काशतइत्यर्थः । एतत्पश्चिमदिक्स्थितंजगत् । आत्माविज्ञानमितितियिति । अत्रमाध्यंदिनशाखाभिप्रायेणात्मेत्युक्तं । अत्रयोविज्ञानेतिष्ठन्नितिवत्तत्रयआत्मनितिष्ठन्नात्मनोंतरइत्येवं रूपेणपाठादितिज्ञेयं । नन्वेवंव्याख्यानेशारीरश्चोभयेपिहिभेदेनैनमधीयतइतिसूत्रभाष्यविरोधःस्यात् । तत्रास्यवाक्यस्याविशेषितजीवपरत्वांगीकारादितिचेन्न । जीवाभिमानिचतुर्मुखादपितन्नियामकत्वादिनाभिन्नस्यांतर्यामिणःकिमुवक्तव्यंतदभिमन्यमानजीवेभ्योभिन्नत्वमितीत्यभिप्रायेणांतर्यामिणोजीवाद्भिन्नत्वेऽस्यवाक्यस्यसूत्रकृतोपात्तत्वात् । तदेतदाह ॥ **सर्वजीवाभिमानवानिति** ॥ श्रुत्युक्तानामेवभगवन्नियम्यत्वंनत्वन्येषामितिशंकापरिहारायय:पृथिव्यांतिष्ठन्नित्यादिकमुपलक्षणपरमिति

---

भाष्यं ॥ पृथुंनारायणंवातिसमादायैवपक्षिराट् । अत:सपृथिवीत्युक्तस्त्वंतरिक्षंहर:स्मृत: । स्वांतर्गतंयत:सर्वमिच्छयाक्षपयेदसौ । द्यौर्नामदेवीविद्युत्स्यात्साक्षादेवसरस्वती । द्योतनात्सर्ववस्तूनांतमोदुर्गाप्रकीर्तिता । यत:संग्लपयेत्सर्वास्तेज:श्री:परिकीर्तिता । आकाशोविन्नउद्दिष्ट:काशतेहिपृथूदर: । आपोवरुणउद्दिष्टोयदेतत्पालयत्यसौ । आत्माविज्ञानमितितुसर्वजीवाभिमानवान् ।

Scanned by CamScanner

भावेनाह ॥ इमेसर्वइति ॥ इमेसर्वेश्रुत्युक्तागरुडाद्याः । याअत्रब्राह्मणेऽनुक्तादेवतास्ताश्चयेपरेमनुष्याद्याःसर्वेजीवाअधिभूत
शब्दोक्तास्तेचविष्णुनैवनियताइत्यर्थः । ननुपृथिव्यादिशब्दानामुक्तरीत्यागरुडादिदेवतापरत्वेजडस्यभगवन्नियतत्वंनोक्तंस्यात्
इत्यतःकैमुत्यसिद्धतयातदनुक्तावपिसिध्यतीतिभावेनाह ॥ जीवानामिति ॥ एषाश्रुतिस्तन्नियमनंजडनियमनंपृथङ्नवक्ति ।
कुतः स्वतएवकिंविनापिसिद्धत्वात् कथं । जीवानांनियमेऽजीवंजीवभिन्नंजडं नियच्छतीतिकिमुवाच्यमितीतियोजना । ननुअ
दृष्टोद्रष्टाऽश्रुतःश्रोतेत्यादिनाद्रष्टृत्वश्रोतृत्वादिकंविष्णोर्लक्षणमुक्तं । तत्तुचेतनमात्रसाधारणंकथंविष्णुलक्षणंस्यादित्यतआह ॥
सएवेति ॥ ननुविष्णोःसर्वात्मनाऽदृष्टत्वाश्रुतत्वादिकंप्रमाणांतरविरुद्धमित्यतआह ॥ हिपरस्मात्परमइति ॥ हिशब्दोय
स्मादित्यर्थः । तस्माच्छ्रुतौसाकल्येनादृष्टत्वादिकमुच्यतइतिशेषः । नान्योतोस्तिद्रष्टेत्यादिनिषेधःकथंजीवानामेव तद्व्यतिरिक्ता
नांद्रष्टृत्वादित्यतआह ॥ नान्यइति ॥ स्वतंत्रवेत्तारोपिजीवाःकुतोनस्युरित्येतच्छंकापरिहारकतयाऽतोन्यदार्तमित्येतद्व्याचष्टे ॥
जीवाइति ॥ दुःखित्वेपिस्वातंत्र्यंकिंनस्यात्इत्यतआह ॥ यदीति ॥ दुःखिनोनैवस्युःकिंतुनित्यंसुखिनएवस्युरित्यर्थः । जी
वानांभगवदधीनत्वंभगवतःस्वातंत्र्यंचोपसंहरति ॥ अतइति ॥ आर्तिमतांदुःखस्पृष्टानां । मुक्तिप्रदश्चसइत्यनंतरंतस्माज्जीवा

---

भाष्यं ॥ त्रह्मैवोक्तस्त्विमेसर्वेप्यनुक्तायाश्चदेवताः । येचजीवाःपरेसर्वेनियताविष्णुनैवहि । जीवानांनियमेऽजीवंकिमुवाच्यमितिश्रुतिः ।
पृथक्कृतन्नियमंनैषावक्तिसिद्धत्वतःस्वतः । सएवसर्वद्रष्टाहिपरस्मात्परमोहरिः । नान्योवेत्तास्वतंत्रोस्तिजीवाःसर्वेहिदुःखिनः । यदिस्वतंत्रानैवैतेदुः
खिनःस्युःकदाचन । अतआर्तिमतामार्तिदातामुक्तिप्रदश्चसः ।

अस्वंतत्राइतिशेषः ॥ ततश्चायंखंडार्थः ॥ अथहैनमुद्दालकोनामत अरुणस्यापत्यमारुणिः पप्रच्छ । स्वस्यसूत्रादिविद्यायागुरूपदेशपूर्वकत्वंज्ञापयितुमाख्यायिकामारचयति ॥ मद्रेष्विति ॥ मद्रेषुदेशेषु काप्यस्यकपिगोत्रोत्पन्नस्य पतंचलनाम्नो गृहेषु यज्ञमधीयानायाज्ञिकविद्याभ्यासंकुर्वाणा असाम तस्यपतंचलस्य भार्या गंधर्वेणगृहीतातदाविष्टासीत् । तंगंधर्वं पतंचलसहितावयं याज्ञिकास्त्वंकोसीत्यपृच्छाम । एवंपृष्टःस गंधर्वः । अस्मभ्यमब्रवीत् किं अहंनाम्नाकवंधःअथर्वणोपत्यंआथर्वणइति । सगंधर्वः काप्यंपतंचलंयाज्ञिकांश्चप्रत्यब्रवीत् । हेकाप्य तत्सूत्रं त्वंवेत्थनु जानीषेकिं । किंतत्सूत्रमित्यतस्तद्विशिनष्टि ॥ येनेति ॥ येनसूत्रेणायंलोकः भूरादिलोकः परश्चलोकः अंतरिक्षादिलोकः सर्वाणिभूतानिसंदृब्धानिसंगतानितदाधारतयावस्थितानिभवंतीति । सपृष्टःकाप्यःपतंचलो हेभगवन्अहंतत्सूत्रंनवेदेत्यब्रवीत् । सएवमुक्तोगंधर्वःपतंचलंकाप्यंयाज्ञिकांश्चपुनरब्रवीत् । हेकाप्य त्वं तमंतर्यामिणं वेत्थ नु किं कोसावंतर्यामीकीदृशश्चसइत्यतआह ॥ यइति ॥ यइमंलोकंपरंचलो

---

भाष्यं ॥ भगवान्परमोविष्णुःस्वतंत्रःसर्वदैकराडित्यादिमहामीमांसायां ॥ इत्यंतर्यामित्राह्मणं ॥ ७ ॥

उप० ॥ अथहैनमुद्दालकआरुणिःपप्रच्छयाज्ञवल्क्येतिहोवाच मद्रेष्व(व)सामतेपतंचलस्यकाप्यस्यगृहेषुयज्ञमधीयानास्तस्यासीद्भार्यागंधर्वगृहीता तमपृच्छामकोसीतिसोब्रवीत्कबंधआथर्वणइति सोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतत्सूत्रंयेनायंचलोकःपरश्चलोकःसर्वाणिच भूतानिसंदृब्धानिभवंतीति सोब्रवीत्पतंचलःकाप्योनाहंतद्भगवन्वेदेति सोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतमंतर्यामिणंयइमंचलोकंपरंचलोकं९

नौ



कंसर्वाणिभूतानिअंतरोयमयति यः पूर्णत्वाद्यशब्दाभिधोविष्णुस्तमंतर्यामिणमितिसंबंधः । एवंपुनःपृष्टः सपतंचलः काप्योहे भगवन् अहं तमंतर्यामिणंनवेदेत्यब्रवीत् । स्वप्रतिज्ञातप्रकारेणसूत्रांतर्यामिस्वरूपवेत्तुःफलमाह ॥ सइति ॥ हेकाप्य योवाऽधिकारी एतत्सूत्रं तमंतर्यामिणंच इति येनायंलोकःइति यइसंचलोकमिति स्वप्रतिज्ञातप्रकारेण विद्यात् । सब्रह्मवित् सपूर्णवित् । सलोकानांकर्तृवेदनात्लोकवित् सदेवानांदेववेदनाद्देववित् । सवेदार्थवेदनाद्वेदवित् भूतनियंतृवेदनाद्भूतवित् आत्मवेदनादात्मवित् सर्वसारवेदनात्सर्वविदिति । एवंसगंधर्वःसूत्रांतर्यामिज्ञानिनःफलमुक्त्वा तेभ्यःपतंचलयाज्ञिकेभ्यः सूत्रांतर्यामिस्वरूपमब्रवीत् । तत्सूत्रांतर्यामिस्वरूपंगंधर्वोपदिष्टमहंवेद किमेतावतेत्यतआह ॥ तच्चेदिति ॥ हेयाज्ञवल्क्य त्वंचेत्यदि तदुक्तविशेषणविशिष्टंसूत्रं तदुक्तविशेषणविशिष्टमंतर्यामिणंचाविद्वान्सन् । ब्रह्मगवीःब्रह्मविदांस्वभूतागाः अन्यायेनोदजसेउनयसि । तर्हितेमूर्धाविपतिष्यतीतिउद्दालकेनोक्तःयाज्ञवल्क्यःप्रत्याह । हेगौतम गौतमगोतमगोत्रोत्पन्न अहं । तत्सूत्रंतमंतर्यामिणंचवेदब्राइति । एवमुक्तउद्दालकःप्रत्याह ॥ वेदवेदेति ॥ वेदवेदेतिइदंवैयःकश्चिद्ब्रूयात् आत्मानंश्लाघयेत् किंतेनोदितेन

उप० ॥ सर्वाणिचभूतानियोंतरोयमयतीति सोब्रवीत्पतंचलःकाप्योनाहंतंभगवान्वेदेति सोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चयोवैतत्काप्यसूत्रंविद्यात्तंचांतर्यामिणमिति सब्रह्मवित्सलोकवित्सवेदवित्सभूतवित्सआत्मवित्ससर्वविदिति तेभ्योब्रवीत्तदहंवेदतच्चेत्त्वंयाज्ञवल्क्यसूत्रमविद्वांस्तंचांतर्यामिणंब्रह्मगवीरुदजसेमूर्धातेविपतिष्यतीतिवेदवाअहंगौतमतत्सूत्रंतंचांतर्यामिणमिति योवाइदंकश्चिद्ब्रूयाद्वेदवेदेतियथावेत्थतथाब्रूहीति ॥१॥

यथावेत्थ तथाब्रूहीति ॥ १ ॥ एवमुक्तस्सयाज्ञवल्क्यउवाच । हेगौतमयत्त्वयापृष्टं तत्सूत्रं वायुरेव सूत्रस्योक्तलक्षणंवायौदर्शयति ॥ वायुनेति ॥ वायोःसर्वलोकाधारत्वमनुभवारूढंकरोति ॥ तस्मादिति ॥ हेगौतम तस्माद्वै वायोःसर्वाधारत्वादेव प्रेतंमृतं वायुनापरित्यक्तं पुरुषमाहुः । किं अस्य प्रेतस्यांगानिकरचरणादीनि व्यस्रंसिषत विशीर्णान्यभवन्निति । सूत्रापगमेमणयइव । एवंवायोःस॰ धारत्वमनुभवारूढंकृत्वासाध्यमाह ॥ वायुनाहीति ॥ एवंयाज्ञवल्क्योक्तंसूत्ररूपमंगीकृत्यांतर्यामिस्वरूपंपृच्छति ॥ एवमेवैतदिति ॥ २ ॥ यः पृथिव्यां पृथुंनारायणंसमादायवातिगच्छतीतिपृथिवीगरुडस्तस्मिन्तिष्ठन् । पृथिव्यागरुडादंतरोविविक्तः । यमंतर्यामिणं पृथिवीगरुडोनवेद यस्यपृथिवीशरीरं तद्वशत्वादेः । नकेवलंतत्रस्थितिमात्रं किंतुयोंतरोबाह्यापेक्षांविनारमतइतिवा रमयतीतिवांतरः । पृथिवींगरुडं यमयति । एषतेआत्मानियामकोऽमृतोनित्योंतर्यामी । अत्रापितआत्मेतिजीवेश्वराभेदव्यावृत्त्यर्थं । एवमेवोत्तरत्रापिव्याख्येयं । अत्रपृथिवीशब्देनगरुडभार्यापिग्राह्या । प्रथितंहरिमादाययातीतिपृथिवःस्मृतः । तद्भार्यापृथिवीनामेतिवक्ष्यमाणत्वात् । अप्सुवरुणे अग्नौप्रसिद्धभूताभिमानिनि यद्यप्यग्निशब्देन

---

उप० ॥ सहोवाचवायुर्वैगौतमतत्सूत्रंवायुनावैगौतमसूत्रेणायंचलोकःपरश्चलोकःसर्वाणिचभूतानिसंदृब्धानिभवंतितस्माद्वैगौतमपुरुषंप्रेतमाहुर्व्यस्रंसिषतास्यांगानीति वायुनाहिगौतमसूत्रेणसंदृब्धानिभवंतीत्येवमेवैतद्याज्ञवल्क्यांतर्यामिणंब्रूहीति ॥ २ ॥ यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ३ ॥ योप्सुतिष्ठन्नद्भ्योंतरोयमापोनविदुर्यस्यापःशरीरंयोपोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ४ ॥ योग्नौतिष्ठन्नग्नेरंतरोयमग्निर्नवेदयस्याग्निःशरीरंयोग्निमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ५ ॥

शाकल्यब्राह्मणेअग्रंविष्णुंनयेद्यस्मात्सुपर्णोग्निरुदाहृतइतिसुपर्णोगृह्यते । तथाप्यत्रपृथिवीशब्देनैवतस्यगृहीतत्वान्नाग्निशब्देनतद्ग्र
हणं । अंतरिक्षेहरे । वायुपत्नीश्रद्धापिग्राह्या श्रद्धानामैवतत्पत्नीसर्वस्यांतर्निरीक्षणात् । अंतरिक्षमितिप्रोक्तेतिवक्ष्यमाणत्वात् ।
वायौमुख्यवायौ सर्वज्ञत्वात्तथागुप्तात्सूत्रात्मावायुरुच्यतइतिवक्ष्यमाणत्वात् । दिविसरस्वत्यां उमापिग्राह्या । द्यौरुमाचसमुदि
ष्टेतिवक्ष्यमाणत्वात् । आदित्येसूर्ये यद्यप्यादित्यशब्देनादिकालस्थितोयस्मादादित्यस्तुसदाशिवइत्युत्तरत्रसदाशिवोगृह्यते । त
थापितस्यांतरिक्षशब्देनैवोक्तत्वान्नतेनतद्ग्रहणं । दिक्षुदिगभिमानिषु चंद्रश्चतारकाश्चचंद्रतारकं तस्मिन् । चंद्रःकामः । चंद्रः
कामउदाहृतइतिविवक्ष्यमाणत्वात् । तारकशब्देनेंद्रः । नक्षत्रमिंद्रउद्दिष्टइतितारकशब्दपर्यायनक्षत्रशब्देनेंद्रस्योत्तरत्रग्रहणात् ।
नचोत्तरब्राह्मणेपृथिव्यादिशब्दानांगरुडभार्यादिपरत्वेप्यत्रकुतस्तद्ग्रहणमितिवाच्यं । एवंसतिविष्णोस्तदंतर्यामित्वस्यालाभा

---

उप० ॥ योंतरिक्षेतिष्ठन्नंतरिक्षादंतरोयमंतरिक्षंनवेदयस्यांतरिक्षꣳशरीरंयोंतरिक्षमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ६ ॥ योवायौतिष्ठ
न्वायोरंतरोयंवायुर्नवेदयस्यवायुःशरीरंयोवायुमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ७ ॥ योदिवितिष्ठन्दिवोंतरोयंद्यौर्नवेदयस्यद्यौःशरीरंयोदि
वमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ८ ॥ यआदित्येतिष्ठन्नादित्यादंतरोयमादित्योनवेदयस्यादित्यःशरीरंयआदित्यमंतरोयमयत्येषतआत्मांतर्या
म्यमृतः ॥ ९ ॥ योदिक्षुतिष्ठन्दिग्भ्योंतरोयंदिशोनविदुर्यस्यदिशःशरीरंयोदिशोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १० ॥ यश्चंद्रतारकेतिष्ठꣳश्चं
द्रतारकादंतरोयंचंद्रतारकंनवेदयस्यचंद्रतारकꣳशरीरंयश्चंद्रतारकमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ११ ॥

त् । अतएवतन्नवक्ष्यति । अत्रोक्ताअप्यंतर्यामिब्राह्मणेसवंतीति आकाशेविघ्ने । तमसिदुर्गायां तेजसिश्रियां इत्यधिदैवतमिति इत्यनेनप्रकारेणाधिदैवतं स्वलोकस्यदेवताजातं तदंतर्यामिनिरूपणंकृतं । अथाधिदैवतमंतर्यामिनिरूपणानंतरमधिभूतं भवना धिकारेस्थितत्वादधिभूतंसर्वजीवजातं । तदंतर्यामिनिरूपणंक्रियतइत्यर्थः । सर्वेषुभूतेषुमनुष्यादिजीवेषु । अथाधिभूतमंतर्यामि निरूपणानंतरमध्यात्ममात्मानंजीवशरीरमधिकृत्यवर्तमानमिंद्रियाभिमानिदेवताजातं तदंतर्यामिनिरूपणंक्रियतइत्यर्थः । प्राणे



---

उप० ॥ यआकाशेतिष्ठन्नाकाशादंतरोयमाकाशोनवेदयस्याकाशःशरीरंयआकाशमंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठंस्तमसोंतरोयंतमोनवेदयस्यतमःशरीरंयस्तमोंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ १३ ॥ यस्तेजसितिष्ठंस्तेजसोंतरोयंतेजोनवेदयस्यतेजः शरीरंयस्तेजोंतरोयमयत्येपतआत्मांतर्याम्यमृतःइत्यधिदैवतमथाधिभूतं ॥ १४ ॥ यःसर्वेषुभूतेषुतिष्ठन्सर्वेभ्योभूतेभ्योंतरोयंसर्वाणिभूतानिनवि दुर्यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यंतरोयमयत्येपतआत्मांतर्याम्यमृतइत्यधिभूतमथाध्यात्मं ॥ १५ ॥ यःप्राणेतिष्ठन्प्राणादंतरोयंप्राणोन वेदयस्यप्राणःशरीरंयःप्राणमंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ १६ ॥ योवाचितिष्ठन्वाचोंतरोयंवाङ्नवेदयस्यवाक्शरीरंयोवाचमंतरोयमयत्येप तआत्मांतर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषितिष्ठंश्चक्षुषोंतरोयंचक्षुर्नवेदयस्यचक्षुःशरीरंयश्चक्षुरंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ १८ ॥ यःश्रो त्रेतिष्ठंश्श्रोत्रादंतरोयंश्रोत्रंनवेदयस्यश्रोत्रंशरीरंयःश्रोत्रमंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ १९ ॥ योमनसितिष्ठन्मनसोंतरोयंमनोनवेदय स्यमनःशरीरंयोमनोंतरोयमयत्येपतआत्मांतर्याम्यमृतः ॥ २० ॥ यस्त्वचितिष्ठंस्त्वचोंतरोयंत्वङ्नवेदयस्यत्वक्शरीरंयस्त्वचमंतरोयमयत्येपतआ त्मांतर्याम्यमृतः ॥ २१ ॥

घ्राणाभिमानिदेवतायां एवंवागादिशब्देनापितदभिमानिदेवताग्राह्याः । विज्ञानेसर्वजीवाभिमानिचतुर्मुखे । अंतर्यामिणोमहिमांतरमाह ॥ अदृष्टइति ॥ सोंतर्यामी अदृष्टः साकल्येनचक्षुर्गोचरोनभवति । अत्युत्तमत्वात् । द्रष्टासर्वमापरोक्ष्येणपश्यति अश्रुतःसाकल्येनश्रवणेंद्रियागोचरः श्रोतासर्वंश्रृणोति अमतोमनोऽगोचरः मंतासर्वंमनसामनुते अविज्ञातोविज्ञानागोचरः । विज्ञाता । सर्वंविजानातीति । अतोंऽतर्यामिणोऽन्यःस्वातंत्र्येणद्रष्टानास्ति । एवमुत्तरत्रापि । कुतोन्योजीवःस्वातंत्र्येणद्रष्ट्रादिर्नभवतीत्यतस्तस्यदुःखित्वान्नस्वातंत्र्यमित्याह ॥ अतोन्यदिति ॥ ततःस्वकृतप्रश्नोत्तरकथनानंतरमुद्दालकआरुणिरुपरराम्ह ॥ ७ ॥ अंतर्यामिब्राह्मणं ॥ ७ ॥ ननुयदिदंसर्वमप्स्वोतंचप्रोतंचेतिकस्मिन्खल्वापओताश्चप्रोताश्चेत्यादिनावाचक्नव्याप्रश्ने कृतेवायौगार्गीत्यादिनायाज्ञवल्क्येनपरिहारस्योक्तत्वात् यदूर्ध्वंयाज्ञवल्क्यदिवइत्यादिपुनःप्रश्नःकिमर्थइत्यतस्तदभिप्रायमाह ॥ पूर्वमिति ॥ सर्वेषां जीवानामित्यनुवर्त्तते । अतः मूलप्रकृतेराधारत्वाधेयत्वयोरश्रुतत्वात्पुनःपृच्छति । सर्वाधारंसर्वाधारप्रकृ

---

उप० ॥ योविज्ञानेतिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानꣳशरीरंयोविज्ञानमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ २२ ॥ योरेतसितिष्ठन्रेतसोंतरोयꣳरेतोनवेदयस्यरेतःशरीरंयोरेतोंतरोयमयत्येषतआत्मांतर्याम्यमृतोऽदृष्टोद्रष्टाऽश्रुतःश्रोताअमतोमंताअविज्ञातोविज्ञातानान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतानान्योतोस्तिमंतानान्योतोस्तिविज्ञातैषतआत्मांतर्याम्यमृतोतोन्यदार्ततत्तोहोद्दालकआरुणिरुपरराम॥२३॥इत्यंतर्यामिब्राह्मणं७

भाष्यं ॥ पूर्वंगार्ग्याजीवानामुत्तरोत्तराश्रयत्वंसर्वेषांभगवदाश्रयत्वंचश्रुतं । नतुमूलप्रकृतेराधारत्वमाधेयत्वंवा । अतःपुनःपृच्छति ।

त्साधारंचेतिशेषः । पृच्छगार्गीतिब्राह्मणानुज्ञयाप्रश्नकरणेनिमित्तमाह ॥ विजिगीष्विति ॥ गार्गीब्राह्मणानुज्ञयायाज्ञवल्क्यं पृच्छति । अस्याःकथायाःविजिगीषुकथात्वात् गार्ग्याःपूर्वंपराजितत्वात् । विजिगीषुकथायामेकपराजयेकथायाःपरिसमाप्तत्वेनतस्यानुज्ञांविनाप्रश्नस्याकर्तव्यत्वादितिभावः । ननुयाज्ञवल्क्येनब्राह्मणैःसहक्रियमाणकथाविद्यापरीक्षार्थेत्युपक्रमपर्यालोचनयासिद्धं । विद्यापरीक्षाचवादेनैव । वादेनचोच्चनीचत्वविज्ञानंभवतिस्फुटं । इतिवादस्यपूर्वत्वमित्यनुव्याख्यानेऽभिधानात् । तथाचविजिगीषुकथात्वादितिकथमुच्यते । तथात्वेजल्पत्वप्राप्त्याविद्यापरीक्षार्थत्वानुपपत्तेरितिचेन्न । विजिगीषुकथात्वेजल्पत्वं स्यादिति किंविद्यापरीक्षार्थायाःकथायाजल्पशब्दवाच्यत्वमापाद्यते किंवावादशब्दवाच्यत्वाभावः यद्वासमाहाररूपंकथांतरं अथवानिमित्तद्वयसमावेशेवादशब्दस्यैवव्यवहारानुपपत्तिः । नाद्यः । जल्पशब्दप्रवृत्तिनिमित्तसत्वेनइष्टत्वात् । नद्वितीयः । तत्वनिर्णयार्थत्वलक्षणवादशब्दप्रवृत्तिनिमित्तसत्वात् । नापितृतीयः । तुलायांप्रमाणप्रमेयशब्दप्रवृत्तिवदुपपत्तेः । अन्यथातुलाया अपिप्रमाणप्रमेयादितोविधांतरतापत्तेः । नापिचतुर्थः । निमित्तद्वयसमावेशेपिअस्यांकथायांवादशब्दप्रवृत्तिनिमित्तस्यैवमुख्यत्वेनवादशब्दस्यैवव्यवहारोपपत्तेः । कथकौयद्यप्यादितोविजिगीषू तथापिसभ्यादिभिर्विजिगीषांपरिभाव्योत्पादितातत्वनिर्णयार्थितैवकथोपयोगिनीतिवादशब्दप्रवृत्तिनिमित्तंहिमुख्यमितिसुधायामेवजल्पइत्यपिनामस्याद्वादस्यैतादृशस्यत्वित्यनुव्याख्यानव्याख्यानावसरेकथितत्वात् । ननुगार्ग्यायाज्ञवल्क्येनाक्रियमाणायाःकथायाःविजिगीषुकथात्वंनयुज्यते । गार्ग्यास्तत्स्त्रीत्वेनगोग्रहण

भाष्यं ॥ विजिगीषुकथात्वाद्ब्राह्मणाद्यनुज्ञया ।

निमित्तमात्सर्यायोगात् । तदीयविद्याधिक्यज्ञानाच्चतद्विजिगीषाभावादित्यतआह ॥ स्वभर्तुरिति ॥ चशब्दोऽवधारणे । आत्मनस्तत्वनिर्णयार्थंतेषामुपकारार्थंचेतिवा । यद्यपिस्वभर्तुर्याज्ञवल्क्यस्यविद्याबलंजानात्येवगार्गीतिनतस्यातद्विजिगीषास्ति । समविद्ययोरेवविजिगीषावत्त्वात् । तथापियद्ययंमदीयप्रश्नोत्तरंप्रयच्छति । तर्हियुष्माकमयंजेतुंनशक्यइतिज्ञापयित्वा तेषांब्राह्मणानामुपकारार्थंपप्रच्छ । तथाज्ञापनमेवतेषामुपकारइतियावत् । आत्मनस्तत्वनिर्णयार्थंच स्वस्यांविजिगीषाध्यारोपणेनपप्रच्छेत्यर्थः । किंचगार्ग्यास्वस्याःपूर्वंपराजितत्वमभ्युपेत्यैवपुनःप्रश्नार्थंब्राह्मणानुज्ञाप्राप्ता । वस्तुतःतस्याःपराजयएवनास्तीतिपुनःप्रश्नोयुक्तइत्याशयेनाह ॥ **नचेति** ॥ युक्त्योपरतत्वंहिपराजयः । नचसायुक्त्यापूर्वमुपरता । अतःपराजयाभावात्पुनःप्रश्नोनानुपपन्नइतिभावः । तर्हिकथमुपरतेत्यतआह ॥ **भार्यात्वादिति** ॥ अन्येषामविद्यमानाभीतिरस्याःकुतइत्यतउक्तं ॥ **भार्यात्वादिति** ॥ ननुयदितत्रभीत्यैवोपरता । तर्ह्यत्रब्राह्मणेकुतोभगवतोऽन्याधारत्वंनशंकनीयमितिप्रश्नस्तत्परिहारश्चकर्तव्यइत्यतआह ॥ **भगवतइति** ॥ तथाचनतत्प्रश्नावकाशइतिभावः । यद्वाभगवतोऽन्याधारत्वंपश्चाद्युक्त्यानिवारितंकिमित्यतआह ॥ **भगवतइति** ॥ अथवाकस्मिन्खलुप्रजापतिलोकाओताश्चप्रोताश्चेतिप्रश्नेब्रह्मलोकेषुगार्गीतिवत्कस्मिन्खल्वाकाशओतश्चप्रोतश्चेतिप्रश्नेएतस्मिन्खल्वक्षरेगार्गीत्येवोक्तं । तत्रपूर्वंभगवतोन्याधारत्वंनशंकनीयमित्यनुक्तत्वात् कस्मिन्खलुब्रह्मलोकाओताश्च

---

भाष्यं ॥ स्वभर्तुर्विद्याबलंजानंत्यपियुष्माकमयंजेतुंनशक्यइतिज्ञापयित्वातेषामुपकारार्थंचपप्रच्छ । नचयुक्त्यापूर्वमुपरता । भार्यात्वाद्भगवतोन्याधारत्वंनाशंक्यमित्युक्तेभीत्यैवोपरता । भगवतोन्याधारत्वंचसर्वाधारमूलप्रकृतेरपि

प्रोताश्चेतिप्रश्नः कृतः अत्रतु अनतिप्रश्नयांवैदेवतामतिपृच्छसीतिभगवतोऽन्याधारत्वंनशंकनीयमित्यनुपदमुक्तत्वेनतदक्षरेकस्मि
न्नोतंचप्रोतंचेतिप्रश्नमकृत्वैवोपरतेत्येवविशेषः । युक्त्यनुक्तेरुभयत्राविशिष्टत्वात् । तथाचकिमुच्यतेपूर्वंभीत्यैवोपरतेतितत्राह ॥
भगवतइति ॥ अन्यआधारोयस्यसः अन्याधारः तस्यभावः अन्याधारत्वं । युक्तितएवेति । भगवान् अन्याधारकोनभवति
सर्वाधारप्रकृत्याधारत्वात् । व्यतिरेकेणदेवदत्तवदितियुक्तितः । नतुपूर्ववदित्यत्रापिभयदर्शनेनेत्यर्थः । नचात्रसर्वाधारेतिप्रकृ
तिविशेषणंव्यर्थमितिवाच्यं । यदिविष्णोरन्यआधारः स्यात्तर्हिविष्णवाश्रितायाः प्रकृतेर्विष्ण्वाधाराश्रयत्वासंभवेनविष्णुः स्वव्यति
रिक्तसर्वाधारत्वंनस्यादितिविपक्षेबाधकतर्कसूचकतयाऽप्रयोजकत्वशंकापरिहारार्थत्वात् । भगवतोऽन्याधारत्वाभावेयुक्त्यंतर
माह ॥ नान्यदिति ॥ भगवतोऽन्याधारत्वंनिवारितंइतिसंबंधः । यदिभगवानन्याधारकः स्यात्तदातस्यैवाधारभूतस्यस्वतंत्र
द्रष्टुः सत्वेननान्यदतोस्तिद्रष्टृत्यादितन्निषेधोऽयुक्तः स्यादित्यर्थः । उपसंहारस्योपक्रमापेक्षयाप्राबल्येनोपसंहारवाक्योक्तयुक्तीरु
क्त्वोपक्रमवाक्योक्तयुक्तीराह ॥ अस्थूलत्वादीति ॥ पूर्ववत्संबंधः । स्वतइतिशेषः । तेनास्थूलत्वस्यहेतुत्वेसूक्ष्मपदार्थेऽसूक्ष्म
त्वस्यहेतुत्वेस्थूलपदार्थेश्रीतत्वेवानव्यभिचारः । विजिगीषुकथात्वाद्इत्युक्तंतत्रकथास्वरूपजिज्ञासायां तत्प्रपंचनार्थउत्तरोग्रंथसं
दर्भः तत्रादौकथांविभागेनोद्दिशति ॥ वादइति ॥ तत्वनिर्णयैकप्रयोजनत्वेनाभ्यर्हितत्वाद्वादस्यप्रथममुद्देशः । उभयसाधन
वत्तयासदधिकारितयाचवादसाम्यात्तदनंतरंजल्पस्य । परिशेषाद्वितंडायाः । कथकभेदेनकथानंत्यात्तत्तल्लक्षणोपाधिक्रोडीकृत

भाष्यं ॥ भगवानेवाधारइत्युक्तयुक्तितएवनिवारितंभवति । नान्यदतोस्तिद्रष्टृत्यादियुक्तिभिश्च । अस्थूलत्वादियुक्तिभिश्च । वादोजल्पोवितंडेति

राशित्रयविवक्षयात्रित्वमितिदर्शयितुंत्रिविधेतिधालूप्रयोगः । ननुसामान्यलक्षणाभिधानेनविनाकथंविभागोदेशावसरः । अव
च्छेदकैक्येनैक्यमापन्नंहिवस्तु विभज्योद्देष्टव्यं । अथकथाशब्दंवाक्यप्रबंधेव्युत्पादितंसिद्धवत्कृत्यनपृथक्सामान्यलक्षणमुच्यत
इतिचेत् । न । तर्हिभारतादीनामपिवाक्यप्रबंधत्वेनकथात्वात्कथंकथात्रैविध्यं । नहितानिवादादिष्वंतर्भवंतीत्यतःसामान्यल
क्षणमाह॥ विदुषामिति ॥ ननुविदुषामितिकथंबहुवचनं । वादेबहूनामप्यधिकारादितिचेन्न । नियामकाभावात् । जल्पवितंडयो-
र्द्वयोरेवाधिकाराच्चेतिचेन्न । अनंतासुकथासुप्रत्येकंवादित्वप्रतिवादित्वावच्छिन्नाअनंताइत्यभिप्रेत्यबहुवचनप्रयोगात् । एतदभिप्रा
येणैवकथालक्षणटीकादौविदुषामितिजातौबहुवचनमित्युक्तं । अत्रकथाशब्दआवर्तनीयः । तत्रैकोरूढ्यालक्ष्यपरः । अपरस्तु
योगेनवाक्यप्रबंधपरः । विचारगोचरेत्युपस्कर्तव्यं । तेनानेकविद्वत्कर्तृकविचारगोचरवाचकप्रबंधःकथा । सावादादिभेदेनत्रि
विधेत्युक्तंभवति । अत्रवैदुष्यंकथासहावाक्यार्थनिर्वाहकत्वं । अनेनस्वस्थः सर्वजनप्रत्यायनावलंबीसावधानः अकलहकारश्चे
त्यादयःकथकादर्शिताः । पूर्वोत्तरपक्षबलाबलचिंताविचारः । अत्रानेकवक्तृकत्वोक्त्यैकवक्तृकेभ्योमीमांसावाक्येभ्योव्युदासः ।
वैदुष्योक्त्याकलहादिभ्यः विचारगोचरत्ववचनेनविदुषामन्योन्यंसुखव्यवहारेभ्यः। कथायाथात्म्यविदुषांमतेनत्रिविधेतिवा ।
तेनैकएवकथामार्गइतिबाह्याः(बौद्धाः) । वादवितंडेद्वेएवेतिश्रीहर्षः । वादोजल्पोवादवितंडाजल्पवितंडाचेतिचतस्रःकथाइति
गौडनैयायिकाः । तेसमस्तानिरस्ताभवंति । तत्रयथोद्देशंवादलक्षणमाह ॥ केवलमिति ॥ अत्रकेवलंतत्वविज्ञानमुद्दिश्यक

भाष्यं ॥ त्रिविधाविदुषांकथा । केवलंतत्वविज्ञानमुद्दिश्यगुरुशिष्ययोः ।

थावादइत्येकंलक्षणं । तत्वंप्रमाणप्रमितंवस्तु तस्यविज्ञानमज्ञातज्ञानंसंशयविपर्ययव्युदासोऽभ्यनुज्ञानेनदृढीकरणंचेतित्रिविधं ।
अत्रतत्वविज्ञानहेतुःकथावादइत्येवोक्तेजल्पविशेषेऽतिव्याप्तिःस्यात् । तथाहि । यदाहिख्यात्याद्यर्थयमानौविजिगीषूसद्भावमेव
साधनदूषणाभ्यांस्वपरपक्षसाधनोपालंभौकुर्वातेसजल्पोपिभवतितत्वविज्ञानहेतुः । नह्यसदेवजल्पेवक्तव्यमितिनियमः । प्रती
यमानसदतिक्रमेकारणाभावात् । किंनामसदपरिस्फूर्तौनिश्चितपराभवात्वरंपाक्षिकविजयइतिमन्वानोऽसदप्युपादत्ते । नचस 399
त्साधनंतत्वविज्ञानंनजनयतीतियुक्तं । व्याघातात् । अतस्तत्रातिव्याप्तिपरिहारायोद्दिश्येत्युक्तं । नहितत्वनिर्णयहेतुरपिजल्पः
तदुद्देशेनक्रियते । तत्वविज्ञानमुद्दिश्यकथावादइत्येवोक्तेवितंडाविशेषेतिव्याप्तिः । तथाहि । यदिस्वयमव्यवसितार्थःकारुणि
कतयापाषंडिप्रसंजितौलोकस्यसंशयविपर्ययौपराकर्तुंतद्विजिगीषयावितंडामारभते सापितत्वविज्ञानमुद्दिश्यकथाभवत्येव । अ
तस्तत्रातिप्रसंगपरिहारायकेवलमित्युक्तं । ननुयाकथालोकसंशयविपर्ययनिरासंख्यात्यादिकंचोद्दिश्यप्रवर्तते । ततोनेनव्युदासो
भवेत् । यातुकेवलंसंशयाद्यपाकरणार्थैव कथंततोव्यावृत्तिः । केवलंतत्वनिर्णयहेतुःकथावादइत्येतावतैवसदुपायजल्पव्यवच्छे
दसिद्धेरुद्देशग्रहणंचव्यर्थंस्यादितिचेन्न । केवलशब्दस्यसाक्षादर्थत्वात् । नहिकापिवितंडासाक्षात्तत्वनिर्णयंकरोति । किंतुपरप
राभवद्वारैव । विवक्षितकेवलशब्दार्थस्यसदुपायजल्पेपिसत्वेनतद्व्यवच्छेदायोद्देशग्रहणस्यापिसार्थकत्वात् । ननुकथककगततत्व
विज्ञानविवक्षयालक्षणेव्याख्यातेवितंडायांप्रसंगएवनास्तीतिकेवलग्रहणमनर्थकमितिचेन्न । तथात्वेयदाविदिततत्वावदुष्टमन
सौपरप्रार्थितौकथांकुरुतस्तस्यांवादकथायामव्याप्त्यापत्तेः । द्वयोस्तत्वविज्ञानितयातदुद्देशित्वाभावादिति । निर्दुष्टमनसांकथा

वादइत्यपरंलक्षणं । निर्दुष्टमनसश्च प्रकृतोक्तिका अविप्रलंभका यथाकालस्फूर्तिका अनपेक्षकाः प्रमाणसिद्धसंप्रत्यायिनश्चेत्यादयः । एवंभूताश्चगुरुशिष्यादयएवप्रायेणेतितएवदर्शिताः । गुरुशिष्ययोरन्ययोःसखिसब्रह्मचारिणोरिति वादेजल्पादिवत् एकएववादीप्रतिवादीचेतिनियमोनास्तीतिदर्शयितुंवहूनांवेत्युक्तं । सखिसब्रह्मचार्यादीनामित्यर्थः । सद्भिरित्युच्यतइत्युक्त्या स्वोक्तलक्षणस्यप्रामाणिकत्वमुक्तं । ननुवादस्यजयहेतुत्वसप्यस्तीतिकेवलतत्वविज्ञानहेतुत्वाभावादसंभवाद्यंलक्षणमित्यतआह ॥ जयइति ॥ तत्रवादेजयअर्थिकोनतूद्देश्यःलक्षणेचकेवलंतत्वविज्ञानमुद्दिश्येत्युक्तमतोनासंभवइत्यर्थः । वादेआर्थिकजयेसतिकिंस्यादित्यतआह ॥ विजयइति ॥ अन्येषांपराजितानां संवादंकुर्वतां जयिनःशिष्यतास्यात् । जयिनःपूजा चशब्देनगुरुत्वंच । यदायदाजयस्तदातदापूजादिकार्यमेवेतिभावेनसदेत्युक्तं । ननुविजयेशिष्यतान्येषामित्याद्युक्तंअयुक्तं । वादिप्रतिवादिनोरन्यतरविजयमात्रेणवादावसानाभावात् । तत्वनिर्णयार्थस्यवादस्यतस्मिन्सत्येवावसनात् । एकपराजयमात्रेणकथानिवृत्तौपुनस्तस्यैवान्येषांवासाधनांतरादिस्फुरणेनसंदेहावस्कंदनेतत्वनिर्णयाभावादित्यतआह ॥ पुनश्चेति ॥ सत्यदि तेषांपराजितानां । उपलक्षणमेतत् । अन्येषांचेत्यपिग्राह्यं । तस्यापिसंशयस्यापि । ननुतेषामितिसामान्येनोक्तेःस्वयमेवसंशयनिराकरणसमर्थस्यापिसंशयवारणं जयिनाकर्तव्यंकिमित्यतआह ॥ अशक्तस्येति ॥ अधिकादितिल्यब्लोपनिमित्तापंचमी । स्वतोधिकं

---

भाष्यं ॥ अन्ययोर्वाबहूनांवानिर्दुष्टमनसांकथा । वादइत्युच्यतेसद्भिर्जयस्तत्रार्थिकोभवेत् । विजयेशिष्यतान्येषांपूजाचजयिनःसदा । पुनश्चसंशयोयत्स्यात्तेषांतस्यापिवारणं । कर्तव्यंजयिनानित्यमशक्तस्यस्वतोधिकात् ।

विहाय । संशयनिवारणाशक्तस्यसंशयवारणंजयिनाकर्तव्यमितिसंबंधः । तथाचनिस्संदिग्धतयातेनैवान्येषांतत्वविनिर्णयेनकथावसानेऽन्येषांतच्छिष्यत्वादिकमितिभावः । भवतुयदाएकेनैवाऽपरस्यतत्वनिर्णयस्तदातस्यगुरुत्वमपरस्यशिष्यत्वं । यदातुएकस्यैवतत्वंपरस्परंनिर्णीयतेतदाकथमित्यतआह ॥ अन्योन्येति ॥ चेत् यदि । तदातेसब्रह्मचारिणएवस्युर्नतुगुरुशिष्यभावोपेताइत्यर्थः । ननुविप्रतिपन्नप्रमेयेप्रतिवादिनाप्रमाणेपृष्टेवादिनाकिंप्रमाणंवक्तव्यं । यत्रयदस्तितत्रतदेवेतिचेत् सत्यं । प्रमाणसंप्लवेकथं किंसर्वमेवोतैकमेव तत्रापिकिमित्यपेक्षायामाह ॥ पृष्टेनेति ॥ शुभमेवमानंवक्तव्यं तस्यैवसाध्यसाधकत्वादितिभावः । किंतच्छुभमशुभंचमानं यस्यवादेप्रयोगाप्रयोगनियमइत्यतआह ॥ वेदाइति ॥ सपंचरात्रमीमांसाश्चेतिचशब्दसंबंधः । सेतिहासपुराणकाःसपंचरात्रमीमांसाश्चसर्वेवेदाःशुभंमानं । अपौरुषेयत्वेनपुरुषदोषनिबंधनदोषशून्यत्वात् इतिहासादीनांचइतिहासपुराणःपंचमोवेदानांवेदइतिवेदेनैववेदसमानतयागृहीतत्वात् । स्मृतयश्चतदनंतरंशुभंमानं वेदसंवादित्वेनैवतस्यप्रामाण्यादित्यर्थः । अत्रसेतिहासपुराणकाःसपंचरात्रमीमांसाइतिसाहित्योक्त्याइतिहासादीनांवेदार्थनिर्णायकत्वमप्यस्तीतिसूचितं । यथोक्तं । इतिहासपुराणाभ्यांवेदंसमुपबृंहयेदिति । तदन्यत्तुदुरागमः । ननुप्रत्यक्षानुमानेकिंशुभमशुभंवा । नाद्यः । वेदाद्यागमस्यैवशुभमानत्वोक्तेः । वेदादिवन्निर्दोषत्वनियमाभावाच्च । नद्वितीयः । तथासतितस्याऽप्रमाणत्वप्रसंगादित्यतआह ॥

---

भाष्यं ॥ अन्योन्यनिर्णयश्चेत्स्यात्तदासब्रह्मचारिणः । पृष्टेनप्रथमंमानंवक्तव्यंवादिनाशुभं । वेदाःसर्वेशुभंमानंसेतिहासपुराणकाः । सपंचरात्रमीमांसाःस्मृतयश्चाप्यनंतरं । तदन्यदशुभंप्रोक्तंनप्रयोज्यंकथासुच ।

मिश्रमिति ॥ तुशब्दःप्रत्यक्षानुमानयोरागमाद्विशेषद्योतकः । प्रत्यक्षानुमानेतुमिश्रंमानं । वेदाद्यागममात्रस्यप्रामाण्यनियमवत् दुरागममात्रस्याप्रामाण्यनियमवच्चप्रत्यक्षानुमानमात्रस्यप्रामाण्याप्रामाण्यनियमाभावादिति । ननुपरश्चक्षुराद्येकप्रमाणकेकेवलानुमानविषयेचार्थेप्रमाणंपृच्छेत् । तदाऽपरेणकिंतूष्णीमासितव्यंकिंवाप्रत्यक्षादिकमेववक्तव्यं । आद्येसाध्यासिद्धिः । द्वितीयेशुभमेवमानंवक्तव्यमितिनियमभंगः । वेदाद्यागमस्यैवशुभमानत्वोक्तेरित्यतआह ॥ अक्षानुमानेतुग्राह्येइति ॥ तुशब्दश्चशब्दार्थः । ग्राह्ये तदेकप्रमाणकेप्रमाणप्रश्ने । तत्साधकत्वेनेतिशेषः । नचोक्तविरोधः । प्रमाणसंप्लवएवागमनियमस्योक्तत्वादितिभावः । नकेवलमेतदर्थमेवप्रत्यक्षानुमानेग्राह्ये । किंतुसाध्यसिध्यर्थमागमेवादिनाप्रयुक्तेप्रतिवादिनाचतस्यान्यार्थेऽभिहितेवादिनापिमदुक्तएवार्थोनन्नत्वदुक्तइत्युक्तेवाक्यार्थविप्रतिपत्तौसत्यांतन्निर्णयेचेत्याशयेनोक्तं ॥ शब्दार्थनिर्णयइति ॥ चशब्दार्थकतुशब्दस्यात्रापिसंबंधः । एतदभिप्रायेणैवप्राक्प्रथममित्युक्तं । प्रकृताक्षानुमानयोर्लक्षणमाह ॥ अदुष्टमिति ॥ येनोपहतमिंद्रियादिकंज्ञानंनजनयति विपरीतज्ञानंचोत्पादयतितद्रहितमदुष्टं । इंद्रियमितिज्ञानेंद्रियमेवगृह्यते प्रमाणप्रकरणत्वात् तुशब्दोविशेषार्थः । सेतिकर्तव्यताकंकारकंकरणं । करणविशेषश्चात्रप्रत्यक्षादिकमेवेति । यद्यपिप्रत्यक्षस्यैवलक्षणंवक्तव्यं तथापिअत्रकरणधर्मिणःप्राधान्यात्प्रत्यक्षधर्म्यक्षमेवनिरूपितं । पूर्वंतुव्यापारप्राधान्यविवक्षयानिर्दोषेंद्रियसंयोगइत्युक्तं । तथा अदुष्टोपपत्तिरनुमा । ननुअभावार्थापत्यादीनामपिमिश्रप्रमाणांतराणांसत्वात्कथमक्षानुमानेमिश्रंमानमित्युक्तमित्यतआह ॥

भाष्यं ॥ मिश्रमक्षानुमानेतुग्राह्येशब्दार्थनिर्णये । अदुष्टमिंद्रियंत्वक्षमुपपत्तिस्तथानुमा ।

अनुमैवेति ॥ अभावाख्यस्त्विवतितुशब्दसंबंधः । सचप्रत्यक्षाद्यंतर्भूताऽभावप्रमाणापेक्षयाविशेषद्योतकः । यद्वातुशब्दश्चश ब्दार्थः । तेनप्रत्यक्षादिकंसमुच्चिनोति । एवकारःपृथक्प्रमाणत्वव्यावर्तकः । तथानुमैवेत्यर्थः । अभावप्रमाणादेरनुमानएवांत र्भावः कुतइत्यतआह ॥ उपपत्तीति ॥ वादिभिःपृथक्प्रमाणत्वेनांगीकृताअपि । तेअभावप्रमाणादयोखद्यस्मादुपपत्तिभेदाउ पपत्तिविशेषाः व्याप्तिमपेक्ष्यार्थगमकाइतियावत् । तस्मादनुमैवेतिसंबंधः । भावानुपलब्धिर्ह्यभावप्रमाणमंगीक्रियते साध्यर्थे लिंगमेवनपृथक्प्रमाणं कुतः । नह्यनुपलब्धिमात्रमभावगमकमंगीक्रियते । किंतुयोग्यानुपलब्धिः तत्रवक्तव्यं योग्यस्यानुपल ब्धिरितिकस्मादुच्यतइति । अनुपलब्धिमात्रस्यव्यभिचारादितिचेत् । तर्त्किंयोग्यानुपलब्धिरभावाव्यभिचारिणी । वाढमि तिचेद्धंततर्हिव्याप्तिसापेक्षार्थगमयतीत्यंगीकृतमित्यनुमानत्वमेव । अर्थापत्तिर्हिअन्यथानुपपत्तिसापेक्षा । साचकेनचिद्विनाक स्यचिदसंभवः । असंभवश्चनतावदनुत्पत्तिः । वहिर्भावादिनापिगृहाभावादेरजन्यत्वात् । अतोनवस्थानमेवासंभवइतिवाच्यं तस्यचव्याप्त्यपेक्षासर्वथांगीकार्या । केनचिद्विनाकस्यचिदनवस्थानस्यतयोर्व्याप्तिंविनानुपपत्तेः । ततश्चार्थापत्तिरप्यनुमानमेव । योयद्गतसादृश्यप्रतियोगीसततत्सदृशः । योऽगोत्वेसतिगोसदृशःअसौगवयशब्दवाच्यइतिव्याप्तिसापेक्षतयार्थगमकत्वात् उपमा नस्याप्यनुमानत्वमेवेति । आगमलक्षणमाह ॥ वाक्यमेवेति ॥ शुभंनिर्दुष्टं । वाक्यमेवागमः । चेष्टाव्यावृत्त्यर्थमेवकारः । ते नचेष्टासंग्रहायसमयबलेनसम्यक्परोक्षानुभवसाधनमागमइतिभासर्वज्ञोक्तंनिरस्तं । आगमशब्दस्यवाक्यएवरूढत्वात् चेष्टाया

भाष्यं ॥ अनुमैवत्वभावाख्योह्यथार्पत्त्युपमेतथा । उपपत्तिभेदायत्तेपिवाक्यमेवागमःशुभं ।

श्चानुमानेऽन्तर्भावात् । विजयेशिष्यतान्येषामितिवादेपराजितानांशिष्यत्वमुक्तं । तत्रकःपराजयहेतुरित्यतःप्रसंगात्सर्वकथासुप
राजयनिमित्तमाह ॥ तत्वनिर्णयेति ॥ तत्वनिर्णयवैलोम्यंवादिप्रतिवादिभ्यामभिलपितस्यतत्वनिर्णयस्ययावद्वैलोम्यंविरुद्ध
वचनमावरणंवा तत्सर्वं पराजयःपराजयहेतुर्वादइतिशेषः । विरोधितेसंवादःपराजयःपराजयहेतुः । जल्पवितंडयोरितिशेषः ।
वाशब्दोव्यवस्थितविभाषायां । अत्रसंवादइत्येववक्तव्येविरोधितेसंवादइतिवचनंसंवादलक्षणकथनार्थं । विरोधितेविप्रतिपन्ने
प्रमेये संवादोऽङ्गीकारःसंवादइति । उपलक्षणमेतत् । विरोधासंगत्यादिकमपिग्राह्यं । परपरिगणितनिग्रहस्थानेषुप्रथमंप्रतिज्ञा
हान्यंतर्भावाधिकरणत्वेनसंवादस्यस्ववचनेनग्रहणं । इतिप्रोक्तः प्रामाणिकैरितिशेषः । तेनपरोक्तमाश्रयासिध्यादीनांपराजय
हेतुत्वमसदित्युक्तंभवति । तत्वनिर्णयवैलोम्यंवादेसाक्षात्पराजयः । विरोधासंगतिन्यूनतूष्णींभावादिकैर्जितः । भवेज्जल्पइति
कथालक्षणानुसारेणैवंव्याख्यातं । यद्वोत्तरग्रंथानुसारेणतत्वनिर्णयवैलोम्यशब्देनार्थदोषयोर्विरोधासंगत्योस्तत्वनिर्णयविरोधि
शब्ददोषयोर्न्यूनाधिकयोश्चग्रहणं । विरोधितेसंवादइत्यनेनवक्तृदोषसंवादग्रहणं । चशब्दार्थकवाशब्दादनुक्तिसंग्रहः । अर्थ
लाभादिकंयथाजल्पवितंडयोरसाधारणंनतथापराजयइत्याह ॥ समइति ॥ चशब्दअभिव्याप्त्यर्थकापिशब्दार्थः । ननुवादादि
कथासुतत्वनिर्णयवैलोम्यादिकंप्राप्तवतःकिंकार्यमित्यतआह ॥ तत्वनिर्णयेति ॥ तत्वनिर्णयवैलोम्येप्राप्तेपियदिमतिमान्छ
लादिनातत्रसंवादंनकरोति तदावादकथास्वपिदंड्यः किमुवक्तव्यंजल्पवितंडयोर्विरोधादिनिग्रहस्थानंप्राप्तेनसंवादाकरणेसदंड्य

भाष्यं ॥ तत्वनिर्णयवैलोम्यंसंवादोवाविरोधिते । पराजयइतिप्रोक्तःसमःसर्वकथासुच । तत्वनिर्णयवैलोम्येदंड्योवादकथास्वपि ।

इतीत्यर्थः । केनदंड्यइत्यतआह ॥ गुरुणैवेति ॥ यदिवादकथासुतत्वनिर्णयवैलोम्यंप्राप्तोगुरुवश्यःसंवादंनकरोति तदागुरुणैवदंड्यः । नतुराज्ञा उपलक्षणमेतत् । जल्पवितंडयोःप्राश्निकादिनैवोक्तविधोवादीप्रतिवादीवादंड्यइत्यपिग्राह्यं । तदवश्यानां कथमित्यतआह ॥ अवश्यानामिति ॥ वादकथायांसभापतेरनंगत्वेपिगुरुणाराजानंप्रत्युक्त्वास्वावश्यानांतेनदंडःकारयितव्यइतिभावः । यथोक्तं । गुरुरात्मवतांशास्ताशास्ताराजादुरात्मनामिति । गुरुदंडोराजदंडश्चकीदृशइत्यतआह ॥गुरुदंडइति॥ अर्थदेहतः । अर्थापहारदेहताडनादिना । वाचैवगुरुदंडइतिननियमइत्याह ॥ गुरुदंडोपीति ॥ नकेवलंराजदंडोर्थतः । किंतु गुरोरर्थग्रहणविषयेशिष्यस्यसंवादेगुरुदंडोपीत्यपिशब्दार्थः । नकेवलंगुरुदंडोवाचा किंतुअर्थतोपीतिवासंबंधः । व्रततःउपवासादिलक्षणव्रततइत्यर्थः । अर्थतोगुरुदंडेयथासंवादापेक्षानियमस्तथाराजदंडे नसंवादापेक्षानियमइत्याह ॥ राजदंडइति ॥ चशब्दःसंवादसमुच्चायकः । अल्पमात्रेदोषेकृतेकिंसर्वोप्युक्तविधोदंडःकर्तव्यः नेत्याह ॥ दोषस्येति ॥ तत्वनिर्णयवैलोम्यादिकंप्राप्तोयदिसंवादंकरोतितदाकिंकार्यमित्यतआह ॥ संवादइति ॥ आदिपदेनवितंडाग्रहणं । चशब्दःकिमुवादकथायामितिकैमुत्यद्योतकापिशब्दार्थः । वितंडायांयदिवादीपराजितोसंवादयित्वातत्वविप्लवंकरोति तस्यसभापतिनाकर्तव्यविशेषमाह ॥

---

भाष्यं ॥ गुरुणैवत्ववश्यानांराजादंडंप्रयोजयेत् । गुरुदंडस्तुवाचास्याद्राजदंडोर्थदेहतः । गुरुदंडोप्यर्थतःस्यात्संवादेव्रततोपिच । राजदंडोबलाच्चस्याद्दोषस्यगुरुलाघवात् । संवादेदंड्यतानास्तिजल्पादौचकथंचन ।

तत्वविप्लवेति ॥ काकांकंकृत्वेतिशेषः । कस्तत्वविप्लवइतिजिज्ञासायामाह ॥ **अन्यसाम्यमिति** ॥ तद्भक्तेर्विष्णुभक्तेःसका
शात् । अन्यस्यइतरदेवताभजनादेर्धर्मत्वमित्यर्थः । तत्वविप्लवकर्तृणांसर्वेषांवर्णानामप्युक्तएवदंडःकिमितिजिज्ञासायांविशेष
माह ॥ **तत्वविप्लावकमिति** ॥ एवंप्रसक्तायांवितंडायांमूलपक्षग्रहापेतेतिलक्षणंवक्तुंतदुपयुक्तमाह ॥ **स्वसिद्धांतइति** ॥ उ
भाभ्यामितिशेषः । ननुवादेपरसिद्धांतदूषणंकेनकार्यं स्वसिद्धांतेचकिंप्रमाणंवक्तव्यमित्यतआह ॥ **अवाक्येति** ॥ परसिद्धां
तदूषणंहिपरोपन्यस्तप्रमाणदूषणं परोपन्यस्तंचप्रमाणंयदिवाक्यरूपं तदातस्यान्यार्थत्वमेववक्तव्यं नतुतर्कात् । वाक्याप्रामा
ण्यलक्षणंदूषणं वेदादिरूपवाक्यस्यापौरुषेयत्वादिनाप्रामाण्यनिश्चयात् । यथोक्तं । अन्यार्थएवागमस्यवक्तव्यःप्रतिवादिनेति ।
वाक्यभिन्नमनुमानादिकंचेत्परोपन्यस्तं तदातस्यदूषणंआभासत्वव्युत्पादनं तर्कात्प्रतिपक्षानुमानादेरित्यर्थः । यद्यपिपूर्वेणप्र
थमंसानंवक्तव्यंवादिनाशुभमित्युक्तं तथापितत्रावधारणाभावादत्रचतत्सद्भावान्नपुनरुक्तिः । प्रमाणसंप्लवएवेदंद्रष्टव्यं । तर्हि
अवाक्यदूषणंतर्कादित्यनुपपन्नं । वादिनास्वपक्षस्थापनायवाक्यभिन्नप्रमाणस्यावक्तव्यत्वेनप्रतिवादिनस्तद्दूषणप्रसक्तेरेवाभावा
दित्यतआह ॥ **वाक्यतात्पर्येति** ॥ ननुप्रमाणसंप्लवेयदिआगमादेवसाधनंकर्तव्यंतर्हितत्रतर्कादेःसर्वथोपयोगःकिंनास्तीत्यत

---

भाष्यं ॥ तत्वविप्लवकर्तारंसंसत्सुचपराजितं । छित्वाजिह्वांचकाकांकंराजाराज्याद्विवासयेत् । अन्यसाम्यमभेदोवानीचतावाकुतश्चन ।
विष्णोःश्रीपूर्वकाणांचव्यत्यासोगुणदोषतः । तद्भक्तेरन्यधर्मत्वंपंचैतेतत्वविप्लवाः । तत्वविप्लावकंशूद्रंवैश्यंक्षत्रियमेववा । हन्यादेवाविचारेणविप्रंजि
ह्वांतथोद्धरेत् । स्वसिद्धांतेप्रमाणंचपरसिद्धांतेचदूषणं । वक्तव्यमुभयंवादेजल्पेचेतिसतांमतं । अवाक्यदूषणंतर्कादागमादेवसाधनं ।

आह ॥ वाक्यतात्पर्येति ॥ यदावादिनाप्रतिवादिनावास्वपक्षस्थापनायागमेभिहितेतस्यपरेणान्यार्थत्वोक्तौत्वदुक्तएवार्थोनमदुक्तइत्यत्रकिंनियामकमित्याशंकायांस्वस्वाभिमतार्थेवाक्यस्यतात्पर्यंज्ञापयितुंअन्यद्वाक्यभिन्नमुपपत्त्यादिरूपंमानमिष्यते । तद्दूषणंचतर्कादिनाकर्तव्यं नचान्यथाआदावेवविप्रतिपन्नप्रमेयेअन्यन्मानंनैववक्तव्यमित्यर्थः । नन्वेवंवादजल्पयोर्भेदोनस्यादित्यतोजल्पलक्षणमाह ॥ सतोरेवेति ॥ यदासतोस्तत्वज्ञानयोग्ययोः स्वभावतःस्पर्धाशून्ययोः । गुणतोयोग्यताधिक्यादिगुणैः स्पर्धैव स्पर्धानिमित्तकपरपराभवमात्रोद्देशस्तदायाकथासजल्पःसमुद्दिष्टः । अर्थार्थमेवअर्थोद्देशेनैववा याकथा सजल्पइतियोज्यं । अर्थार्थमितिख्यात्याद्युपलक्षणं । एवशब्देनतत्वनिर्णयव्यवच्छेदः । ननुपरपराभवार्थख्यात्यादीनिसमस्तानिव्यस्तानिवोद्देश्यानि । नाद्यः । एकैकोद्देशेनप्रवृत्तकथाऽव्यापनात् । नद्वितीयः। परस्पराव्याप्तेः । मैवं । तत्वनिर्णयातिरिक्तफलोद्देशेनसतोःकथाजल्पइतिलक्षणार्थत्वात् । यथोक्तं तत्वाप्रकाशएवैकोवितंडाजल्पयोःफलमिति । फलांतरंचपरपराभवादिकमितितद्ग्रहणं । सतोःकथावादोपिभवतीतितद्व्युदासायस्पर्धाद्युक्तिः । वादविशेषोप्यानुषंगिकख्यात्यादिहेतुर्भवतीतितद्व्युदासायोद्देशग्रहणं । वितंडाव्यावृत्त्यर्थंसतोरित्युक्तं । किंचवादेगुरुशिष्यादयोऽसमानविद्याअपिअधिक्रियंते । तत्वनिर्णयार्थित्वात् । जल्पेतुसंभावितसमानविद्ययोरेवाधिकारः । ययोरेवसमंवित्तययोरेवसमंश्रुतं । तयोर्विवाहोवादश्चनोत्तमाधमयोःक्वचिदितिस्मरणात् । वादोजल्पवितंडालक्षणः । अन्यथाअत्यंताप्रकृष्टोपिउत्कृष्टतमेनवैयात्यात्घटमानोयदिदैवात्तमभिभावयेत् । यदिवावृथा

भाष्यं ॥ वाक्यतात्पर्यविज्ञस्यैमानमन्यन्नचान्यथा । सतोरेवयदास्पर्धागुणतोर्थार्थमेववा । तदाजल्पःसमुद्दिष्टः

ख्यातिंलभेत तदाप्राश्निकादीनामज्ञत्वंप्रत्यवायश्चस्यात् । अपूज्यःपूज्यतेयत्रेत्यादिवचनात् । एवंचवादाज्जल्पस्यभेदसिद्धिरि
तिवक्तुंतत्रादौपरबुद्धेरप्रत्यक्षत्वेनविद्यासाम्यादेर्ज्ञातुमशक्यत्वात्कथंविद्यासाम्यादिनिश्चयइत्यतआह ॥ तत्रेति ॥ तत्रजल्पे ।
तयोर्जल्पार्थिनोर्विद्यांपरीक्षयेदित्यर्थः । जल्पलक्षणपर्यालोचनयापितत्रविद्यापरीक्षणमावश्यकमितिभावेनतस्यलक्षणांतरमाह
॥ विद्येति ॥ विद्यापरीक्षापूर्वाकारणभूतायस्याःसातथोक्ता । हिशब्दोहेतौ । तस्मात्तत्रविद्यांपरीक्षयेदितिसंबंधः । सतोःक
थासत्कथा । वादव्यावृत्त्यर्थंविद्यापरीक्षापूर्वेति । वितंडाव्यावृत्त्यर्थंसतोःकथेति । उच्यतेप्रामाणिकैरित्यनेनजल्पनिराकरणोप
पत्तेराभासत्वमभिप्रैति । विद्यांपरीक्षयेदित्युक्तं तत्रकेपरीक्षणकाःकिंलक्षणकाःकियंतश्चेतिजिज्ञासायामाह ॥ सर्वज्ञाइति ॥
परीक्षकास्तुप्राश्निकाइतिसंबंधः । सर्वज्ञाइतिवैष्णवाइतिप्राश्निकानांलक्षणं । सर्वज्ञशब्देनवादिप्रतिवादिदर्शनस्यकथोपयुक्त
व्याकरणादेश्चसंग्रहः । तदज्ञत्वेऽपसिद्धांताद्युद्भावनेननिर्णयोनस्यात् । वैष्णवाविष्णुभक्ताः । अन्यथाकथकसदसद्भावाविवे
केनकथाव्यवस्थापनाद्ययोगात् । रागद्वेषविहीनाइत्यपिग्राह्यं । रागित्वेऽसंतमपिपक्षंसंतंब्रूयुः । द्वेषित्वेसंतमप्यसंतंब्रूयुरिति ।
अतएवोभयसंमताः त्रयइत्यपिग्राह्यं । यथालब्धाअधिका विषमसंख्याकाः विषमसंख्याकत्वेहितेषामेवपरस्परविरोधेबहूनांसं
वादेननिर्णयःस्यात् । यथोक्तंद्वैधेबहूनांवचनमिति । उपलक्षणमेतत् । अशेषसंशयच्छेत्तानिःसंशयउदारधीः । एकोपिप्राश्नि

भाष्यं ॥ तत्रविद्यांपरीक्षयेत् । विद्यापरीक्षापूर्वाहिसत्कथाजल्पउच्यते । सर्वज्ञावैष्णवाःपंचसप्तवोभयसंमताः । अधिकावायथालब्धाः
प्राश्निकास्तुपरीक्षकाः ।

कोज्ञेयः । परीक्षिकेषुप्राश्निकशब्दंनिर्वक्ति ॥ उभयोरिति ॥ वादिप्रतिवादिनोः उभौप्रतीतियावत् । प्रश्नशब्दात्तत्रनियुक्त
इत्यर्थेठक्किकृतेतस्येकादेशे किति चेतिवृद्धौयस्येतिचेतिअकारलोपेप्राश्निकाइतिरूपंनिष्पन्नं । ननूक्तविधप्राश्निकानामभावेकी
दोषइत्यतआह ॥ तदभावइति ॥ उक्तप्राश्निकाभावेवादिप्रतिवादिनौपृथग्जनेमूर्खेऽविद्यमानमपिगुणोद्रेकंदर्शयेतां । ततश्च
विद्यासाम्याद्यनिश्चयेनजल्पप्रवृत्तिरेवनस्यादित्यर्थः । एवंयदर्थंविद्यांपरीक्षयेदित्युक्तंतदाह ॥ विद्यासाम्यइति ॥ कथाजल्प
लक्षणा । अन्यथाविद्यावैषम्ये एकस्यविद्याहीनस्यपराजयः विद्याहीनःपराजितोपियद्युच्चेनसहप्रतिवादित्वेच्छयातच्छिष्यत्वंन
प्राप्नुयात् तदातस्यकर्तव्यमाह ॥ विद्योनइति ॥ यथावादेतत्वनिर्णयोद्देशेनप्रवृत्तेविद्योनोयद्युच्चस्यशिष्यतांनव्रजेत् ।
तदादंड्यस्तथात्रापि । पश्चात्परीक्षानंतरं निश्चितविद्योनोयद्युच्चस्यशिष्यतांनव्रजेत्तदादंड्यइतिसंबंधः । विद्यासाम्येकथाकार्येत्युक्तं
ततःकिमित्यतोवादाज्जल्पस्यभेदसिद्धिरितिभावेनाह ॥ एवमिति ॥ जल्पःएवंसंभावितसमानविद्याधिकारिकःप्रकीर्तितः । वाद
स्तुनैवं । अतश्चतयोर्भेदसिद्धिरितिभावः ॥ वादात्जल्पस्यभेदकांतरमाह ॥ अर्थेति ॥ वादेत्वितितुशब्दसंबंधः । वादेएकस्यज
येपिपराजितेनपुनःप्रश्नःकर्तव्यः । तत्वनिर्णयहेतुत्वाद्वादस्य एकपराजयेपिपुनस्तस्यैवसाधनांतरादिस्फुरणेनसंदेहावस्कंदनात्तत्व

---

भा० । उभयोःप्रश्नकर्तृत्वात्प्राश्निकाइतिकीर्तिताः । तदभावेगुणोद्रेकंदर्शयेतांपृथक्जने । विद्यासाम्येकथाकार्याह्यन्यथैकपराजयः । वि

द्योनोदंड्यएवस्याद्वादिनोच्चस्यशिष्यतां । व्रजेत्पश्चाद्यथावादएवंजल्पःप्रकीर्तितः । अर्थनिर्णयहेतुत्वाद्वादेप्रश्नोजयेपितु । नजल्पेतुपुनःप्रश्नः

निर्णयस्यानुत्पन्नत्वादितिभावः । जयइत्युत्तरत्रापिसंबध्यते । जयैकार्थत्वाज्जल्पस्यतस्मिञ्ज्ञातेप्रश्नस्यवैयर्थ्यादितिभावः । ननु जयेसतिनजल्पेतुपुनःप्रश्नइत्युक्तंअयुक्तं। जल्पेपराजितयापिवाचक्नव्यायाज्ञवल्क्यंप्रतिपुनःप्रश्नस्यकृतत्वादित्यतआह ॥ सभ्यानुज्ञांविनेति ॥ प्रकृतेचसभ्यानुज्ञास्त्येव पृच्छगार्गीतिब्राह्मणैरुक्तत्वात् । अतएवपूर्वविजिगीषुकथात्वाद्ब्राह्मणानुज्ञयेत्युक्तंवितंडालक्षणमाह ॥स्पर्धेति॥ यदासतांतत्वविप्लावकैःस्पर्धा तदासाकथावितंडा। जाताविदंबहुवचनं जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामित्युक्तेः। नन्वेवंजल्पवितंडयोःकोभेदः। उभयोरपिस्पर्धापूर्वकत्वाविशेषात्। कर्तृभेदेनकथाभेदेऽतिप्रसंगादित्यतःस्वसिद्धांतेप्रमाणंचेत्यादियदर्थमुक्तंतल्लक्षणांतरमाह॥मूलपक्षेति॥ स्वपक्षस्थापनाहीनेत्यर्थः।कथेतिशेषः।कविभिर्मतेतितस्यप्रामाणिकत्वमुक्तं। ननुवादिप्रतिवादिनोरुभयोरपिवितंडायांस्वपक्षस्थापनाहीनत्वमयुक्तं । दूष्यपक्षाभावेनवितंडायाएवाप्रवृत्तेः। अतअन्यतरस्यैवतदितिस्वीकर्तव्यंतत्कस्येत्यतआह ॥ सतामेवेति ॥ वितंडापरपक्षदूषणमित्यर्थः । वितंडैवेतिप्रथमैवकारसंबंधः। असतांत्वितितुशब्दसंबंधः । जल्पः स्वपक्षसाधनपरपक्षदूषणात्मकः। एवमसंकरेणकथामार्गत्रयंप्रतिपादितं। तत्रयदुक्तंगौडनैयायिकेनजल्पवितंडेतिकथांतरमस्तीति तदसत् । वितंडायाएवोक्तविवक्षयाजल्पवितंडत्वेनतदतिरिक्तजल्पवि

---

भा० । सभ्यानुज्ञांविनाभवेन् । स्पर्धासतांवितंडास्यात्तत्वविप्लावकैर्यदा । मूलपक्षग्रहापेतावितंडाकविभिर्मता । सतामेववितंडास्यादसतांजल्पएवतु ।

तंडायांमानाभावादितिभावेनाह ॥ एवमिति ॥ उभयोरितितृतीयार्थेषष्ठी । कथावितंडैव हि यस्मादेवमुक्तप्रकारेण जल्पोवितंडेत्युभाभ्यांसहिता तस्मादेवजल्पवितंडेत्युच्यते नतुजल्पवितंडानामकथांतरमस्तीतिभावः । सतांपरपक्षदूषणात्मकावितंडा असतांस्वपरपक्षस्थापनदूषणात्मकोजल्पएवेत्युक्तं तत्रैवंनियमेकिंकारणमित्यतआह ॥ अप्रकाश्यइति ॥ सद्भिरितिशेषः । तुशब्दश्चशब्दार्थः । तेनछलादिसमुच्चयः । दूषयेदेवसज्जनः । तत्पक्षाणामसत्पक्षाणां तेषामसतां । ननुकेतत्वविप्लावकाः बौद्धादयएवेतिचेत्न तेषांप्रत्येकमुक्तपंचविधतत्वविप्लवकारित्वाभावात् । नचैकैकस्यैकैकस्तत्वविप्लवोस्तीतितेतत्वविप्लावकाइतिवाच्यं। अनुगततत्वविप्लवाभावेनतत्वविप्लावकस्वरूपनिर्धारणानुपपत्तेरित्यतआह ॥ विष्णुभक्तीति ॥ तत्वविप्लवस्तुविष्णुभक्त्यन्य एव यतोबौद्धादीनांसर्वेषांसाधारणस्ततस्तेसर्वेतत्वविप्लावकाइतिसंबंधः । तर्कागमबलेनदूषयेदित्युक्तं नायंनियमइत्याह ॥ सर्वेति ॥ यद्वातर्कागमबलेनापिकिंस्वसिद्धांतानुसारेणैवदूषणीयं नेत्याह ॥ सर्वेति ॥ नन्वागमाप्रामाण्यवादिनः धर्मप्रयोजनकाबौद्धादयःकथमागमेनदूषणीयाः । प्रतिवादिनाह्यागमेनदूषणाभिधानेतेनतदप्रामाण्यमेवाभिधीयेतेत्यतस्तंप्रत्यागमंप्रयुज्यत

---

भा० । एवंजल्पोवितंडेतिह्युभयोःसहिताःकथा । अप्रकाश्यःस्वपक्षोहिपाषंडानांयतस्ततः । अग्रहेणैवपक्षस्यतर्कागमबलेनतु । दूषयेदेवपाषंडांस्तत्वविप्लावकान्सदा । तत्पक्षाणांनिषेध्यत्वात्तेषांपक्षग्रहोभवेत् । विष्णुभक्त्यन्यधर्माख्यस्तत्वविप्लवएवतु । बौद्धादीनांयतःसर्वेतत्वविप्लावकास्तथा । सर्वनास्तिकवादीवास्वमनीषामतोपिवा । तस्यापिपक्षंसंश्रित्यदूषयेद्वाक्ययुक्तितः ।

त्प्रामाण्यंसाधनीयमितिभावेनाह ॥ यस्येति ॥ आगमाश्रयः आगमप्रामाण्यवादी । किंब्रूयादित्यतआह ॥ धर्मार्थइति ॥ अयं तवपक्षस्य सिद्धांतस्य संग्रहः किंधर्मार्थः धर्मप्रयोजनकः अथवृथैवप्रयोजनशून्यइत्यर्थः । धनवनितादिरूपलौकिकार्थस्या न्यतएवसिद्धेःशास्त्रप्रयोजनत्वाभावान्नसपक्षोविकल्पितः । आद्यमनूद्यदूषयति ॥ धर्मार्थश्चेदिति ॥ तर्ह्यागमप्रामाण्यसिद्धिरितिशेषः । कथमित्यतआह ॥ नधर्मोहीति ॥ शास्त्रस्यधर्मार्थत्वंवदताधर्मसिद्धिःकेनचित्प्रमाणेनाभ्युपेया । मेयसिद्धेःमानाधीनत्वात् । नचागमातिरिक्तप्रमाणेनतत्सिद्धिरित्यागमप्रामाण्यमवश्यमभ्युपेयमित्यर्थः । ननुयद्यपिनधर्मसिद्धिःप्रत्यक्षात् तस्यातींद्रियत्वात् । योगिप्रत्यक्षस्यास्मान्प्रत्यनिश्चायकत्वात् । तथाप्यनुमानाद्भविष्यति । देवदत्तशरीरादिकंदेवदत्तविशेषगुणजन्यं कार्यत्वेसतिदेवदत्तस्यभोगहेतुत्वात् । देवदत्तभोगहेतुतत्प्रयत्नजन्यस्रक्चंदनवदितिचेन्न । इदमनुमानंप्रमाणांतरसहकृतं केवलमेववा। नाद्यः। प्रमाणांतरस्यप्रत्यक्षस्याभावात् । आगमस्यप्रामाण्यानंगीकारात्। अंगीकारेविवादपर्यवसानात्। नद्वितीयः। केवलानुमानस्यसर्वस्यप्रतिपक्षग्रस्तत्वेनाप्रमाणत्वात् । अत्रापिदेवदत्तशरीरंदेवदत्तविशेषगुणजन्यंनभवतिशरीरत्वाद्यज्ञदत्तशरीरवदितिसत्प्रतिपक्षत्वाच्च । ननुयागीयहिंसापापहेतुःहिंसात्वाद्बाह्यहिंसावदित्यनुमानस्यप्रमाणांतरासहकारिणोपिप्रमाणत्वात्कथमेवमुच्यतइत्यतस्तत्रापिसत्प्रतिपक्षत्वमाह ॥ यथेति ॥ हिंसाविहितहिंसा हिंसात्वेनेतिशेषः । धर्महेतुत्वंपापहेतुत्वा

---

भा० । यस्यनैवागमोमानंतंब्रूयादागमाश्रयः । धर्मार्थोथवृथैवायंतवपक्षस्यसंग्रहः । धर्मार्थश्चेन्नधर्मोहिशक्योद्रष्टुंविनागमात् । यथानुमीयतेहिंसापापहेतुस्तथैवहि । धर्महेतुत्वमप्यस्याअनुमातुंसुशक्यते ।



412

भावः। अनिषिद्धत्वेनेतिशेषः। वृथैवेतिद्वितीयपक्षंदूषयति॥ वृथापक्षमिति॥ वृथाव्यर्थःपक्षोयस्यसःवृथापक्षः। तंत्वां यदिक श्चिद्धन्यात् तदालंप्रतितवकिमुत्तरं। मांकिमितिहंसीत्युत्तरमितिचेत्। तर्हितेनापित्वंयथावृथापक्षंगृहीत्वासितथैवाहमपित्वांवृ थैवहन्यामित्युक्तेकिमुत्तरमित्यर्थः। इतिब्रूयादितिपूर्वेणसंबंधः। ननुवितंडायांसतःप्रतिवादिनोवाद्युक्तसाधनदूषणादौपुरस्फूर्त्या द्यभावेनाशक्तौकिंकार्यमित्यतआह॥अशक्ताविति॥ तत्वविद्भाविनांजयेसतांप्रतिवादिभूतानामशक्तौसत्यांसंतः प्राश्निकादयः सर्वेसंभूयापिअसतांनिवारणंकुर्युरितिसंबंधः॥ तत्वविद्भाविनांनिवारकाःसंतःकीदृशाइत्यपेक्षायांपूर्वोक्ततत्वविद्भवविरोधिगुण वंतइत्याह॥ येषामिति॥ मतमितिशेषः। असत्सुपराजितेषुकिंकार्यमित्यतआह॥ पराजितेष्विति॥ दण्डं चिच्छत्वाजिह्वांवे त्यादिप्रागुक्तं। सत्सुपराजितेषुकिंकार्यमित्यतआह॥ जितेष्विति॥ सत्प्रतिवादीस्वयमेवाऽन्यैःसंभूयवाएषामसतांविजेता यावत्स्यात्तावदुदासीनतांव्रजेदितिसंबंधः। अथासतांपराजयानंतरं॥१॥ ननुबाणवंताविच्युच्यमानौकौ। शराविविचेन्न तस्यैववा

---

भा०। वृथापक्षंवृथाहन्याद्यदिकश्चित्किमुत्तरं। इत्यशक्तौसतांसर्वैसंभूयापिनिवारणं। कुर्युरेवासतांसंतस्तत्वविद्भाविनांजये। येषांवि ष्णोःसमंकिंचिदधिकंवानतुक्वचित्। क्षराक्षराभ्यांभिन्नंचविष्णुंपश्यंतियेसदा। तारतम्यविदःसर्वजीवानांप्रकृतेरपि। भगवद्धर्मिणोनित्यंतेसंतः परिकीर्तिताः। पराजितेष्वसत्सूक्तंराजादंडंप्रपातयेत्। जितेषुसत्स्वसद्भिस्तुराजोदासीनतांव्रजेत्। यावदेषांविजेतास्यादथदंडंनिपातयेदितिब्रह्म तर्के॥ १॥

णत्वेनकथंतस्यैवतद्धत्त्वमित्यतोबाणशरशब्दयोरभिधानपुराणवचनाभ्यामर्थभेदमाह ॥ बाणस्त्विति ॥ एतेनशराग्रेयोवंशखंडः संधीयतेसबाणउच्यतइतिपरव्याख्यानंप्रमाणविरुद्धमित्युक्तंभवति । यदुक्तंसर्वाधारमूलप्रकृतेरपिभगवानेवाधारइत्युक्तइतितद युक्तं । श्रुतावविनाशित्वेनाक्षरशब्दाभिधायाश्चित्प्रकृतेस्सर्वाधाराकाशाधारत्वप्रतीत्याभगवतःसर्वाधारमूलप्रकृत्याधारत्वाप्र तीतेः । तथाचास्थूलत्वादिकमपितस्याएवेत्यतःश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ दीप्तेरिति ॥ ननुविजिगीषुकथायांपुनरुक्तेर्निग्रह स्थानत्वात्कथंवाचक्नवीयदूर्ध्वंयाज्ञवल्क्यदिवइत्यादिप्राक्पृष्टमेवपृच्छति।याज्ञवल्क्योपिकथं पुनरुक्तंनिग्रहस्थानमनुद्भाव्यपूर्वो क्तमेवोत्तरंवक्ति। पर्यनुयोज्योपेक्षणापत्तेरित्यतः पुनःप्रश्नतात्पर्यमाह ॥पुनःप्रश्नइति ॥ सर्वाधाराप्रकृतिरित्येतन्नोपचरितं किंत्व नुपचरितमित्येवंप्रकारेणावधारणार्थमित्यर्थः । प्रागुक्तपरिहारेणानुत्पन्नमिदमवधारणमिदानींकिंबलाज्जा[illegible]त्यतःपरिहारेवि शेषोस्तीत्याह ॥ आकाशएवेति ॥ ननुपुनरुक्तिमनुद्भाव्यपरिहारकथनेपर्यनुयोज्योपेक्षणापत्तिरित्युक्तमितिचेन्न । प्राप्त निग्रहस्थानानुद्भावनेहिपर्यनुयोज्योपेक्षणं। नचपुनरुक्तिर्निग्रहस्थानं । येनतदनुद्भावनेनिग्रहस्थानंस्यादितिभावेनाह ॥ पुनरुक्ति

---

भा० । बाणस्त्वयोमयःप्रोक्तःशरोनालोस्यकीर्तितइत्यभिधानं । कर्मारस्तुतदाबाणंतीक्ष्णमंजलिकाभिधं । संदधानःशरेयांतंराजानंनंद दर्शहेतिपाद्मे ॥ २ ॥ दीप्तेराकाशशब्दोक्ताश्रीर्हिसर्वाश्रयामता । तदाश्रयःपरोविष्णुःसोस्थूलादिगुणोमतइतिस्कांदे । पुनःप्रश्नःसर्वाधाराप्रकृ तिरित्यनुपचरितत्वेनावधारणार्थं । आकाशएवेत्यवधारणात् । पुनरुक्तिःशब्ददोषोन्यूनाधिक्यादिकंतथा ।

रिति ॥ आदिपदेनयत्तदित्याद्यनुवाददूष्यैकदेशानुवादकेवलदूषणोक्तिलक्षणाननुभाषणैकदेशस्यग्रहणं । पुनरुक्तिस्तथान्यूनाधिक्यादिकंशव्ददोषःसनपराजयेकारणमितियोजना किमुवादकथायामितिकैमुत्यद्योतनायचशव्दोपिशव्दार्थः । पुनरुक्त्यादिकंकुतःपराजयकारणंनभवतीत्यतउक्तं शव्ददोषइति । शव्ददोषत्वेपिकुतोनपराजयकारणत्वमित्यतआह ॥ क्वचिदिति ॥ अपटुकरणत्वादिनासंभवतस्तस्यप्रतियोग्यपेक्षयाविद्यादौर्बल्यद्योतकत्वाभावादितिभावः । तर्हिकःपराजयहेतुरित्यतआह ॥ तत्वनिर्णयेति ॥ तत्वनिर्णयवैलोम्यशव्देनार्थदोषविरोधासंगत्योर्ग्रहणं । तयोरेवसाक्षात्तत्वनिर्णयविरोधित्वात् । विलंवोवामुहूर्ततइत्यनेनवक्तृदोषभूतानुक्तेर्ग्रहणं । अनुक्तिलक्षणकथनायैवमुक्तं । चशव्दार्थकवाशव्देनसंवादोपिग्राह्यः । अतइतिश्रवणाद्यतइतिग्राह्यं । नन्वेवंयदिपुनरुक्त्यादीनांनपराजयकारणत्वं तर्हितेषांनिग्रहस्थानेपरिगणनमेवनस्यादित्यतआह ॥अतइति य॥ तःपुनरुक्त्यादिमात्रंपराजयहेतुर्नभवति यतश्चतत्वनिर्णयवैलोम्यमेवपराजयहेतुरतइत्यर्थः। निगृह्यतेनेनेतिनिग्रहोनिग्रहस्थानं । तत्वनिर्णयविरोधिपुनरुक्त्यादीनीत्युक्त्याप्रमाणेतत्वनिर्णयवैलोम्यशव्देनेदमपिसंग्राह्यमितिसूचयति । प्रकृतपुनरुक्तिश्चनतत्वनिर्णयविरोधिनीति ननिग्रहस्थानमितिभावः। यद्यप्याचार्यैरन्यत्रविरोधासंगतिन्यूनाधिक संवादानुक्तीनांषण्णामेवनिग्रहस्थानत्वमुक्तं

---

भा० । नजिगीपुकथायांचकारणंस्यात्पराजये । क्वचिद्विद्याधिकस्यापिस्खलनंसंभवेद्यतः । तत्वनिर्णयवैलोम्यंविलंवोवामुहूर्ततः । विद्यादौर्वल्यहेतुःस्यादतस्तस्मिन्पराजयइतिब्रह्मांडे । अतस्तत्वनिर्णयविरोधिपुनरुक्तयादीनिनिग्रहः ॥ ७ ॥

तथापिपुनरुक्त्यादीनांन्यूनाधिकयोःशब्ददोषयोरंतर्भावः। अतएवप्राक्प्रमाणेशब्ददोषइत्युक्तं। अत्रव्यवहारस्तुअंतर्भावाविवक्षयापररीत्यैवेतिध्येयं ॥७॥ अस्थूलमित्यादौद्रव्यत्वादिप्रयोजकपरिमाणादिराहित्यमुच्यतइतिपरेषांव्याख्यानंदूषयितुंस्वयंतावद्व्याचष्टे ॥प्रसिद्धेति॥ उपलक्षणमेतत्। प्रसिद्धस्थूलसूक्ष्माद्यन्यवस्तुस्वभावस्थौल्यादिराहित्याच्चेत्यपिग्राह्यं । अतएवनैवस्थौल्याद्यभावतइत्युक्तंदूषयति ॥नैवेति॥ तथात्वेब्रह्मणोनिःस्वभावत्वापत्तेरित्यर्थः । लौकिकस्थौल्यादिनिषेधेत्वलौकिकस्थौल्यादिसद्भावान्निःस्वभावत्वमितिभावः। ननुयदिअस्थूलादिपदानांलौकिकस्थौल्यादिराहित्यार्थकत्वेनालौकिकस्थौल्यादिसिद्धिस्तर्हि अतमोऽवाय्वादिपदानामपिलौकिकतमोवाय्वादिराहित्यार्थकत्वापत्त्याअलौकिकतमोवाय्वादिसिद्धिप्रसंगइत्यतः उपलक्षणत्वेनअतमइत्येतद्व्याचष्टे ॥अनावृतेरिति॥ अस्यजनार्दनस्य तमस्सर्वात्मनानास्ति तमसोज्ञानावरकत्वस्वाभाव्यात्। अस्यचज्ञानप्रतिबंधकावरणाभावादित्यर्थः। नतदश्नातिकिंचनेत्यनेनगतार्थताशंकापरिहारायनतदश्नातिकश्चनेतिवाक्यंव्याचष्टे ॥ स्वातंत्र्यादिति ॥ नाद्यतेनसंह्रियते। तत्रहेतुः ॥ स्वातंत्र्यादिति ॥ परानधीनत्वादित्यर्थः । यदिब्रह्मकेनचित्संहार्यंस्यात्तदासंहारकाधीनमेवस्यात्। संहार्यस्यसंहारकाधीनत्वनियमात्। नचतदस्ति अतोनसंहार्यमित्यर्थः ॥ ८ ॥ एतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्याचंद्र

भा० । प्रसिद्धस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः । अस्थूलादिरितिप्रोक्तोनैवस्थौल्याद्यभावतः । अनावृतेस्तमोनास्यस्वातंत्र्यान्नाद्यतेकचित् ॥ ८ ॥

मसौविधृतौतिष्ठतइत्यादिवाक्यद्वयगतसूर्याचंद्रमोद्यावापृथिवीशब्दानांप्रसिद्धार्थत्वेतद्धारकत्वस्यान्यदेवतासाधारण्येनविष्णुमात्रनिष्ठत्वंनस्यादित्यतस्तत्पदचतुष्टयस्याभिधेयमाह ॥ **द्यावापृथिव्याविति** ॥ प्राधान्यक्रमेणश्रुतिक्रमोलंघनं । सूर्यविधूकेशौब्रह्मरुद्रौमतावित्यर्थः । द्यावापृथिवीसूर्याचंद्रमःशब्दाञ्छ्र्यादिषुनिर्वक्ति ॥ **दीप्तेरिति** ॥ आह्लादविधेःसुखकरणात् । एवंपदार्थमुक्त्वाएतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतःएतस्यवाअक्षरस्यप्रशासनेगार्गिद्यावापृथिव्यौविधृतेतिष्ठतइतिवाक्यद्वयार्थमाह ॥ **तदाधारइति** ॥ हरिःप्रशासकःसन्स्वातंत्र्येणनित्यंतदाधारइत्यन्वयः । स्वातंत्र्येणेत्युक्त्याभगवतःसर्वाधारत्वमन्याधीनंनेत्याह । आकाशएवतदोतंचप्रोतंचेतिसर्वाधारत्वमाकाशाख्यश्रियोऽभिहितं । इदानींविष्णोरेवसूर्यचंद्राद्याधारत्वंकथमुच्यतइत्यतआह ॥ **आधारत्वमिति** ॥ ननुकथंभगवतएवस्वातंत्र्यमुच्यते सर्वाधारत्वोक्त्याआकाशाख्यश्रियोपिस्वातंत्र्यावगमादित्यतोवाह ॥ **आधारत्वमिति** ॥ श्रियआधारत्वंविष्णोःप्रशासनादितिकुतःस्वातंत्र्येणैवकिंनस्यादित्यतआह ॥ **तद्वशादिति** ॥ तद्वशत्वादित्यर्थः । श्रियइत्यनुवर्तते । हरेःस्वातंत्र्यंचकादाचित्कंनेत्याह ॥ **सइति** ॥ ९–११ ॥

ननुअतमइत्यादाविवामुखमित्यादावपिसर्वात्मनामुखादिनिषेधःकिंनेतिभावेनभगवतःप्राकृतविग्रहराहित्येप्रमाणमाह ॥ **नत-**

---

भा० । द्यावापृथिव्यौश्रीभूमीकेशौसूर्यविधूमतौ । दीप्तेःपृथुत्वाज्ज्ञानाच्चतथाह्लादविधेरपि । तदाधारोहरिर्नित्यंस्वातंत्र्येणप्रशासकः । आधारत्वंश्रियोयच्चतच्चविष्णोःप्रशासनात् । तद्वशान्नस्वतंत्रत्वंसस्वतंत्रोहरिःसदेतिमहामीमांसायां ॥ ९–११ ॥

स्येति ॥ तथाचप्राकृतमुखादिराहित्यमेवश्रुत्यर्थइतिभावः । कुतएवंव्याख्येयंसर्वात्मनाविग्रहादिराहित्यमेवार्थःकिंनस्यादित्य तोभगवतोरूपादिसद्भावेप्रमाणसद्भावात् तथाव्याख्यानेतद्विरोधःस्यादितिभावेनाह ॥ आदित्यवर्णमिति ॥ आदिपदेनाणोरणीयान्महतोमहीयान्सहस्रशीर्षापुरुषइत्यादेर्ग्रहणं । अस्थूलमनण्वित्यादिस्थूलादिविलक्षणपरत्वेनैवव्याख्येय मित्यत्रनिदर्शनमाह॥ नसदिति॥ तत्ब्रह्मसदितिनोच्यते । असदितिनोच्यतेइतिवाक्यद्वयंयथामूर्तामूर्तविलक्षणपरत्वेनैवव्या ख्येयं नतुसत्वासत्वाभावपरत्वेन ब्रह्मणःसद्रूपत्वात् । यथोक्तं मूर्तंसदितिसंप्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद्ब्रह्मनसत्तन्नास दुच्यतइति । तथेदमपीतिभावः । नन्वेकप्रकरणगतानामप्यस्थूलादिपदानांप्राकृतस्थौल्यादिनिषेधपरत्वमतमोवाय्वादिपदानां सर्वात्मनातमआदिनिषेधपरत्वमितिव्याख्यानंकथमित्यतआह ॥ अदुःखमिति ॥ यथैकस्मिन्नपिप्रकरणेअसुखमित्यनेनलौकि कसुखनिषेधेपिअदुःखमित्यनेनसर्वात्मनादुःखनिषेधएव । यथावानप्रज्ञमित्यत्रलौकिकज्ञाननिषेधेपिनाप्रज्ञमित्यत्रसर्वात्मनाऽज्ञा ननिषेधएव । तत्रापीतिभावः ॥ ततश्चायंखंडार्थः ॥ अथोद्दालकोपरमानंतरं वाचक्नवीवचक्नोर्दुहिता गार्गीयाज्ञवल्क्यभार्या

---

भा० । नतस्यप्राकृतामूर्तिर्मांसमेदोस्थिसंभवा । नयोगित्वादीश्वरत्वात्सत्यरूपाच्युतोविभुरितिवाराहे । आदित्यवर्णंतमसस्तुपारइत्यादेश्च नसत्तन्नासदुच्यते । अदुःखमसुखंसमं । नप्रज्ञंनाप्रज्ञमित्यादिच ॥ ८ ॥ इत्यक्षरब्राह्मणं ॥ ५ ॥ ८ ॥

उप० । अथहवाचक्नव्युवाचब्राह्मणाभगवंतोहंताहमिमंद्वौप्रश्नौप्रक्ष्यामितौचेन्मेवक्ष्यतिनवैजातुयुष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेति पृच्छ गार्गीति ॥ १ ॥

स्वयंपूर्वंपराजिततयासभ्यानुज्ञांविनाविजिगीषुकथायांपुनःप्रश्नोनकर्तव्यइतिब्राह्मणानुज्ञार्थंब्राह्मणान्प्रत्युवाच । किमिति हेब्राह्म णाभगवंतःज्ञानादिसंपन्नाः अहंइमंयाज्ञवल्क्यंपुनःद्वौप्रश्नौप्रष्टव्यौ प्रक्ष्यामि । हंतयद्यनुमतिर्भवतामस्ति । अयंयाज्ञवल्क्यः तौप्रष्टव्यार्थौ मेमम चेत्यदि वक्ष्यतितदुत्तरंकथयिष्यति। तर्हि जातुकदाचित् । युष्माकंमध्ये कश्चित्कोपिअन्यतमःइमंयाज्ञव ल्क्यं । ब्रह्मोद्यंब्रह्मवादिनंसंतं नवैनैव जेताभवेदिति । अनेनब्राह्मणानामेवंज्ञापनरूपोपकारार्थंचायंप्रश्नइत्युक्तंभवति। एवमुक्ता ब्राह्मणाहेगार्गित्वंपृच्छेत्यनुज्ञांदत्तवंतः ॥१॥ साएवंलब्धानुज्ञागार्गी याज्ञवल्क्यंप्रत्युवाचह । किं हेयाज्ञवल्क्यअहंवै पूर्वंभी त्योपरतापि त्वात्वांद्वौप्रश्नौ पुनःप्रक्ष्यामीत्यनुषज्यते। ननुपूर्वकृतप्रश्नानामिवैतयोरपिप्रश्नयोःसुशकोत्तरत्वेपुनःप्रश्नोऽव्यर्थइत्यतः तयोःप्रश्नयोःदुरुत्तरत्वंद्योतयितुंदृष्टांतपूर्वकमाह॥ यथेति॥ यथाउग्रपुत्रःक्रूरपुत्रः शूरत्वसंभावकमिदमुभयोर्विशेषणं । काश्यां भवःकाश्योवा विदेहानांराजावैदेहोवा । उज्ज्यंउत्उद्गताअवरोपिताज्यायस्यतदुज्ज्यं । धनुः अधिज्यं अध्यारोपिताज्यायस्यतद धिज्यं कृत्वा द्वौबाणवंतौअयोमयवंतौ शरावितिशेषः। कीदृशौ सपत्नातिव्याधिनौ सपत्नाःशत्रवःतानतिशयेनवेद्धुंशीलंययौस्तौ सपत्नातिव्याधिनौ । हस्तेकृत्वा उपोत्तिष्ठेत् शत्रोस्समीपेतिष्ठेत् । एवमेवाहं त्वां शरस्थानीयाभ्यांद्वाभ्यांप्रश्नाभ्यां । उपोदस्थां

---

उप० । साहोवाचाहंवैत्वायाज्ञवल्क्ययथाकाश्योवावैदेहोवोग्रपुत्रउज्ज्यंधनुरधिज्यंकृत्वाद्वौबाणवंतौसपत्नातिव्याधिनौहस्तेकृत्वोपोत्तिष्ठेदेव मेवाहंत्वाद्वाभ्यांप्रश्नाभ्यामुपोदस्थांतौमेब्रूहीतिपृच्छगार्गीति ॥ २ ॥

त्वत्समीपउत्तिष्ठेयं त्वंब्रह्मिष्ठत्वेप्रतिज्ञावांश्चेत् तर्हिंतौप्रश्नौतयोःप्रश्नयोः उत्तरं मेमह्यं ब्रूहि। एवमुक्तोयाज्ञवल्क्यः पृच्छगार्गीत्याह ॥ २॥ साएवमुक्तागार्गीह उवाचअपृच्छत् किं। हेयाज्ञवल्क्य। दिवः द्युशब्दवाच्यात् स्वर्गलोकात्वैकुंठलोकाद्वा। ऊर्ध्वंउपरि यदास्तिमहर्लोकादिकं। ब्रह्मांडखर्परवहिरावरणादिकंवा। पृथिव्याःभूलोकात् पृथिवीसंबंधिलोकसप्तकाद्वा अर्वाक्अधःयदस्ति। अतलादिकंअंडोकादिकंवा । अंतराऊर्ध्वार्वाक्शब्दवाच्ययोःपूर्वोक्तयोर्मध्येवर्तमानंयत् । येइमेप्रसिद्धेद्यावापृथिवीस्वर्गादिभूरादिके। तत्जगत् भूतंअतीतमिति भवच्चवर्तमानमिति। भविष्यच्चेति यदाचक्षतेविद्वांसस्तत्सर्वंकस्मिन्नोतंप्रोतंचेति ॥ ३ ॥ सएवंपृष्टोयाज्ञवल्क्यः उक्तानुवादपूर्वकमुत्तरमुवाच। आकाशेआसमंतात्काशमानत्वेनाकाशशब्दाभिधेयेश्रीतत्वे ॥ ४ ॥ साएवंलब्धप्रथमप्रश्नोत्तरागार्गीह उवाच याज्ञवल्क्य यस्त्वं मेमम एतंदुर्वचंप्रश्नं व्यवोचः विशेषेणोत्तरितवानसि अतस्तेतुभ्यंनमोस्तु। अथापरस्मैद्वितीयप्रश्नाय धारयस्वमनोधत्स्व। इतरआह पृच्छगार्गीतीति ॥ ५ ॥ द्वितीयप्रश्नंकर्तुंसर्वाधाराप्रकृतिरित्यनुपचरितत्वेनावधारणार्थंपूर्वपृष्टमेवपुनःपृच्छतीत्याह ॥ साहोवाचेत्यादिना ॥ ६ ॥ याज्ञवल्क्योपिपूर्वोक्तमेवोत्तरंआकाशएवेत्यवधार

---

उप० । साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोयद(वा)र्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेकस्मिंस्तदोतंच प्रोतंचेति ॥ ३ ॥ सहोवाचयदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशेतदोतंचप्रोतंचेति ॥ ४ ॥ साहोवाचनमस्तेस्तुयाज्ञवल्क्ययोमएतंव्यवोचोथापरस्मैधारयस्वेतिपृच्छगार्गीति ॥ ५ ॥

णेनाहेत्याह ॥ सहोवाचेत्यादिना ॥ द्वितीयप्रश्नंकर्तुंसर्वाधाराप्रकृतिरित्यनुपचरितत्वेनावधारणार्थंपूर्वंपृष्टमेवपुनःपृच्छतीत्याह॥साहोवाचेत्यादिना ॥ द्वितीयंपृच्छति ॥ कस्मिन्निति॥ ७॥ एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यक्षरस्याकाशाश्रयत्वंवक्तुंकथंसर्वाधाराकाशस्याक्षरमाश्रयःस्यादित्यतस्तस्यमहिमानमाह॥ एतद्वाइत्यादिना नान्यदतोस्तिविज्ञात्रित्यंतेन। तत्आकाशाश्रयत्वेनवक्ष्यमाणं।अक्षरंनक्षरतीत्यक्षरशब्दवाच्यंब्रह्मएतत् एतल्लक्षणकं ब्राह्मणाब्रह्मज्ञानिनःअभिवदंतिवै किंतल्लक्षणमित्यतआह॥ अस्थूलं ॥प्राकृतस्थूलसूक्ष्मादिविलक्षणमित्यर्थः। अलोहितंलोहिताद्युपलक्षितप्राकृतरूपरहितं। एवमस्नेहमित्येतदपिव्याख्येयं।अच्छायंच्छायारहितं तेजःस्वरूपत्वात् अज्ञानरहितंवा। अतमःअनावृतेस्तमोरहितं। अवायुश्वासोच्छ्वासादिरहितं। अनाकाशंशरीराद्यारंभकतयाऽऽकाशशब्दोपलक्षितपंचमहाभूतरहितं तद्विलक्षणंवा। असंगंसर्वत्रस्थितमपितत्कृतलेपरहितं। अरसंप्राकृतरसशून्यं।अगंधंप्राकृतगंधशून्यं। एवमचक्षुष्कमित्यादिव्याख्येयं। अतेजस्कंप्राकृतवर्चोरहित।

---

उप०। साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेकस्मिꣳस्तदोतंचप्रोतंचेति॥ ६॥ सहोवाचयदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशएवतदोतंचप्रोतंचेति। कस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेति ॥ ७॥ सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुख

अप्राणंचक्षुःश्रोत्रवाङ्मनोव्यतिरिक्तप्राकृतज्ञानेंद्रियकर्मेंद्रियरहितं । अमुखंप्राकृतविग्रहरहितं । अमात्रंपरिमितिशून्यं । नवि
द्यतेअंतरंयस्यतदनंतरं । नविद्यतेबाह्यंयस्यतदबाह्यं । अयमेवसर्वस्मादंतरःसर्वस्माद्बाह्यश्चेत्यर्थः । तद्ब्रह्म किंचनान्नादिकं
नाश्नाति उपजीवनाद्यर्थंनास्ति । कश्चनकोपिसमर्थस्तद्ब्रह्मनाश्नातिनसंहरतीत्यर्थः ॥ ८ ॥ सर्वाधारप्रकृत्याधारत्वोक्त्यावि
ष्णोरपियत्सर्वाधारत्वंविवक्षितंतन्नप्रयासेन किंत्वाज्ञामात्रेणेत्याह ॥ एतस्यवाइति ॥ वैशब्दोवधारणे । प्रशासनेआज्ञायां नि
मित्तसप्तमीयं । सूर्याचंद्रमसौब्रह्मरुद्रौ द्यावापृथिव्यौश्रीभूमी निमेषादिशब्देनतदभिमानिनोदेवाउच्यंते । यानद्यः अन्याःवि
लक्षणाःकाश्चित्प्राच्यःप्राच्यांस्थिताः अन्याःकाश्चित्प्रतीच्यःप्रतीच्यांस्थिताः श्वेतेभ्यःपर्वतेभ्यः यांयांदिशंअनुस्यंदंते ताएतस्यै
वाक्षरस्याज्ञयातांतांदिशमनुस्यंदंतइत्यर्थः । एतस्यवाज्ञयाददतोगोहिरण्यादीन्प्रयच्छतः मनुष्याः प्रशंसंति देवायजमानंप्रशं
संति पितरःदर्वींदर्वीहोमं उच्छिष्टपिंडावसरेदर्वींवा अन्वायत्ताः अनुगताः ॥ ९ ॥ अक्षरज्ञानाज्ञानाभ्यामेवमोक्षसंसाराविति

---

उ० । ममात्रमगोत्रमजरमभयमसृतमरजोशब्दमविवृतमसंवृतमपूर्वमनपरमनंतरमबाह्यंनतदश्नातिकिंचननतदश्नातिकश्चन ॥ ८॥ एतस्यवा
अक्षरस्यप्रशाशनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठत एतस्यवाअक्षरस्यप्रशासनेगार्गिद्यावापृथिव्यौविधृतेतिष्ठत एतस्यवाअक्षरस्यप्रशासनेगार्गिनि
मेषामुहूर्ताअहोरात्राण्यर्धमासामासाऋतवःसंवत्सराइतिविधृतास्तिष्ठंत्येतस्यवाअक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदंतेश्वेतेभ्यःपर्वतेभ्यःप्रती
च्योऽन्यायांयांचदिशमन्वेतस्यवाअक्षरस्यप्रशासनेगार्गिददतोमनुष्याःप्रशंसंतियजमानंदेवादर्वींपितरोन्वायत्ताः ॥ ९ ॥

वक्तुंकर्मणांतावन्मोक्षसाधनत्वंनिराकरोति ॥ योवाइति ॥ एतत् उक्तलक्षणकं अक्षरंअविदित्त्वा जुहोतिहविःप्रक्षेपंकरोति यजतेददाति बहूनिवर्षसहस्राणि तपःचांद्रायणादि तप्यते सयद्यप्यस्मिन्प्रमाणप्रमितेस्वर्गादिलोकेबहूनिवर्षसहस्राणितिष्ठति । तथापिअस्यतत्फलंअंतवदेवविनाशवदेवभवति कृपणःशोच्यः संसारीतियावत् । ब्राह्मणःमुक्तः ॥१०॥ अदृष्टंअन्यैःसाकल्येनदृष्टं नभवति । स्वयंद्रष्टृअश्रुतंसाकल्येन स्वयंशृणोतीतिश्रोतृ अमतंसाकल्येन स्वयंमंतृ अविज्ञातं साकल्येनबुध्यविषयः । ननुस र्वेषामपिद्रष्टृत्वश्रोतृत्वादेःसत्वात्कोविशेषोक्षरस्येत्यतोनात्रद्रष्टृत्वादिमात्रंलक्षणंविवक्षितं। किंतुस्वातंत्र्येणद्रष्टृत्वादि तच्चनान्यस्ये त्याह ॥ नान्यदिति ॥ अतअक्षरात् अन्यत्स्वातंत्र्येणद्रष्टृनास्ति । एवंयदर्थमक्षरमाहात्म्यमभिहितंतदाह ॥ एतस्मिन्निति ॥ ॥११॥ सालब्धप्रश्नद्वयोत्तरागार्गी उवाच । किं। हेब्राह्मणाःभगवंतोयूयं अस्माद्याज्ञवल्क्यात् । नमस्कारेणमुच्यध्वमितियदुच्यते मया तदेवबहुमन्यध्वं । कुतइत्यतआह ॥ नेति ॥ युष्माकंमध्ये कश्चित् इमंब्रह्मोद्यंयाज्ञवल्क्यं जातुकदापि जेतानैव यस्मा त्तस्मादित्यर्थः । ततःब्राह्मणान्प्रतिवचनानंतरं ॥ १२ ॥ इत्यक्षरब्राह्मणं ॥ ८ ॥ ननुमहिमानएवैषामेतइत्यत्रएतेत्रयस्त्रिंश

---

उप० । योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिंल्लोकेजुहोतियजतेतपस्तप्यतेबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवतियोवाएतदक्षरंगार्ग्यविदित्वाऽस्माल्लो कात्प्रैतिसकृपणोऽथयएतदक्षरंगार्गिविदित्वाऽस्माल्लोकात्प्रैतिसब्राह्मणः॥१०॥ तद्वाएतदक्षरंगार्ग्यदृष्टंद्रष्टृश्रुतंश्रोत्रमतंमंत्रविज्ञातंविज्ञातृनान्यदतो स्तिद्रष्टृनान्यदतोस्तिश्रोतृनान्यदतोस्तिमंतृनान्यदतोस्तिविज्ञात्रेतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति ॥ ११ ॥ साहोवाचब्राह्मणाभगवंतस्त देवबहुमन्यध्वंयदस्मान्नमस्कारेणमुच्यध्वंनवैजातुयुष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेति ततोहवाचक्नव्युपरराम ॥ १२ ॥ इत्यक्षरब्राह्मणं ॥८॥

त्संख्याकादेवा एषां त्रयश्चत्रीचशतेत्याद्युक्तानां महिमानएवेत्यन्यथाप्रतीतिनिरासायएषामेतइत्यनयोःपरामृश्यंदर्शयंस्तद्वाक्यंव्याचष्टे ॥ येयइति ॥ अत्रवीप्सयानकेवलंत्रयश्चत्रीचशतेत्युक्ताःत्रयस्त्रिंशच्छतसंख्याकादेवाःत्रयस्त्रिंशतांदेवानांमहिमानः किंतु ते त्रयश्चत्रीचसहस्रेत्युक्ताःत्रयस्त्रिंशत्सहस्रसंख्याकादेवाः । एषां त्रयश्चत्रीचशतेत्युक्तानांदेवानां महिमानइतिवाक्ययोजनामभिप्रैति। परेषामुत्तमानां। नन्ववराणामुत्तममाहात्म्यरूपत्वाभावात्कथंतेतन्महिमात्मकाइत्यतोत्रमहिमानइत्यस्यविवक्षितमर्थमाह ॥ महीत्युक्तमिति ॥ आद्योहिशब्दःमहीत्यस्यमाहात्म्यार्थत्वे । द्वितीयस्तुमेत्यस्यमर्यादारूपमानार्थत्वेप्रसिद्धिमाह । तन्मितास्तेनपरिमिताःन्यूनाः । एवंमहिमशब्दार्थमुक्त्वाएषांमहिमानइतिषष्ठीलब्धमर्थमाह ॥ एवंहीति ॥ ननुसर्वत्रापिमहिमशब्दस्योक्तार्थत्वेसत्यःसोअस्यमहिमा देवमहिम्नःपरमंतमापेत्यादावपिमहिमशब्दस्योक्तार्थत्वंस्यादित्यतउक्तं ॥ अयमिति ॥ महिमानइतिश्रुतिगतः । कस्तर्हितत्रमहिमशब्दार्थइत्यतआह ॥ यत्रेति ॥ यत्रसत्यःसोअस्यमहिमेत्यादौ महिमशब्दःमाहात्म्यवाचीविवक्षितःस्यात् । तदातत्र महिमामहिमशब्दार्थः महत्वमित्यर्थः । ननुकत्येवदेवायाज्ञवल्क्येतिप्रश्नस्यत्रयश्चत्रीचशतेत्यादिनापरिहारस्योक्तत्वात् कत्येवदेवायाज्ञवल्क्येतिपुनःप्रश्नतत्परिहाराणामसंभवः । नचसंकोचसंख्याविषयप्रश्नेतत्परिहारोऽयमिति

---

भा० । येयेऽवराःसुरास्तेतुपरेपांमहिमात्मकाः । महीत्युक्तंहिमाहात्म्यंमहिमानोहितन्मिताः । एवंहिमहिमाशब्दस्तद्वशत्वंवदत्ययं । यत्र माहात्म्यवाचीस्यान्महत्वंमहिमातदा ।

वाच्यं । व्यर्थत्वादित्यतःपूर्वपूर्वोक्तेषुअधिकाधिकविवक्षयापुनःप्रश्नइतिज्ञापनायपरिहारवाक्यानांतात्पर्यमाह ॥ त्रयस्त्रिंशत्सुराणामिति ॥ त्रयश्चत्रीचशतेत्युक्तानांदेवानांमध्ये ततःत्रयस्त्रिंशद्देवेभ्यः परेदेवाः त्रयस्त्रिंशत्सुराणां परिवाराः । षण्णामेतेइत्यत्रापित्रयस्त्रिंशत्सुराणांततःपरइतिपदत्रयमनुवर्तते । त्रयस्त्रिंशत्सुराणांमध्ये ततःषड्भ्यः परेएतेसप्तविंशतसंख्याकादेवाः षण्णांपरिवाराः त्रयाणांतेइत्यत्रषण्णांततःपरेइतिपदत्रयमनुवर्तते । षण्णांमध्ये ततःत्रिभ्यः परेतेत्रयोदेवाः त्रयाणांपरिवाराः । तेद्वयोरित्यत्रापिषण्णांततःपरइत्यनुवर्तते । षण्णांमध्ये ततःद्वाभ्यां परेतेचत्वारोदेवाः द्वयोःपरिवाराः साधिकस्यतावित्यत्रद्विवचनमविवक्षितं । द्वयोःततःपरइतिअत्रानुवर्तते । द्वयोर्मध्ये ततः साधिकात् परएकः साधिकस्यपरिवारः । सोपिसाधिकोपि एकस्यपरिवारइतियोज्यं । अमात्यादीनांराजादिपरिवारत्ववत्नावरदेवानामुत्तमदेवपरिवारत्वमित्याशयेनप्रागुक्तंतद्वशत्वंविवृणोति ॥ क्रमतइति ॥ बलशब्दोज्ञानाद्युपलक्षकः । एकइत्युक्तविष्णोरपिपराधीनस्वरूपत्वादिकंकिं नेत्याह ॥ एकएवेति ॥ २ ॥ ननुषण्णामेतेपरिवाराइत्युक्तमसत् । तेचषट्वसुपूक्ताअग्न्यादयएवकतमेषडितिप्रश्नोत्तरेकथ्यंते । एतेषामेवशब्दानांतत्र श्रवणात् । तेषांप्रसिद्धानांनत्रयस्त्रिंशत्स्वाधिक्यं । अग्न्यादीनांचंद्राद्युत्तमत्वाभावादित्यतः प्रथमवाक्यगताग्न्यादिशब्दाभिधे

---

भा० । त्रयस्त्रिंशत्सुराणांहिपरिवारास्ततःपरे । षण्णामेतेत्रयाणांतेतेद्वयोःसाधिकस्यतौ । एकस्यसोपिक्रमतःपराधीनस्वरूपिणः । पराधीनवलाश्चैवपराधीनप्रवृत्तयः । एकएवस्वतंत्रोऽसौभगवान्पुरुषोत्तमः ॥ २ ॥

यान् तेषुतन्निर्वचनपूर्वकमाह ॥ अग्रमित्यादिना ॥ अग्रशब्देकर्मण्युपपदेनयतेःकर्मणिडिप्रत्ययः उपपदरशब्दलोपश्च । प्रथितशब्देकर्मण्युपपदेवातेःकर्तरिकप्रत्ययः उपपदतकारलोपश्च । तद्भार्यागरुडभार्या पृथिवीनाम । ननुप्रथिवस्येयं प्राथिवीति स्यात् पृथिवीतिकथमित्यतआह ॥ यत्तदिति ॥ यद्यस्मात्तदिच्छानुसारिणी तस्मादभेदोपचारेणतेनैवशब्देनोच्यते । निर्वचन त्वात् रेफस्यऋवर्णः । स्त्रीत्वात्ङीविति भावः ॥ सर्वज्ञत्वादिति ॥ गत्यर्थाद्वातेःकर्त्तरिक्तः विशेषानुक्तेःसर्वज्ञत्वादित्युक्तं । आयुष्ट्वात्आयुःप्रदत्वात् वश्चासावायुश्चेतिवायुरितिविग्रहः । सर्वेषामप्यंतर्निरीक्षितृत्वात्कोविशेषइत्यतआह ॥ देवेभ्यइति । शेषादिभ्यइत्यर्थः । उमाद्यपेक्षयाआदिकालस्थितः । आदिशब्दाद्भवार्थेत्यप्रत्ययः । चशब्दःअतइत्यर्थे वाग्रूपावागभिमानिनीस तीयतोद्योतिकाअर्थप्रकाशिका अतउमा द्यौःसमुदिष्टा । नन्वस्त्वेवंवसुधूक्ताःअग्न्यादिशब्दाभिधेयागरुडाद्याः कतमेषडि तिप्रश्नोत्तरगताअग्न्यादयोयदिप्रसिद्धास्तदाप्यनुपपत्तिरेव । प्रसिद्धाग्न्यादीनांगरुडाद्युत्तमत्वाभावादित्यतस्तत्रोक्ताअप्यग्न्या दयएतएव । तेषांचचंद्राद्युत्तमत्वंसंभवतीत्याशयेनाह ॥ तएतइति ॥ नक्षत्रचंद्रमःशब्दार्थावाह ॥ नक्षत्रमिति ॥ तौश

---

भा० । अग्रंविष्णुंनयेद्यस्मात्सुपर्णोग्निरुदाहृतः । प्रथितंहरिमादायवातीतिप्रथिवःस्मृतः । तद्भार्यापृथिवीनामयत्तदिच्छानुसारिणी । सर्वज्ञ वात्तथायुष्ट्वात्सूत्रात्मावायुरुच्यते । श्रद्धानामैवतत्पत्नीसर्वस्यांतर्निरीक्षणात् । अंतरिक्षमितिप्रोक्तादेवेभ्योधिकवीक्षणात् । आदिकालस्थितोयस्मा दादित्यश्चसदाशिवः । द्यौरुमाचसमुदिष्टावाग्रूपोद्यातिकायतः । तएतेसर्वदेवेभ्योविशिष्टास्तद्वशाःपरे । नक्षत्रमिंद्रउद्दिष्टश्चंद्रःकामउदाहृत । 

। ध्रौ

द्वौतत्रनिर्वक्ति ॥ अत्राणादिति ॥ एतेषुहीदंवसुसर्वंहितमितितस्माद्वसवइतिवाक्यंव्याचष्टे ॥ वासयंतीति ॥ अंतर्णीतण्य
र्थोद्वसतेःकर्त्तर्युकारप्रत्ययः ॥ ३ ॥ कतमेषडितिप्रश्नेवसुपूक्ताअग्न्यादयएवषडित्युच्यंतेतेषांत्रयस्त्रिंशत्सुदेवेषुवसुष्वप्याधिक्यंकु
तइत्याशंकापरिहारायप्राप्तंएतेषुहीदंसर्वंषडितिवाक्यंहेतुहेतुमद्भावंदर्शयन्व्याचष्टे ॥ ज्ञानादीति ॥ अन्येभ्यइंद्रादिसप्तविंश
द्देवेभ्यः । नकेवलंत्रयस्त्रिंशत्सु किंतुवसुष्वपीत्यपिशब्दः ॥ ६ ॥ दशेमेपुरुषेप्राणाआत्मैकादशइतिवाक्यंव्याचष्टे ॥ प्राणाद्या
इति ॥ प्राणादींद्रियाभिमानिनः। आत्मशब्दार्थोबुद्ध्यभिमानवानिति। एतएवेतिसंबंधः ॥ ४ ॥ तेयदास्मादित्यादिनाश्रुत्युक्तं
रुद्रशब्दप्रवृत्तिनिमित्तंएतेषुप्रसिद्धमितिहिशब्देनाह ।/द्वादशवैमासाःसंवत्सरस्यैतआदित्याइतिवाक्यंव्याचष्टे ॥ मासाभिमा
निनइति ॥ धात्रर्यमादिद्वादशादित्यांतर्गतस्येंद्रस्यनक्षत्रपदेनगृहीतत्वाद्विष्णोस्तुगरुडादिपरिवारत्वाभावादाह॥ इंद्राविष्णू
विनैवेति ॥ तर्हिद्वादशमासाभिमानित्वंकथंदशानामित्यतउक्तं ॥ यमचंद्रयुताइति ॥ येमासाभिमानिनोधात्रर्यमाद्याः ते
इंद्राविष्णूविनायमचंद्रयुताद्विषडितिसंबंधः ॥ ५ ॥ स्तनयित्नुरेवइंद्रइत्येतत्स्तनयित्नुभेदउच्यतइतिप्रतीतिनिरासायव्याचष्टे

भा०। अत्राणात्सूर्यचंद्राद्यैराह्लादाच्चैवहेतुतः । वासयंतिजगद्यस्मादेतेष्टौवसवःस्मृताः ॥३॥ ज्ञानादिषड्गुणाःषड्सुतदन्येभ्योधिकायतः।
वसुष्वपितएवोच्चावींद्राद्याःपूर्वकीर्तिताः ॥ ६ ॥ प्राणाद्यावायुपुत्रास्तुदशबुद्ध्यभिमानवान् । बृहस्पतिरितिह्येतेरुद्राइत्येवकीर्तिताः ॥ ४ ॥ मासा
भिमानिनोयेतुयमचंद्रयुताद्विषट् । धात्रर्यमाद्याआदित्याइंद्राविष्णूविनैवतु ॥ ५ ॥

॥ स्तनयित्नोरिति ॥ नक्षत्रपदेनेंद्रस्यगृहीतत्वाद्रूपांतरविवक्षयावायुजस्त्विंद्रइत्युक्तं । ननुकतमःस्तनयित्नुरितिप्रश्नेअशनिरि त्युत्तरमुच्यते । तत्कथमेवंव्याख्यानमित्यतःअशनिशब्दाभिधेयोप्ययमेवेत्याह ॥ सएवेति ॥ वज्रःवज्राभिमानी यतःअतः अरेरशनाच्चाशनिरितिसंबंधः । यज्ञःप्रजापतिरितिवाक्यंव्याचष्टे ॥ यज्ञइति ॥ इंद्रपुत्रोयोजयंतस्सप्रजापतिरितियज्ञइतिचो च्यतइत्यर्थः । ननुकतमोयज्ञइतिपशवइतीत्युत्तरवाक्येपशूनांयज्ञत्वमुच्यते तत्कथमेवंव्याख्यानमित्यतःपशुशब्दाभिधेयोप्य यमेवेत्याह ॥ सएवेति ॥ ६ ॥ अग्निश्चपृथिवीचेत्यादेर्व्याख्यानमुपसंहरति ॥ एवमिति ॥ ननुदक्षाद्याःअधिकाःकस्मात्त्रय स्त्रिंशत्सुनोक्ताइत्यतस्तेप्युक्ताइत्याह ॥ दक्षेति ॥ दक्षाग्निप्रमुखाएवपूर्वोक्ताःवायुजाः। प्राणाइंद्रियाभिमानिनइत्यर्थः । शिवस्य षट्सुप्रवेशेपिइतरेरुद्राःकस्मात्त्रयस्त्रिंशत्सुनोक्ताइत्यतआह ॥ रुद्राइति ॥ तदावेशात्शिवावेशात् । तथाचतदुक्तावेतेप्युक्ता एवेतिभावः । अनिरुद्धस्यत्रयस्त्रिंशत्सुपृथगनुक्तौकारणमाह ॥ कामइति ॥ कामस्यानिरुद्धपितृत्वात्कामएवांतर्भूतत्वेनानि रुद्धःपृथङ्नोक्तः। नन्वपकृष्टोजयंतस्त्रयस्त्रिंशत्सुकस्मादुक्तइत्यतआह ॥मन्विति॥ तथाचेंद्रजयंतोक्त्यामनुरप्युक्तएवेतिभावः ।

भा० । स्तनयित्नोरभीमानीवायुजस्त्विंद्र उच्यते । सएववज्रइंद्रस्यसोशनिश्चाशनादरेः । यज्ञोनामेंद्रपुत्रोयोजयंतइतिचोच्यते । सएव पशुमानित्वात्पशवश्चेतिकथ्यते ॥ ६ ॥ एवंप्राधान्यतोदेवास्त्रयस्त्रिंशत्प्रकीर्तिताः । दक्षाग्निप्रमुखाःसर्वेप्राणाएवहिवायुजाः । रुद्राअपितदावेशात् पृथङ्नोदीरिताइह । कामएवानुविष्टत्वादनिरुद्धश्चनोदितः । मन्वावेशादिंद्रजस्तुसंख्यायामनुवेशितः ।

नन्वश्विप्रभृतयःसंत्यधिकाः तेकस्मात्संख्यायांननिवेशिताइत्यतआह ॥ अश्विनाविति ॥ विनायकइत्येतेअर्यम्णिअंशादि पुचतुर्षुस्थितैर्विशेषावेशैःसंयुताः । तेषांविशेषावेशाअर्यमादिषुसंतीतियावत् । तथाचार्यमाद्युक्तावश्विप्रभृतयोप्युक्ताइतिभावः । अंशइतिद्वादशादित्यानांमध्येएकस्यनामांतरं । अत्रेंद्रकामादिस्त्रीणांशच्यादीनांपृथगनुक्तौकारणंप्रसंगात्पूर्वमेवोक्तं । पूर्वमंत र्यामिब्राह्मणेपृथिव्यग्न्यंतरिक्षवाय्वादित्यचंद्रतारकशब्दैः गरुडाग्निशिवभूताभिमानिवायुसरस्वतीसूर्यचंद्रनक्षत्राण्युच्यंतेइति व्याख्यातं नकेवलमेतावत् किंतुतत्रपृथिव्यंतरिक्षवायुद्युचंद्रतारकाशब्दैरत्रोक्ताःपृथिव्याद्यास्सौपर्णीश्रद्धामुख्यवायूमाकामेंद्रा अप्युच्यंतइत्याह ॥अत्रेति॥ प्रतिपाद्यत्वेनेतिशेषः । कतमेतेत्रयोदेवाइतिप्रश्नस्येमएवत्रयोलोकाइत्युत्तरमुक्तं । तदयुक्तं उक्तरी त्यात्रयाणांलोकानांषट्स्वप्रविष्टत्वेनषट्स्वधिकप्रश्नेएतस्योत्तरत्वायोगादित्यतोलोकशब्दाभिधेयदेवानाह ॥षट्स्विति॥ कथंलो कशब्देनतेऽभिधीयंतेइत्याशंकायांएषुहीमेसर्वेदेवाइतिवाक्यंव्याचष्टे ॥ स्वभार्याणामिति ॥ स्वेवायुर्वींद्रमहेश्वराआश्रयायासां तास्तथोक्ताःतस्यभावस्तत्वंतस्मादित्यर्थः । स्वभार्याणांस्वाश्रयत्वादित्युक्त्यावींद्रमहेश्वरयोःश्रद्धोत्तमत्वाभावेनकथंषट्सुप्राधा न्यमितिशंकापरास्ता । तस्यावायुमात्राश्रयत्वस्यविवक्षितत्वात् स्वयंनिमित्तांतरमाह॥ ज्ञानरूपतइति॥ लोकाइत्येतदत्रापिसं बध्यते। ननुब्रह्मशेषौसपत्नीकौकुतःत्रिष्वनुक्तौ षट्सुत्रयस्त्रिंशत्सुचानुक्तत्वादितिचेन्न । तत्राप्यनुक्तौनिमित्ताभावादित्यतआह॥ 429

भा० । अश्विनौनिर्ऋतिश्चैवकुवेरश्चविनायकः । अर्यम्ण्यंशादिचतुर्षुविशेषावेशसंयुताः । अत्रोक्ताअपिपृथिव्याद्याअंतर्यामिब्राह्मणेभवं ति । षट्सुप्रधानास्तिस्रोहिवायुर्वींद्रमहेश्वराः । स्वभार्याणांस्वाश्रयत्वात्तेलोकाज्ञानरूपतः ।

पदैक्यादिति॥आद्यतुशब्देनचशब्दार्थकेनतत्पत्न्योःश्रद्धासरस्वत्योः समुच्चयः।चशब्देनगरुडस्योमासौपर्ण्योश्चसमुच्चयः। अपि शब्देनवारुण्याःसमुच्चयः।शेषस्यापीत्यस्यनैवोक्तिरित्यत्रापिसंबंधः।तदापिपदेनब्रह्मणःवारुणीब्रह्माण्योश्चसमुच्चयः । तदयमर्थः । ब्रह्मवाय्वोस्तत्पत्न्योःशेपस्यशिवस्यतत्पत्न्योश्चपदैक्यात् गरुडस्यशेषस्यतत्पत्न्योश्चपदसाम्यात् वायुग्रहणेनब्रह्मणः श्रद्धाग्रहणेनब्रह्माण्याः शिवस्यगरुडस्यवाग्रहणेनशेपस्य उमायाःसौपर्ण्यावाग्रहणेनवारुण्यागृहीतत्वात्। ब्रह्मणःब्रह्माण्याःशेपस्यवारुण्याश्च त्रयस्त्रिंशत्सुषट्सुत्रिषुवापृथगुक्तिस्तुनैवेति॥३–६॥कतमौद्वौदेवावितिप्रश्नोत्तररूपंअन्नंचप्राणश्चेतिवाक्यंव्याचष्टे ॥श्रद्धा चेति॥ किंकस्यव्याख्यानमित्यतआह॥अन्नमिति॥ इतिशब्दोध्याहार्यः । प्राणइतिमारुतःप्रकीर्तितइतिपरिशेषसिद्धत्वात् स्फुटत्वाच्चानुक्तिः । श्रद्धायामन्नशब्दंनिर्वक्ति ॥ अतीतत्वादिति ॥ सावायोःपत्नीश्रद्धा देवताभ्यःशेषादिभ्यः अतीतत्वात्उत्तमत्वात् अत् नेतृत्वात्नं इत्यन्नमित्युच्यतइत्यर्थः । ननुत्रिष्वधिकप्रश्नस्योत्तरत्वेनोक्तौद्वौदेवौश्रद्धामारुतौकथंस्यातां श्रद्धायास्त्रिष्वनुक्तत्वादितिचेन्न । षट्स्वेवस्वस्वभार्यापेक्षयाधिकप्रश्नेत्रयइत्युत्तरस्य स्वरूपोत्तमत्वाभिप्रायेणप्रश्नेद्वावित्युत्तरस्योक्तत्वात् । अन्यथाषट्सुस्वरूपोत्तमत्वाभिप्रायेणैवप्रश्नेद्वावित्येवोत्तरंवक्तव्यं । नतुत्रयइतिवींद्रमहेश्वरयोःश्रद्धोत्तमत्वाभावादितिभावः ॥ ८ ॥ अन्नंचैवप्राणश्चेत्युक्तएवप्राणःकतमएकोदेवइतिप्रश्नोत्तरत्वेनोच्यतइतिप्रतीतिनिरासायप्राणइतिवाक्यगतप्राणशब्दा

---

भा० । पदैक्याद्ब्रह्मवाय्वोस्तुपदसाम्याच्छिवस्यच । शेपस्यापितुनैवोक्तिःपृथक् ॥ ३–६ ॥ श्रद्धाचमारुतः । द्वौदेवाविहसंप्रोक्तावन्नं श्रद्धाप्रकीर्तिता । अतीतत्वाद्देवताभ्योनेतृत्वाच्चान्नमुच्यते । श्रद्धेतिवायोःपत्नीसा ॥ ८ ॥

भिधयमाह ॥ **प्राणोवैइति** ॥ प्राणशब्दंविष्णौनिर्वक्ति ॥ णेत्येवेति ॥ आइत्यनुवादेनसमंतादितिव्याख्यानं। प्रेत्युपसर्गार्थः प्रकृष्टतइति । हियस्मात्भगवान्विष्णुःआसमंतात्प्रकृष्टतःणःआनंदरूपः तस्मादेवप्राणशब्दवाच्यइत्यर्थः । कतमोऽध्यर्धइति प्रश्नोत्तरयोर्यंपवतइतिवाक्यंभूतवायुपरत्वप्रतीतिनिरासायव्याचष्टे ॥ अध्यर्धइति ॥ कुतोवायुरध्यर्धइतिआशंकानिरासकत यायदस्मिन्निदंसर्वंअध्यार्ध्नोत्तेनाध्यर्धइतिवाक्यंव्याचष्टे ॥ अध्यर्धाइति ॥ हियस्माद्वायोःगुणाःनित्यमध्यर्धाःआधिक्येन ऋद्धाः तत्तस्मादेववायुरध्यर्धइत्यर्थः । वायोरध्यर्धगुणत्वमेवकुतइत्याशंकानिरासकतयायदयमेकइवैवपवतेऽथेतिवाक्यंप्रवृत्त मितिभावेनएकःपवतेद्वितीयःपवतइत्यनुक्त्वाएकइवेतिकिमर्थमुक्तमित्यतस्तत्तदभिप्रायमाह ॥ नचेति ॥ हरिःयतःतद्विशिष्टः तेनवायुनाविशिष्टःविशेषतस्तत्रसन्निहितइतियावत् । अतोवायोरेकत्वेकेवलत्वंनभवेत् । यद्वाएकत्वंमुख्यत्वं तद्विशिष्टस्तद पेक्षयोत्तमः। यतश्च तस्मिन्वायौ सर्वस्माद्देवतागणात्हरेरभ्यधिकाप्रीतिरतोद्वितीयत्वंनभवेत्। यस्ययस्मिन्नधिकाप्रीतिःसएवस इत्युच्यते । नतुततोद्वितीयइतिलोकेदर्शनात् । अतएकइवेत्युच्यतइतिभावः । इदानींयदयमेकइवैवपवतइतिवाक्यार्थस्याध्यर्ध गुणत्वेहेतुत्वंदर्शयति ॥ तेनेति ॥ उक्तप्रकारेणएकइवेत्युच्यमानत्वेनेत्यर्थः । विष्णोरिवनैतस्याध्यर्धगुणत्वमित्याह ॥ सर्व स्मादिति ॥ यस्मादध्यर्धगुणःअतोध्यर्धइतीरितइति यदस्मिन्निदंसर्वमितिवाक्यार्थोपसंहारः । यदस्मिन्नितिवाक्यस्यप्रकारां



---

भा० । प्राणोवैविष्णुरुत्तमः । णेत्येवानंदउद्दिष्टआसमंतात्प्रकृष्टतः । प्राणोहिभगवान्विष्णुरध्यर्धोवायुरुच्यते । अध्यर्धाहिगुणानित्यंवायो रध्यर्धएवतत् । नचैकत्वंभवेद्वायोस्तद्विशिष्टोयतोहरिः । नचद्वितीयतातस्मिन्प्रीतिरभ्यधिकाहरेः । तेनाध्यर्धगुणोयस्मात्सर्वस्माद्देवतागणात् ।

तरेणतात्पर्यमाह ॥ नचेति ॥ नियमनादावित्यर्थः । यस्मादित्यनुवर्तते । अनेनयस्मात्इदंसर्वंजगत् । अस्मिन्वायौ । अध्यार्धेत्नियम्यत्वादिनास्थापितमभवत् । तेनअध्यर्द्धइतीरितइतिव्याख्यातंभवति । ननुदेवेषुअधिकाधिकदेवोक्त्यवसरेवायोरनंतरंश्रीरपिवक्तव्या नचवाय्वाद्युत्तमत्वाभावादुत्तमत्वेपिहर्यभिन्नत्वाद्वातदनुक्तिरितिवाच्यं वाय्वादिसर्वोत्कृष्टत्वात् विष्णोर्भिन्नत्वाच्च । तत्कुतस्तदनुक्तिरित्यतआह ॥ अत्यंतरंगमिति ॥ यत्यस्मात् । श्रीहरेःअत्यंतरंगंवाय्वपेक्षयाअतिशयेनअंतरंगभूता तस्मात्तस्याःहरेःसकाशात्स्वरूपविभेदेपिसर्वोत्कृष्टापिहरेःपृथक्ननेरितेतिसंबंधः । सर्वोत्कृष्टत्वोक्त्यातस्याहरिसाम्यशंकांवारयति ॥ तस्याअपीति ॥ गुणैःपरइतिसंबंधः । दोषवान्भवतीत्यदोषवान् । एकोदेवः प्राणइत्युक्तं । कस्मादेकोदेवःप्राणोदेवेषुसत्स्वपीत्यतआह ॥एकइत्युच्यतइति॥ तस्यैवमुख्यत्वादित्यर्थः। तत्कुतइत्यतआह ॥यस्मादिति॥ सब्रह्मत्यदित्याचक्षतइत्येतद्व्याचष्टे ॥ ब्रह्मासाविति ॥ नित्यमित्यवधारणार्थं । यथाश्रुत्यादिनाप्रतिपादितंतथात्वेनैवानाद्यनंतकालतःमत्स्यादिरूपेणवा यातिनतुविकारेण यतःततःत्यदित्युक्तःत् इत्यस्यार्थःतथात्वेनेति यदित्यस्यार्थोयातीति ॥ ९ ॥

भा० । नचाशक्यंनचाप्राप्यमतोध्यर्धइतीरितः । अत्यंतरंगंयत्तस्मान्नहरेःपृथगीरिता । श्रीःस्वरूपविभेदेपिसर्वोत्कृष्टापिनित्यशः । तस्याअपिपरोविष्णुर्गुणैःसर्वैरदोषवान् । एकइत्युच्यतेनित्यंयस्मान्नान्यस्तथाविधः । तत्परोवागुणोद्रेकेब्रह्मासौगुणपूर्तितः । तथात्वेनयतोनित्यमविकारेणयातिहि । त्यदित्युक्तस्ततोविष्णुःसर्वदेवेश्वरेश्वरइतिमहामीमांसायां ॥ ९ ॥

शारीरःपुरुषःकाममयःपुरुषःआदित्येपुरुषःश्रौत्रःपुरुषःछायामयःपुरुषःआदर्शेपुरुषःअप्सुपुरुषःपुत्रमयःपुरुषइतिशब्दाष्टकस्य कोशादिप्रसिद्धार्थपरत्वप्रतीतिनिरासायाभिधेयमाह ॥ **शारीरइत्यादिना** ॥ ननुयद्येवंशारीरादिशब्दैर्मन्वाद्याविवक्षिताः तर्हिअमृतस्त्रीसत्यदिक्मृत्युअसुप्रजापतीनांतत्तद्देवतात्वंकथमुच्यते प्रसिद्धानांतेषांमन्वाद्युत्तमत्वस्यदेवतात्वस्यचाभावादित्यतःअमृतादिशब्दाभिधेयानाह ॥ **अमृतमित्यादिना** ॥ गरुत्मच्छेषकाःगरुडशेषदक्षाः वायुरेवअमृतशब्दोक्तएव ब्रह्मैवसत्यशब्दोक्तएव अंतर्गतेनपालकेन स्वरूपेणेत्युक्त्याअमृतंवायुर्बाह्यरूपेण सत्यंब्रह्मांतर्गतरूपेणेतिसूचितं। वरुणशब्दस्यदेवतापरत्वेवरुणस्यपर्जन्योत्तमत्वेचविवादाभावात्तदनुक्तिः । तत्रअष्टस्वपिप्रकरणेषुपृथिव्येवयस्यायतनमित्यादिनाऽऽश्रयस्योक्तत्वात् । लोकशब्देनप्रकाशकंग्राह्यं तथाचज्योतिःशब्दस्यपुनरुक्तत्वंस्यादित्यतस्तयोरर्थभेदमाह ॥ **प्रकाशइति** ॥ प्रकाशःप्रकाशकं । मनोज्योतिरितिप्रकरणाष्टकगतमनःशब्दस्यप्रसिद्धार्थतयाव्याख्याननिरासायाभिधेयमाह॥ **मनःस्थितेति** ॥ अन्यथामनसोविज्ञानहेतुत्वस्यप्रसिद्धत्वान्नवक्तव्यमितिभावः। अग्निर्लोकःहृदयंलोकःश्रोत्रंलोकःचक्षुर्लोकइत्यत्राग्न्यादिशब्दानांप्रसिद्धार्थत्वेअग्न्या

---

भा० । शारीरोमनुरुद्दिष्टःकामःप्रद्युम्नउच्यते । आदित्यस्थस्तथारुद्रःश्रौत्रश्चंद्रउदाहृतः । छायामयस्तुनिर्ऋतिरादर्शेसूर्यएवच । पर्जन्यस्त्वप्सुपुरुषःशक्रःपुत्राभिमानवान् । अमृतंवायुरुद्दिष्टःस्त्रियःश्रीर्गौरुमातथा । सत्यंब्रह्मासमुद्दिष्टोगरुत्मच्छेषकादिशः । आदेशनाद्दिशःप्रोक्तामृत्युर्यमउदाहृतः । अंतर्गतेनरूपेणवायुरेवत्वसुःस्मृतः । पालकेनस्वरूपेणब्रह्मैवात्रप्रजापतिः । प्रकाशस्त्वांतरोज्योतिर्लोकोबाह्यइतीर्यते । मनस्स्थितामनोनाम्नीबोधरूपत्वतोरमा ।

दीनांमन्वादिज्ञानहेतुत्वासंभवात्तदभिधेयमाह ॥ सैवेति ॥ यत्यस्मात् हृदिरमायाअयनंनिवसनंततोहृदयमित्यर्थः । श्रोत्रंश्रवणहेतुत्वादित्यपिग्राह्यं । ननुमनोनिष्ठस्यरमारूपस्येववागभिमान्यग्निहृदयचक्षुःश्रोत्रनिष्ठस्यापितस्यशरीरांतर्गतत्वेनांतःप्रकाशहेतुत्वमेवयुक्तं नतुसौरालोकादिवाह्यप्रकाशहेतुत्वं । अन्यनिष्ठस्यान्यत्रहेतुत्वेविरोधादित्यतआह ॥ वुद्धीति ॥ वुद्धिवृत्तेस्तुजीवस्वरूपभिन्नत्वेनवहिःप्रकाशत्वमेवेतिभावः । तथाचपूर्वमांतरःप्रकाशइतिसाक्षी वाह्यःप्रकाशइतिवुद्धिवृत्तिर्विवक्षितेतिनानुपपत्तिरितितात्पर्यं । इमएवत्रयोलोकाइत्येतत्वायुर्वीद्रमहेश्वराइतिप्रमाणेनव्याख्यातं तत्रलोकशब्दस्योक्तार्थत्वमनंगीकृत्यपृथिव्यंतरिक्षद्युरूपप्रसिद्धलोकपरत्वांगीकारेवाधकमाह ॥ इमएवेति ॥ इमएवत्रयोलोकाइत्यत्रलोकशब्देनपूर्वोक्तानांवायुर्वींद्रमहेश्वराणामनुक्तौपृथिव्यंतरिक्षद्युरूपलोकमात्रोक्तौ एतेषुहीमेसर्वेदेवाः इतिवाक्यशेषोक्तःसर्वदेवानांलोकमात्रेंतर्भावःकथंस्यात् । सर्वदेवानांजडलोकाधीनत्वाभावादित्यर्थः । उपलक्षणमेतत् । लोकानांदेवत्वाभावेनकतमेत्रयोदेवाइतिप्रश्नस्येदमुत्तरंनस्यादित्यपिग्राह्यं । लोकशब्दस्यपूर्वोक्तवाय्वादिदेवतापरत्वांगीकारेपिकथमंतर्भावउपपद्यतइत्यतआह ॥ उक्तेति ॥ वायुर्वींद्रमहेश्वराणामतिसमर्थत्वेनसर्वदेवानांतदधीनत्वात्तेषांतत्रांतर्भावोघटतएवेतिभावः । ननुनास्माभिस्त्रयोलोकाःपृथिव्यादयइति

भा० । सैवाग्निस्थाऽदनाग्नित्यमग्निरित्येवगीयते । हृदयंवुद्धिसंस्थासात्वयनंहृदियत्ततः । चक्षुःसादृष्टिहेतुत्वादष्टानांलोकएवसेतिच । वुद्धिवृत्त्यपेक्षयावहिःप्रकाशहेतुत्वमपिदेव्यानविरुध्यते । इमएवत्रयोलोकाइतिपूर्वोक्तानांदेवानामनुक्तौकथंलोकमात्रसेर्वदेवानामंतर्भावः । उक्तांगीकारेनंतर्भावःकथं ।

त्रेस

व्याख्यायते येनोक्तदोषःस्यात् किंतुपृथिवीमग्निंचैकीकृत्यैकोदेवः अंतरिक्षंवायुंचैकीकृत्यद्वितीयः दिवमादित्यंचैकीकृत्यतृतीय इत्येवंत्रयोलोकाइत्यनेनाग्न्यादयस्त्रयोदेवाउच्यंते । एषुत्रिषुदेवेषुहियस्मात्सर्वेदेवाःअंतर्भवंतीतिव्याख्यायतइत्यतस्तत्रापिबाध कमाह ॥ **कथंचेति** ॥ सर्वदेवानामंतर्भावइतिवर्तते । अग्न्यादीनामिंद्राद्युत्तमत्वाभावेनेंद्रादीनांतदधीनत्वासंभवादितिभावः । एतेनइमएवत्रयोलोकाइतिक्रमेणाग्निवाय्वादित्यात्मनाएकीकृत्यत्रयोदेवाउच्यंते । कथं हियस्मादेषुत्रिषुलोकेषुइमेअग्निवाय्वादि त्यांतर्भूताःसर्वेदेवाःअंतर्भवंतीत्येतदपिनिरस्तं अग्निवाय्वादित्येषुसर्वदेवानामंतर्भावासंभवात् । ननुलोकमात्रेकथंसर्वदेवानामंत र्भावइतियदुक्तं तदयुक्तं । एषुत्रिषुलोकेषुसर्वेदेवाआवसंतिइत्यर्थांगीकारात् । आवासमात्रस्यचलोकेष्वपिसत्त्वात् । अग्न्यादौस र्वदेवानामंतर्भावोनामअग्न्याद्युपजीव्यत्वादिकमेवविवक्षितमितिनतत्राप्यनुपपत्तिरित्यतआह ॥ **नचेति** ॥ आवासइत्युपलक्षणं उपजीव्यत्वादिकमपीतिग्राह्यं । निवासत्वादिकमित्युत्तरत्रादिपदप्रयोगात् । मात्रशब्दोऽनभिमतव्यावर्तकः कुतोनेतिचेत् न । यदित्रिषुलोकेषुसर्वदेवानामावासमात्रंविवक्षितंस्यात् तदाप्रतिशरीरमपिसर्वदेवानांतत्त्वाभिमानितयाऽऽवासात्लोकानांशरीरा पेक्षयाविशेषोनस्यात् । यदिवाअग्न्यादिषुसर्वदेवानामुपजीव्यत्वादिकंविवक्षितं तदावक्तव्यं तदुपजीव्यत्वादिकंकिमग्न्यादेःसर्व देवोत्तमत्वेन उतहविरादानाद्युपकारमात्रेण नाद्यः तदभावादित्युक्तत्वात् । नद्वितीयः प्रतिशरीरमपिदेवानांनियामकतया ऽऽवासात्तन्नियम्यस्यजीवस्यापिताहृगुपजीव्यत्वसत्वेनाग्न्यादीनांजीवाद्विशेषाभावापत्तेः । तथाचविशिष्यएतेष्वुहीमेसर्वेदेवाःइत्यु 

भा० । कथंचाग्न्यादिषु । नचावासमात्रमत्रविवक्षितं ।

क्तिरयुक्तास्यादित्याह ॥ प्रतिशरीरमिति ॥ नचावासमात्रमित्युक्तमात्रपदेनाधिकमपिविवक्षितमितिलब्धं तत्किमित्यतआह ॥ सामर्थ्येति ॥ यद्वा यदुक्तंकथंलोकमात्रेसर्वदेवानामंतर्भावइति उक्तांगीकारेनंतर्भावःकथमितिवा तत्रोभयत्रहेतुमाह ॥ सामर्थ्येति ॥ चशब्दोहेत्वर्थः । अत्रएषुहीमेसर्वेदेवाइतिवाक्ये तथाचलोकमात्रस्यसामर्थ्याधिक्याभावात् वायुवींद्रमहेश्वराणांतुसामर्थ्याधिक्यसद्भावादितिभावः। सामर्थ्याधिक्यमत्रविवक्षितमितिकुतोज्ञायते सामर्थ्याधिक्यस्यांतर्भावहेतुत्वंचकुतो ज्ञायतइत्यतआह ॥ एतेषुहीति ॥ प्रथमादिपदेन तस्यकादेवता इतिप्रश्नोत्तररूपं अमृतमितिहोवाचेति स्त्रियइतिहोवाच इत्यादिग्राह्यं । द्वितीयादिपदेनगुणाध्यर्धत्वगुणपरिपूर्णत्वशारीरादिदेवतात्वादीनांग्रहणंइत्यादिषुवाक्येषुमध्ये । आद्येषुत्रिषुवाक्येषु आदिपदोपात्तेषुचषड्गुणोद्रेकादीनामुक्तेःसामर्थ्याधिक्यमत्रविवक्षितमितिज्ञायते । एतस्यापितत्समानन्यायत्वात् चतुर्थेत्रयश्चत्रीचशतेत्युक्तानांदेवानांत्रयस्त्रिंशत्सुदेवेषुअंतर्भावस्य महिमकारणकत्वस्य सामर्थ्यपरिमितत्वकारणत्वस्योक्तेरंतर्भावाधिकरणस्यसामर्थ्याधिक्यमितरेषांतत्रांतर्भावेकारणमितिज्ञायतइतिभावः। षड्गुणोद्रेकेतिएतेषुहीदंसर्वंषडितिवाक्यतात्पर्यमुक्तं । तस्य तत्राप्रतीतेरनूद्यव्याचष्टे ॥ इदमिति ॥ सर्वंषडित्यनुवादेकर्तव्यएकवचनांतस्यसर्वशब्दस्यबहुवचनांतेनषडित्यनेनसामानाधिकर

भा० । प्रतिशरीरमपिसर्वदेवानामावासान्नलोकादीनांविशेषः । सामर्थ्याधिक्यंचात्रविवक्षितं । एतेषुहीदंसर्वंषडिति । यदस्मिन्निदंसर्वमध्याधोत् । सब्रह्मत्यदित्याचक्षते । महिमानएवैषामित्यादिषुषड्गुणोद्रेकादीनामुक्तेःअंतर्भावस्यचमहिमकारणकत्वोक्तेः ।



436

ण्यसिध्यर्थंगुणषट्कमित्युक्तं । सर्वशब्दार्थः पूर्णमिति । यद्वा सर्वमडितिसामानाधिकरण्यानुपपत्तिशंकापरिहारायाह ॥ इदंस र्वमिति ॥ गुणषट्कस्यसर्वत्वंनामकिमित्यतआह ॥ पूर्णमिति ॥ ननुगुणषट्कस्यपूर्वमप्रकृतत्वादिदमितिकथंतस्यपरामर्शइ त्यतआह ॥ इदंशब्दइति ॥ गुणषट्कस्यविवक्षितत्वात्वक्तुमिष्टत्वेनबुद्धिसन्निहितत्वात् तत्रइदंशब्दःप्रयुक्तइत्यर्थः । ग्रंथाप्र कृतेपिबुद्धिसन्निहितेइदंशब्दप्रयोगेदृष्टांतमाह ॥ अयमिति ॥ अयंमेहस्तोभगवानित्यत्रायमितिविवक्षितएवार्थेयथाप्रयुज्यते तथात्रापीत्यर्थः। उक्तन्यायमन्यत्राप्यतिदिशति ॥एवमेवेति॥ अयमपिइदंशब्दःग्रंथाप्रकृतेपिबुद्धिसन्निहितेप्रयुक्तइत्यर्थः।ननुन चावासमात्रमत्रविवक्षितं सामर्थ्याधिक्यंचेत्युक्त्याऽऽवासोपिविवक्षितोज्ञायते तथाचतेनैवांतर्भावोक्त्युपपत्तौसामर्थ्याधिक्यवि वक्षायांतर्भावोक्तिरित्यंगीकारेकिंनियामकंइत्यतआह ॥ गुणाधिक्येनेति ॥तदधीनत्वइत्यनेनांतर्भावोव्याख्यातः । आदिपदे नोपजीवनादिकंग्राह्यं । तत्रहेतुमाह ॥ उत्तमानामिति ॥ आदिपदेननियमनशक्त्यादीनांग्रहणं । तथाचाधिकव्याप्त्यादिम त्सूत्तमेष्वंतर्भूतानांतेषांतत्रनिवासत्वादिकमपिसंभवतीतिभावः । ननुगुणाधिक्येनतदधीनत्वेनिवासत्वादिकमिव निवासत्वादौ गुणाधिक्यादिकमंतर्भवतिचेत् कोविशेषोयुष्मद्व्याख्यानइत्यतआह ॥ नत्विति ॥ निवासादिहेतुगृहादौगुणाधिक्यादर्शनादि तुः

भा० । इदंसर्वंगुणषट्कंपूर्णंगुणषट्कमित्यर्थः । इदंशब्दोविवक्षितत्वादयंभगवानितिवत् । एवमेवेदंसर्वमध्याह्नोदितिच । गुणाधिक्ये नतदधीनत्वेविवक्षितेनिवासत्वादिकमंतर्भवति । उत्तमानामधिकव्याप्त्यादेः । नतुनिवासत्वादौगुणाधिक्यादिकं ।

तिभावः । एतेषुहीमेसर्वेदेवाइत्यत्रनिवासत्वमात्रेणांतर्भावउच्यतइत्यंगीकारेउपक्रमविरोधलक्षणंदूषणांतरमाह ॥ कथंचेति ॥ तन्महिमत्वेनतदपेक्षयासामर्थ्यन्यूनत्वेन उक्त्वामहिमानएवैषामेतइत्यनेनेत्यर्थः । एवंइमएवत्रयोलोकाइतिवाक्यस्योक्तार्थत्वमुपपाद्येदानीममृतस्त्रीसत्यादिशब्दानांअमृतंवायुरुद्दिष्टःस्त्रियःश्रीर्गौरुमातथेत्याद्युक्तव्याख्यानानंगीकारेबाधकमाह ॥ कथंचेति ॥ चशब्दःपूर्ववाक्योपपादनेनसहसमुच्चयार्थः । अन्यथाअमृतादिशब्दैःपूर्वोक्तवाय्वादिदेवानामनुक्तौ । ननुस्यादेतत् यदिपूर्वोक्तदेवानांसामर्थ्याधिक्यमेवप्रमितंस्यात् तदेवकुतइत्यतआह ॥ प्रसिद्धंचैतदिति ॥ आद्यंप्रमाणद्वयंवायोःसर्वदेवोत्तमत्वे।देवानामात्मास्वामीत्यर्थः । भुवनस्यगर्भः भुवनंव्याप्यवर्तमानः तस्मैवातायहविषाविधेमेतिवाक्यशेषादिदंवायुविषयं । इंद्रवातःवायुःतेत्वदादीनांआत्मास्वामीत्यर्थः । त्रयस्त्रिंशत्सुदेवेषुषण्णामेवाधिक्यस्योक्तत्वेनेंद्रस्यइतरदेवसाधारण्यशंकापरिहारायतस्यापीतरदेवोत्तमत्वेप्रमाणमाह ॥ इंद्रइति ॥ ओजिष्ठःअवष्टंभनशक्तिमान् । पदैक्याद्वायुग्रहणेनब्रह्मापिगृहीतइत्युक्त्याब्रह्मणःसर्वदेवोत्तमत्वंसूचितं । तत्रप्रमाणमाह ॥ ब्रह्मेति ॥ अयमितिवाक्यंवायोर्विष्णवधीनत्वेमानं । तस्मेत्याइतिवायोःसर्व

---

भा० । कथंचतन्महिमत्वेनांतर्भावमुक्त्वानिवासत्वमात्रेणांतर्भावउच्यते । कथंचान्यथाकामादीनांप्रसिद्धमहिमानांस्त्रीमात्रादिकंदेवतोच्येत । प्रसिद्धंचैतत् । आत्मादेवानांभुवनस्यगर्भः । आत्मातेवातः । इंद्रोवैदेवानामोजिष्ठः । ब्रह्मादेवानांप्रथमःसंबभूव । अयंवावशिशुर्योयंमध्यमःप्राणः । तमेताःसप्ताक्षितयउपतिष्ठंते । तद्याइमाअक्षँलोहिन्योराजयस्ताभिरेनंरुद्रोन्वायत्तोयच्चक्षुष्कंतेनेंद्रः ।

देवोत्तमत्वे । तत्रैवस्मृतिद्वयंपठति ॥ अश्वमेधइति ॥ सर्वेषांचेतिचशब्दःअभिव्याहृत्यर्थकापिशब्दार्थः । प्राणिनांप्राणभूतत्वेहेतुमाह ॥ अनावृत्तिरिति ॥ देहिनांदेहपातेअनस्यमुख्यप्राणस्याऽऽवृत्तिःकारणत्वमित्यर्थः । वेधसःसर्वज्ञावरुणाद्यादेवाः । मारुतस्यवायोः । क्रतुं सचंतकृतवंतइतिवायोःसर्वदेवोत्तमत्वेमानं । विष्णोर्वायूत्तमत्वेउत्तरंवाक्यषट्कं । निचिक्युःज्ञातवंतः । आत्मतःपरमात्मनः । प्राणाच्छ्रद्धामित्यनेनाध्यर्धस्यप्राणस्यान्नंचैवप्राणश्चेत्युक्तान्नाख्यश्रद्धोत्तमत्वमुक्तमपिप्रमापितंभवति । इमएवत्रयोलोकाइतियद्रुद्रस्योमादिसर्वदेवाश्रयत्वमुक्तं यच्चब्रह्मणःरुद्राद्याश्रयत्वमभिप्रेतं विष्णोश्चतदाधारत्वंतत्रप्रमाणमाह ॥ रुद्रमिति ॥ इत्यादिषुसर्वत्र एतत्वाय्वादेःसामर्थ्याधिक्यं प्रसिद्धमित्यर्थः । श्रीःस्वरूपविभेदेपिसर्वोत्कृष्टापिनित्यशइत्युक्तं तत्रप्रमाणमाह ॥ श्रियइति ॥ श्रियःप्रसादंश्रितःकुशेशयेशयःनीरजेस्थितः सब्रह्मा यंशौरिंप्रशशंस सःकृष्णाश्रिंत्य इतियोजना ॥ १०–१७ ॥ शाकल्योयाज्ञवल्क्येतिसंबोध्योवाच । कुरुपांचालानांब्राह्मणानत्यवादीरितियत्इदंभवान्ब्रह्मविद्वा

---

भा० । अश्वमेधःक्रतुश्रेष्टोज्योतिःश्रेष्ठोदिवाकरः । ब्राह्मणोद्विपदांश्रेष्ठोदेवश्रेष्ठश्चमारुतः । वायुर्भीमोभीमनादोमहौजास्सर्वेषांचप्राणिनां प्राणभूतः । अनावृत्तिर्देहिनांदेहपातेतस्माद्वायुर्देवदेवोविशिष्टः । क्रतुंसचंतमारुतस्यवेधसः । वायोरात्मानंकवयोनिचिक्युः । आत्मतएषप्राणो जायते । योवायौतिष्ठन् । देवानांदेवतावायुर्वायोर्देवोजनार्दनः । सप्राणमसृजत । प्राणाच्छ्रद्धां । एतस्माज्जायतेप्राणः । रुद्रंसमाश्रितादेवारुद्रो ब्रह्माणमाश्रितः । ब्रह्मामामाश्रितोनित्यंनाहंकंचिदुपाश्रितइत्यादिषुसर्वत्र । श्रियःप्रसादंसकुशेशयेशयःश्रितःसचिंत्यःप्रशशंसशौरिमित्यादिच ॥ १०–१७ ॥

निति सदेवाःसप्रतिष्ठादिशोवेदेतिकिमितिप्रतीत्या दिशोवेदसदेवाइतिवाक्यमपिशाकल्यवचनमितिप्रतीयते तामपाकरोति ॥ दिशइति ॥ अन्यथाकिंब्रह्मविद्वानित्यस्योत्तराभावप्रसंगइतिभावः । ननुदिशोवेदेत्यस्ययाज्ञवल्क्यवचनत्वेपिकिंब्रह्मविद्वानित्यस्यकथमुत्तरंजातं । एतस्यतदुत्तरत्वाप्रतीतेरित्यतआह ॥ सर्वेति ॥ दिशोवेदेत्युच्यमानंज्ञानंसप्रतिष्ठाःपरब्रह्मपर्यंतमाश्रयपरासाहित्येनदिशोवेदेत्युक्त्याऽऽदित्याद्युदानांतसर्वाश्रयत्वेनब्रह्मणोपिज्ञानंभवतीतिकिंब्रह्मविद्वानित्यस्यापिइदमुत्तरंभवतीत्यर्थः । ननुकिंब्रह्मविद्वानितिप्रश्नेब्रह्मवेदेत्येववक्तव्येसप्रतिष्ठाःसदेवादिशोवेदेतिकिमर्थमुच्यतइतिचेन्न । नकेवलमहंब्रह्ममात्रंवेदकिंतुतदाश्रितादिशोदेवांश्चवेदेतिस्वस्यज्ञानाधिक्यज्ञापनायतथोक्तत्वात् । तदिदमुक्तंसर्वप्रतिष्ठात्वेनेति । यदिशोवेत्थसदेवाःसप्रतिष्ठाइत्यत्रखंडस्यसमाप्तत्वादन्वयाप्रतीतेरुत्तरखंडस्थवाक्येनान्वयंदर्शयन् किंचिद्व्याचष्टे ॥ यदीति ॥ आदित्यश्चक्षुषि चक्षुःरूपेषुरूपाणिहृदयेप्रतिष्ठितानीत्युक्तं तत्रादित्यादीनांजडचक्षुराद्याश्रितत्वमुच्यतइतिप्रतीतिनिरासायचक्षुरादिशब्दार्थकथनपूर्वकंतद्व्याचष्टे ॥ आदित्यस्येत्यादिना ॥ मनोश्चक्षुःशब्दप्रवृत्तौनिमित्तमाह ॥ चक्षुस्थइति ॥ दृष्टिशक्तीशःदृष्टिशक्तिनियामकः । शक्रस्यापिअन्याश्रयस्यापीत्यर्थः । एवंतस्याअपीत्याद्यपिव्याख्येयं ॥ २० ॥ यमोयज्ञेयज्ञोदक्षिणायांदक्षिणाश्रद्धायांश्र

---

भा० । दिशोवेदसदेवाःसप्रतिष्ठाइतियाज्ञवल्क्यइतिवचनं सर्वप्रतिष्ठात्वेनब्रह्मणोपिज्ञानंभवतीति किंब्रह्मविद्वानित्यस्यचोत्तरं ॥ १९ ॥ यदिदिशोवेत्थतर्हिकिंदेवतोस्यां । आदित्यस्याश्रयश्चक्षुर्नामास्यायंसुवोमनुः । चक्षुस्थोदृष्टिशक्तीशोरूपात्मेंद्रस्तदाश्रयः । बुद्धितत्वात्मिकोमाचशक्रस्यापिसमाश्रयः ॥ २० ॥

द्धाहृदयेप्रतिष्ठितेत्युक्तं तद्व्याचष्टे ॥ एवमित्यादिना ॥ चशब्दोऽपिशब्दार्थः । यमस्यापिप्रसिद्धप्रभावस्यापीत्यर्थः ॥ रति रेवेति ॥ प्रसिद्धिद्योतनायैवकारः । अनिरुद्धस्यरतिपुत्रत्वात्तत्समस्यापितदाश्रयत्वंयुक्तं ॥ २१ ॥ वरुणोप्सुआपोरेतसिरेतो हृदयेप्रतिष्ठितमित्युक्तं तद्व्याचष्टे ॥ अब्देवतेत्यादिना ॥ उमैवशक्रकामाश्रयत्वेनोक्तैव ॥ २२ ॥ सोमोदीक्षायांदीक्षासत्ये सत्यंहृदयेप्रतिष्ठितमित्युक्तं तद्व्याचष्टे ॥ तस्यैवेत्यादिना ॥ तुशब्दोविशेषार्थः । तमेवाह ॥ दिग्गीशितुरिति ॥ तथाचसुरगु र्वाश्रितस्यैवसोमस्यरूपविशेषापेक्षयाशतरूपाश्रयत्वंनविरुद्धमितिभावः । नचशतरूपायाःसोमसमानत्वोक्तेःकथमेतदितिवाच्यं।स मानत्वेपिस्वेच्छयाऽऽश्रयाश्रयिभावेविरोधाभावात्। यद्वाएतदुक्त्यनुरोधेनकामादिंद्रस्येवशतरूपायाअपिसोमात्किंचिदाधिक्यम स्तीतिज्ञायते । साम्योक्तिस्तुइंद्रकामसाम्योक्तिवद्व्याख्येया।सत्यशब्दार्थः स्रष्टृरूपस्येति।रूपविशेषोक्तेःपूर्वोक्तएवाभिप्रायः॥२३॥ अग्निर्वाचिवाक्हृदयेप्रतिष्ठितेत्युक्तं तद्व्याचष्टे ॥ मध्यदिक्स्वामिनइत्यादिना ॥ ध्रुवायांदिशीत्यस्यार्थोमध्यदिगिति । प्राची दक्षिणामध्येत्यर्थः । सुष्ठ्वाधारःस्वाधारः ॥ २४ ॥ कस्मिन्हृदयंप्रतिष्ठितमितिप्रश्नस्योत्तरंनप्रतीयतइत्यतोयत्रैतदन्यत्रास्मन्म

---

भा० । एवंयमस्याश्रयश्चयज्ञमान्यनिरुद्धकः । दक्षिणामानिनीदेवीरतिरेवतदाश्रयः । श्रद्धारूपःसदाकामस्तस्याअपिसमाश्रयः । हृदया त्मिक्युमातस्यकामस्यापिसमाश्रयः ॥ २१ ॥ अब्देवतासदाचंद्रोवरुणस्यसमाश्रयः । रेतआत्मासुरगुरुःसोमस्यापिसमाश्रयः । तस्याप्युमैवाश्र यःस्यात्तस्यैवंतुदिग्गीशितुः ॥ २२ ॥ सोमस्यदीक्षारूपातुशतरूपासमाश्रयः । तस्याःसत्यात्मकोदेवोमनुरेवसमाश्रयः । तस्याप्युमैवाश्रयःस्या त्स्रष्टृरूपस्यनित्यदा ॥ २३ ॥ मध्यदिक्स्वामिनोग्नेश्चस्वाधारोवाग्बृहस्पतिः । तस्याप्युमैवहृदयरूपानित्यंसमाश्रयः ॥ २४ ॥

न्यासाइत्यादिउत्तरवाक्यानुरोधेनोत्तरमाह ॥ तस्याइति ॥ अस्मदितित्वंचेतिप्रयोगानुरोधादुक्तंत्वमहंचेतिरूपवानिति । तत्रहेतुरहंकारात्मकइति । त्वमित्येतच्छब्दार्थकथनप्रसंगेनत्वंचात्माचेतितत्समभिव्याहृतात्मशब्दाभिधेयमाह ॥ आत्मेति ॥ बुध्यात्मनाबुध्यभिमानित्वेन यद्धेतदन्यत्रास्मत्स्यात् । श्वानोवैनदद्युरितिवाक्येहृदयाख्योमायाअहंकाराभिमानीरुद्रादन्याश्रितत्वांगीकारेबाधकमुच्यतइतिप्रतीयते । तदयुक्तं । तस्याअपिप्राणाख्यशेषाश्रयत्वस्यवक्ष्यमाणत्वादित्यतस्तद्यथावद्व्याचष्टे ॥ यद्यस्याइति ॥ उमायारुद्रानाश्रितत्वस्यश्वानोवैनदद्युरित्यत्रसाक्षादापादकत्वायोगात् साक्षात्तदापाद्यमुक्तं तदेति । बोधात्मिकाशक्तिःबुध्यभिमानशक्तिः स्यादितिशेषः । मानुषादीन्देहानित्यर्थः । अनेनैतदित्युक्तार्थंभवति ॥ २५ ॥ त्वंचात्माचप्राणे सचापाने सचव्याने सचउदाने सचसमाने प्रतिष्ठितइत्युच्यते । तद्व्याचष्टे ॥ शिवस्येत्यादिना ॥ शेषस्यशिवाश्रयत्वं स्वरूपसाम्येपिपदाधिक्याद्युक्तं विशिष्टानइत्यनेनविशेषेण आसमंतादनइतिव्यानइतिव्याख्यातंभवति ॥ उन्नेतृत्वादिति ॥ उत्ऊर्ध्वं आसम्यक्नयतीत्युदानइत्यर्थः । तस्याहरिराश्रयइत्यनुवर्तते ॥ सहैवेति ॥ स्वात्मनासहैवनित्यावियोगितयैवतामानयती

---

भा० । तस्याःसमाश्रयोरुद्रस्त्वमहंचेतिरूपवान् । अहंकारात्मकोनित्यमात्मोसापरिकीर्तिता । बुध्यात्मनैवाततत्वाद्यद्यस्यानाश्रयोहरः । तदाबोधात्मिकाशक्तिर्नास्याद्देहाभिरक्षणे । अरक्षितान्मानुषादीन्श्वानोवाऽद्युर्वयांसिवा ॥ २५ ॥ शिवस्यचतथोमायाःप्राणात्माशेषआश्रयः । शेषस्यापानरूपास्माभारत्येवव्यपाश्रयः । तस्याव्याऽभिधोवायुर्विशिष्टानोयतोहिसः । उन्नेतृत्वादुदानाख्यातस्यश्रीराश्रयःसदा । समानाख्योहरिस्तस्याःसहैवह्यानयत्यसौ ।

442

त्यर्थः । यद्वासहैवनियामकैःसहैव नियम्यान्सर्वानितियावत्। अनेनसममानयतीतिसमानइतिव्याख्यातंभवति। अन्येषामपीदं प्रवृत्तिनिमित्तंचेत्कथमस्यैवसमानशब्दवाच्यत्वमित्यतआह ॥ स्थावरस्येति ॥ अनकाश्चेष्टकाः। सएषनेतिनेत्यात्मेतिवाक्यंव्याचष्टे ॥ सइति ॥ भगवान्हरिरित्यात्मशब्दव्याख्यानं । इतिनेत्यस्यार्थःएवंनेति । तदेवविवृणोति ॥ श्रीवदन्याश्रयइति ॥ द्वितीयस्यनेत्यस्यार्थोनचब्रह्मादिवदिति । एवंदुःखस्पृष्टतदस्पृष्टद्विविधचेतनविवक्षयाद्वैतलक्षण्यप्रतिपादकतया नेतिनेतीतिवाक्यंव्याख्यायइदानींबद्धमुक्तंद्विविधचेतनविवक्षयापि तद्वैलक्षण्यप्रतिपादकत्वेनव्याचष्टे ॥ नैवासाविति ॥ नन्वेवंचेतनवैलक्षण्यमेवप्रतिपादितंजडवैलक्ष्यण्यंकुतोनप्रतिपाद्यतइत्यतआह ॥ कुतएवेति ॥ कैमुत्यसिद्धत्वेनानुक्तिरितिभावः । श्रुतौ सएषआत्मेत्येतत् अग्राह्योशीर्योसंगोसितोनरिष्यतीत्यत्रापिसंबध्यतइतिभावेनाह ॥ अग्राह्यइति ॥ असौभगवान्हरिःसज्यतइतिसंगः शीर्यश्चासौसंगश्चशीर्यसंगः नशीर्यसंगोऽशीर्यसंगः । श्रुतावात्मनोऽग्राह्यत्वेहेतुरुच्यते नहिगृह्यतइति तदयुक्तं। ईश्वरस्यापिगृह्यमाणत्वादित्यतस्तद्व्याचष्टे ॥ नहीति ॥ क्वापिदेशे क्वचित्काले सर्वात्मनानज्ञायते इत्युक्त्याऽल्पएवज्ञायतइतिलभ्यते । ननुतर्हिनहिशीर्यतेनहिसज्यतेनव्यथतेनरिष्यतीत्यत्रापिसर्वात्मनाशीरणादिनिषेधेल्पःशीर्यतइत्यादिस्यादित्यतआह ॥

भा० । स्थावरस्यानकास्त्वन्येसर्वेपांचेष्टकोहिसः । सएषभगवान्नैवंश्रीवदन्याश्रयोहरिः । नचब्रह्मादिवद्विष्णुर्नैवासौबद्धवत्कचित् । नच मुक्तवदीशेशःकुतएवजडोपमः । अग्राह्योशीर्यसंगोसावसितश्चनरिष्यति । नहिसर्वात्मनाक्वापिकेनचिज्ज्ञायतेकचित् ।

444

स्वल्पोपीति॥नव्यथतेनरिष्यतीत्युक्त्यावर्तमाननिषेधमात्रप्रतीतिवारणायक्रियाप्रबंधेलडित्यभिप्रेत्याह ॥ भूतपूर्वोभविष्यो वेति ॥ नचनाशोभवेदितिच ॥ नचैवंव्याख्यानेसाध्यावैशिष्ट्यदोषः।अग्राह्योशीर्यसंगोसावसितश्चनरिष्यतीत्यत्रइत्युच्यत इत्यध्याहारात्।यद्वाऽग्राह्यइत्यादिकंसंबंधमात्रप्रदर्शनपरं । प्रतिज्ञातमग्राह्यत्वादिकमेवोक्तशंकानिरासायनहिसर्वात्मनेत्यादिना विवृतं । नहिगृह्यतइत्यादिवाक्यंतुयथाहेतुप्रतिपादकं तथाचार्यःस्वयमेवव्याख्यास्यति।ननुनेतिनेतीत्युक्तवैलक्षण्येअग्राह्यत्वादि कंहेतुत्वेनोच्यते । इदंचेदन्यनिष्ठं तदाकथंहेतुःस्यादित्यतःअन्यस्यसर्वात्मनाअग्राह्यत्वादिकंनास्तीत्याह ॥अन्यदिति॥ अन्यत् रमादिकं तेनपरमात्मनागृहीतंसर्वात्मनेतिशेषः।ज्ञानादिनेत्यादिशब्देनचक्षुरादिकं ज्ञानेनगृहीतंविषयीकृतं । ननुसर्वात्मनाऽ ग्राह्यत्वस्यविष्णोरन्यत्राभावेपि निरुक्ताशीर्यत्वस्यरमायांमुक्तेषुचसत्वात् । निरुक्तानामसंगत्वाबद्धत्वानाद्यत्वानांमुक्तेष्वभावे पिरमायांसत्वात्कथमयंतद्वैलक्षण्येहेतुःस्यादित्यतआह ॥ अशीर्यत्वादयइति ॥ रमायामुक्तानांचेत्यर्थः । अत्रअशीर्यत्वमा त्रापेक्षयाअन्येषामितिबहुवचनं । श्रुतौस्वातंत्र्येणअशीर्यत्वादिकमेवविवक्षितमितिभावः। ततश्चाग्राह्यत्वादेरन्यसाधारण्याभा वेनतस्यवैलक्षण्येहेतुत्वंयुज्यतएवेत्याह ॥ अतइति ॥सर्वात्मनाऽग्राह्यत्वादेर्विष्णुमात्रनिष्ठत्वात् । तस्यहरेरतिवैषम्यात् रमादि

---

भा० । स्वल्पोपिशीर्यतेनैवकारणात्कार्यतोपिवा । नलिप्यतेजगन्नाथःकचिद्दोषेणकेनचित् । भूतपूर्वोभविष्योवाबंधोनास्यकुतश्चन । नचनाशोभवेत्कापिननशिष्यतिचकचित् । अन्यत्सर्वंगृहीतंहितेनज्ञानादिनासदा । अशीर्यत्वादयोन्येषांसर्वेषांतत्प्रसादतः । अतस्तस्यातिवैषम्या न्नेतिनेत्याहतंश्रुतिरित्यादिच ।

भ्योऽत्यंतविलक्षणत्वात् । समानादिपदवाच्यविष्ण्वादीनांउदानादिपदवाच्यलक्ष्म्याद्याश्रयत्वंनाधारत्वमात्रमित्याह ॥ **तद्गुणानामिति** ॥ तर्ह्यभेदःस्यादित्यतउक्तं ॥ **प्रतिबिंबितमिति** ॥ तद्गुणान्श्रीगुणप्रतिबिंबभूतस्वगुणान् । अस्योत्तरत्रापिसंबंधः । अहल्लिकेत्यस्यअहनिलीयतइत्यहल्लिकःप्रेतइतियावत् । तथाचप्रेतनाम्नाशाकल्यसंबोधनंक्रियतइतिपरव्याख्यानमसत् । अहनिलीयतइत्यस्यप्रेतइत्यर्थत्वासंभवात् । लक्षणायांचसएवदोषइतिभावेनस्वयंव्याचष्टे ॥ **अहर्ज्ञानमिति** ॥ अहर्दिनंप्रकाशश्चक्वचिज्ज्ञानंइत्यभिधानंप्रागेवोक्तं । तर्ह्यहर्लिकइतिस्यादित्यतउक्तं । अहर्लिकएवेतिरेफस्यलत्वमितिभावः । कस्मिन्हृदयंप्रतिष्ठितमितिप्रश्नेअहल्लिकेत्युक्तिरसंगतेत्यतस्तदभिप्रायमाह ॥ **अज्ञेत्याक्षिपतीति** ॥ हृदयाख्योमायाःशिवेप्रतिष्ठितत्वस्यातिप्रसिद्धत्वेन तत्रापिप्रश्नेअज्ञेतितमाक्षिपतीत्यर्थः । ननुश्रुतौअग्राह्यःअशीर्यइत्याद्युक्तार्थेनहिगृह्यतेनहिशीर्यतइत्यादिनातदेवतत्रहेतुत्वेनकथमुच्यतइत्यतआह ॥ **नहीति** ॥ तथाचार्थाभावेप्रमाणाभावोहेतुरुच्यतइतिनानुपपत्तिरित्यर्थः । ननुशाकल्येनापिब्रह्मणोज्ञातत्वात् याज्ञवल्क्येनापिसएषनेतिनेतीत्यादिनाविशेषेणनिरूपितत्वाच्चतद्गुणकस्यब्रह्मणोवक्तुंशक्यत्वात्कस्मात्तंहनमेनेशाकल्यइत्यतस्तस्याभिप्रायमाह ॥ **नेतीति** ॥ **विशेषापेक्षयेति** ॥ अतएवश्रुतौ तंचेन्मेनविवक्ष्यसीति विशेषवाचकविशब्दप्रयोगइतिभावः ।

---

सा० । तद्गुणानांसुपूर्णानांविस्फुटंप्रतिबिंबितं । श्रीभुक्तेतद्गुणान्ब्रह्मातस्यरुद्रादयोपिचेत्यादिच । अहर्ज्ञानमस्यलीनमित्यहर्लीकएवाहल्लिकः । अज्ञेत्याक्षिपति । नहिगृह्यतइत्यादिनाग्रहणशीरणादिषुसर्वप्रमाणाभावंदर्शयति । नेतिनेत्यादिरूपेणविज्ञापितगुणोपितु । विशेषापेक्षयापृष्टोनशाकल्योविवेदतमितिब्रह्मांडे ।

निरूह्यप्रत्यूह्येत्यनयोरेकार्थत्वप्रतीतिंनिवारयन्व्याचष्टे ॥ तदपेक्षामित्यादिना ॥ जगदपेक्षां। निरोर्थोनिर्गत्येति। ननुदेवताध
र्मादिस्वरूपस्याप्युपनिषद्गम्यत्वात् औपनिषदमितिकथमेतस्यैवविशेषणमित्यतआह ॥ नेति ॥ केनापिप्रकारेण कस्यचित्पुंसः ।
कर्तरिषष्ठीयं । नन्वाश्वलादिभिर्यदिदंसर्वंमृत्युनाप्तंसर्वंमृत्युनाभिपन्नंकेनयजमानोमृत्योराप्तिमतिमुच्यतइत्यादिप्रश्नेकृतेयाज्ञव
ल्क्येनहोत्रर्त्विजाग्निनावाचाइत्यादिनोत्तरेचदत्तेतत्रप्रमाणमपृष्ट्वाकथंतदंगीकारःक्रियते । आश्वलादिभिर्याज्ञवल्क्येनक्रियमाणा
याःकथायाजल्परूपत्वात् । जल्पेचप्रमाणप्रश्नस्यकर्तव्यत्वात्इत्यतःआश्वलादिभिःप्रमाणप्रश्नाकरणेनिमित्तंवक्तुमाह ॥ प्रश्न
इति ॥ विप्रतिपन्नप्रमेयेइतिशेषः । वादिनाचतत्पृष्टप्रमेयंवक्तव्यमित्यपिग्राह्यं । तत्रयदिप्रतिवादिनस्तदुक्तौवादिवचने प्रामाण्यं
निश्चितं तदाऽऽगमांतरंनापेक्षितं तदुक्तेरेवागमरूपत्वात् । ततश्चनतदुक्तेप्रमेयेप्रमाणप्रश्नःकर्तव्यइतिभावः । यदाशंकातदु
क्तौप्रामाण्यविषयिणी तदातेनप्रमाणप्रश्नःकर्तव्यः । वादिनावागमोदर्शनीयःइत्यर्थः । नन्वस्त्वेवंतथापियाज्ञवल्क्यवचनेऽप्रा
माण्यशंकैवकुतोनेत्यतआह ॥ निःशंकत्वेनेति ॥ भ्रांतोपिवैयात्यात्प्रश्नोत्तरंनिश्शंकत्वेनवक्तीतितद्व्यावृत्त्यर्थंसदागमानामानु
कूल्येनेत्युक्तं । इतोपियाज्ञवल्क्यवचनेनाप्रामाण्यशंकेत्याह ॥ दशतालइति ॥ तथाशब्दोचशब्दःपुनःशब्दश्चलक्षणानांपरस्प

भा० । तदपेक्षांविनैवासौनिर्गत्यपुरुषोत्तमः । वहत्येवानिशंसर्वंनिरूढंतेनतज्जगत् । प्रतिप्रतिस्थितोरूपैर्यस्माद्धत्तेहरिःसदा । अतःप्रत्यू
ह्यतेतेनव्यक्ताव्यक्तमिदंजगदितिब्रह्मतर्के । नविनोपनिषद्भिःसज्ञेयःकेनापिकस्यचित् । अतऔपनिषत्कंतंप्राहुर्विष्णुंसनातनमितिच । प्रश्नोवादे
चजल्पादौकर्तव्यःप्रतिवादिना । तदुक्तिमात्रेप्रामाण्यंयदिनास्यागमांतरं । अपेक्षितंयदाशंकादर्शनीयस्तदागमः । निःशंकत्वेनयोवक्ताऽऽम्नानामु
त्तरंसदा । आनुकूल्येनागमानांनाशंक्यंतद्वचःक्वचित् । दशतालोदशमुखोललाटत्रिंशकस्तथा ।

रसमुच्चये । नाशंक्यमेवेत्येवशब्दसंबंधः । दशतालःदशमणिबंधपरिमितकायः दशमुखःदशमुखपरिमितकायः ललाटत्रिंशकःत्रिंशल्ललाटपरिमितकायः सार्धोन्नतःअर्धोन्नतललाटेनसहितः पर्यग्दशशिराःपर्यक्परितःदशललाटपरिमितकायः पंचोराःउरःपंचकपरिमितकायः सप्तपादःसप्तपादपरिमितकायः नवांगुलमुखःनवांगुलपरिमितंमुखंयस्यसतथोक्तः चतुरंगुलःचतुरंगुलपरिमाणवान् चतुर्विंशांगुलतनुःचतुर्विंशांगुलपरिमितातनुर्मध्यदेहोयस्यसतथोक्तः । देवपूजितं तथाचनाप्रामाण्यशंकातत्रेत्यर्थः । ननुयाज्ञवल्क्यस्यउक्तसर्वलक्षणोपेतत्वाभावात्कथंतद्वचनेऽप्रामाण्यशंकाभावइत्यतआह॥ प्राधान्यादिति ॥ बाहुल्यादित्यर्थः । अल्पदुर्लक्षणयुतइत्यर्थः । ननुसर्वलक्षणसंपन्नस्यैववाक्यंमानमितिप्राधान्येनलक्षणोपेतस्यापिवाक्यंअमानंकिंनस्यादितिचेत् न । तथात्वेदेवर्ष्यादिवचनेप्यप्रामाण्यशंकास्यात् । कुतइत्यतआह ॥ प्रायइति ॥ प्रायइत्यस्यव्यावर्त्यमाह ॥ ऋतइति ॥ किंतदित्यतआह ॥ यस्मादिति ॥ यद्वाभवतुविष्णुविरिंचेतरदेवर्ष्यादिवचनेप्यप्रामाण्यशंकेतिचेत् । तथात्वेप्रमाणप्रश्नंविनैवतत्प्र

---

भा० । सार्धोन्नतश्चैवपुनःपर्यग्दशशिरास्तथा । पंचोराःसप्तपादोयोनाशंक्यंतद्वचःक्वचित् । नवांगुलमुखोयस्तुगलेचचतुरंगुलः । चतुर्विंशांगुलतनुस्तद्वाक्यंदेवपूजितं । प्राधान्याल्लक्षणोपेतोदुर्लक्षणयुतोपिसन् । तस्यापिवाक्यंमानंस्यात्किमुसर्वयुतस्यतु । प्रायोदेवाश्चऋषयोनसर्वशुभलक्षणाः । ऋतेविष्णुंसुरश्रेष्ठंब्रह्माणंवाप्यनंतरं ।

श्नोत्तररूपाःकथावेदेनस्युरितिभावेनाह ॥ यस्मादिति ॥ तस्मादेवेत्यर्थः । वाक्यार्थघटनामेवपृच्छंति नघटनांविनातत्रतदुक्तेर्थे
प्रमाणांतरंपृच्छंति । अतएवयाज्ञवल्क्येनत्रयस्त्रिंशत्सुषडेवोत्तमाःषट्सुचत्रयएवोत्तमाःइत्याद्युक्त्वाकथमिदंघटतइत्याशंकापरिहा
राय एतेषुहीदंसर्वंपडिति एतेषुहीमेसर्वेदेवा इत्यादिनाघटकोहेतुरुक्तः । यदर्थमेतावदुक्तंतदाह ॥ एतस्मादिति ॥ याज्ञवल्क्य
स्यऋपित्वेनागमानुकूल्येननिःशंकंप्रश्नोत्तरवक्तृत्वात्प्राधान्येनोक्तलक्षणोपेतत्वाच्चतद्वचनस्यानाशंकनीयत्वादित्यर्थः । याज्ञव
ल्क्योक्तेरन्यमागममितिसंबंधः । मिथिलोपितमागमंनपप्रच्छेत्युत्तराध्यायविवक्षया तंयाज्ञवल्क्यमितिवार्थः । महापुरुषव
चोनशंक्यमित्युक्तं । तत्रसानांतरंपठति ॥ यइति ॥ आदक्षिणामुतसमग्रदक्षिणामपि प्रतीच्छन्दातुमिच्छन् पर्येषणंअन्वेषणं
कुर्यात् । यदिएतादृशस्यापिवचनंशंकार्हंतदासमग्रदक्षिणादानेनतत्पर्येषणविधानंनस्यादितिभावः । अतएवजनकादयःअलंकृ
लगवादिदक्षिणयातदन्वेषणंकृतवंतः । एतल्लक्षणविशिष्टस्यापिवचनंनाशंक्यमित्याह ॥ षण्णवत्यंगुलइति ॥ तत्परिमितकायः॥
उक्तलक्षणवतोवचोनशंकार्हइत्येतत्प्रमेयमुपपत्त्यापिसमर्थयते ॥अतएवेति॥ चशब्दःपूर्वोक्तागमसमुच्चायकः॥यतःउक्तलक्षणस्य

भा० । यस्मान्नविदुषांवाक्यमाशंक्यंकेनचित्कचित् । तस्माद्वेदेपुसर्वेपुकथाःप्रश्नोत्तरात्मिकाः । नप्रमाणांतरंतत्रपृच्छंतिघटनांविना ।
एतस्मादाश्वलाद्याश्चपप्रच्छुर्नैवकुत्रचित् । आगमंयाज्ञवल्क्योक्तेरन्यंतंमिथिलोपिचेतित्रह्मतर्के । यश्छिन्नविचिकित्सस्तुच्छिनत्त्यपिचसंशयान् ।
तस्यपर्येषणंकुर्यात्प्रतीच्छन्नोतदक्षिणामितिचभारते । षण्णवत्यंगुलोयस्तुन्यग्रोधपरिमंडलः । दशतालश्चतुर्हस्तःसदेवैरपिपूज्यतइतिवायुप्रोक्ते ।
अतएवचसर्वागमेषुप्रातिसंहितमाचार्यलक्षणमुच्यते ।

वचोनशंकनीयं अतएवपंचरात्रादिसर्वागमेषु प्रतिसंहितंसर्वसंहितासु आचार्यलक्षणमुच्यते। अन्यथातदुक्तिवैयर्थ्यंस्यादित्यर्थः । यथावृक्षोवनस्पतिस्तथैवपुरुषोमृषेत्यत्रमृषेतिपदच्छेदोऽनुपपन्नः। वृक्षमिथ्यात्वस्यासिद्धत्वेनदृष्टांतत्वेनोपादानायोगात्। पुरुषमिथ्यात्वस्यप्रमाणबाधितत्वाच्च । अमृषेतिपदच्छेदेपिअर्थसत्यत्वप्रतिपादनपरत्वेवनस्पतिशब्दोव्यर्थःस्यात्। नचवनस्पतिरितिवृक्षस्यविशेषणमितिवाच्यं । पर्याययोर्विशेषणविशेष्यवाचकत्वानुपपत्तेरितिभावेनतद्वाक्यंयथावद्व्याचष्टे ॥ यथेति ॥ सप्तसुप्रथमेतिसूत्रात्वनस्पतिरितिप्रथमासप्तम्यर्थे । श्रुतौवृक्षइत्यनंतरमितिशब्दाध्याहारः । अर्थशास्त्रेप्रयुक्तस्यइतिशब्दस्यशब्दपदार्थकत्वमितितल्लब्धार्थोक्तिः ॥ अयंशब्दइति ॥ अमृषाविद्यमानार्थकएव वृक्षशब्दप्रवृत्तिनिमित्तवृक्षत्वस्यतत्रसत्वात् । पुरुषेपुरुषशब्दइत्यनेनश्रुतौपुरुषशब्दआवर्तनीयइत्युक्तंभवति । अमृषेत्यस्याविद्यमानार्थोनेत्यर्थमभिप्रेत्यलब्धमर्थमाह ॥ विद्यमानोविद्यमानार्थएवेति ॥ ननुमर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहतीतिप्रष्टव्यार्थानुपयुक्तमेतदित्यतआह ॥ सचेति ॥ चशब्दःप्रकृतानुसंधानार्थः । एतस्योपयोगमुत्तरत्रवक्ष्यति । विद्यमानार्थकःपुरुषशब्दोवाच्यस्यनित्यत्वेसंभवति । कुतइत्यतःपुरुषशब्दस्यनित्यत्वार्थकत्वादितिभावेनपुरुषशब्दार्थमाह ॥ पुरुकालेपीति ॥ क्लिन्नादंस्नावततिस्थिरमितिवाक्यंअप्रतीतेर्व्याचष्टे ॥ स्नावमध्येइति ॥ स्नावेतिअविभक्तिकोनिर्देशः । विभक्तिश्चषष्ठीतिभावेनोक्तंस्नावमध्यइति । श्रुतौतच्छब्दश्रवणात्

भा० । यथावनस्पतौवृक्षइत्ययंशब्दोऽमृषातथैवपुरुषेपुरुषशब्दोविद्यमानएव । सचनित्यत्वेसंभवति । पुरुकालेपिसन्पुरुषइति । स्नावमध्येयत्स्थिरंविद्यतेस्थिसल्लीनंतद्दारुसंश्लिष्टपाशवत् ।

यदितिलभ्यते । आस्थिसंलीनंसंलग्नमित्यर्थः । दारुसंश्लिष्टपाशेतिकिनाटशब्दार्थः । ननुकस्मान्मूलात्प्ररोहतीत्यत्रवृक्षःकस्मा न्मूलात्प्ररोहतीत्यस्यार्थोभिमतः सनयुक्तः । यद्वृक्षोवृक्णोरोहतिमूलान्नवतरःपुनरिति वृक्षस्यमूलशब्दवाच्यभूगतवृक्षभागका रणकत्वस्योक्तत्वेनसिद्धविषयत्वादित्यतस्तद्वाक्यतात्पर्यमाह ॥ वृक्षइति ॥ तत्रहेतुमाह ॥ यत्समूलमिति ॥ रेतसइतिमा वोचतेत्यत्रजीवतस्तत्प्रजायतइतिकथंहेतुरुच्यतइत्यतस्तदभिप्रायमाह ॥ अन्यस्येति ॥ अन्यस्यसृज्यस्यपुरुषांतरस्यरेतसिचेत्य र्थः । पुरुषांतरसद्भावोपिस्यादित्यतआह ॥ प्रलयेत्विति ॥ अनेनअंजसाप्रेत्यइत्यस्यतात्पर्यमुक्तंभवति । एवंयाज्ञवल्क्यप्रश्ने तेहब्राह्मणानदधृषुरित्युक्तत्वात् जातएवनजायतेइत्यादिनायाज्ञवल्क्येनस्वयमेवपरिहाराच्च ब्राह्मणास्तूष्णींबभूवुरितिप्रतीयते त दयुक्तं । ऋषीणांपुरुषाद्युत्पादकतयाभगवज्ज्ञानित्वेनकस्मान्मूलात्प्ररोहतीतिप्रश्नस्यभगवतइत्युत्तरमदत्वातूष्णींभावेनिमित्ता भावादित्यतआह ॥ तत्पृष्टमिति ॥ ननुकिंतत्पृष्टंयत्सर्ववक्तुमशक्ताऋषयइत्यतःप्रश्नाभिप्रायमाह ॥ पुरुषस्येति ॥ देहव्यति रिक्तजीवाभावात्भावेवाशरीरेणसहैवतस्यनाशेनपूर्वोत्तरशरीरेष्वनुवर्तमानस्यैकस्याभावात् तस्यपुनरुत्पत्तिरेवनास्तीतिकथंतदु त्पादकप्रश्नइत्यतोनजीवस्यशरीरेणसहविनाशः। किंतुसनित्यएव पुरुकालेसन्निति यौगिकपुरुषनामवत्त्वात् । नित्यस्यतस्याऽशरी

भा० । वृक्षोमूलाद्रोहतीत्यंगीकारमात्रं । यत्समूलमावृहेयुरितितस्यापिदूषणात् । अन्यस्यरेतसोजननमपिजीवतःपुरुषांतरस्यभावे । प्रलयेतुसर्वप्रलयात्कस्मादुत्पत्तिः । तत्पृष्टंसर्ववक्तुमशक्तत्वात्पुरुषस्यपुनरुत्पत्तौकारणंभगवंतंजानंतोपितूष्णीमृषयोबभूवुः । पुरुषनामकत्वान्नित्य स्यजीवस्ययावन्मुक्तिपुनरुत्पत्त्याभवितव्यं नशरीरेणसहनाशः ।

रत्वेसंसारायोगात् यावन्मुक्तिशरीरयोगलक्षणपुनरुत्पत्तिरावश्यकीत्यर्थः । नन्वस्त्येवंजीवस्यपुनरुत्पत्तिःतथापितदुत्पादकप्रश्नो नुपपन्नःस्वस्यैवोत्पादकत्वसंभवेनसिद्धविषयत्वादित्यतउक्तं ॥ तस्यचेति ॥ असौउत्पादकः । कःकिंलक्षणकइत्यर्थः । तथाच पुरुषस्यपुनरुत्पादकंभगवंतंजानंतोपिवक्ष्यमाणंतल्लक्षणंवक्तुमशक्ताऋषयइतिभावः । याज्ञवल्क्यपृष्टंनविज्ञातंब्राह्मणैः अतोत्रह्मि ष्ठत्वाद्धृताःगावःयाज्ञवल्क्येनजिताःब्राह्मणाः । समाप्ताआख्यायिका । यत्याज्ञवल्क्येनपृष्टंतच्छ्रुतिरस्मभ्यंउपदिशति विज्ञान मितीतिपरव्याख्यानमप्रामाणिकंस्वयमेवतदोवाचयाज्ञवल्क्यइतिप्रमाणविरुद्धंचेतिभावेनतद्वाक्यमवतारयति ॥ तेऽविति ॥ ए तेनविज्ञानमानंदमित्येतदेवयाज्ञवल्क्यंप्रतिपृष्टंऋषीणांवाक्यमितिप्रतीतिरपिपरास्ता । जातएवनजायतइतिवाक्यंयाज्ञवल्क्यकृत प्रश्नांतर्गतमितिपरोव्याख्याति । तथाहि । यस्तुमृतःसपुनर्नजायतेजातत्वादेव जनिष्यमाणस्यहिकारणचिंतानजातस्य अतोत्रप्र श्नएवानुपपन्नइतिचेत् नेतिपृथक्वाक्यं। यन्मतंजातएवेति तन्न किंतर्हि मृतःपुनरपिजायतएव। अन्यथाकृतनाशाकृताभ्यागमः स्यात्। अतोवःपृच्छामि।एनंमृतंकोनुपश्चात्पुनर्जनयेदिति तदसत्।जातएवेतिचेन्न जायतएवेतियोजनायामध्याहारवाक्यभेद प्रसंगात् । यस्तुमृतःसपुनर्नजायतइतिशंकितुर्जीवानित्यत्वंह्यभिप्रेतं । तच्चास्मत्पक्षेतथैवपुरुषोमृषेतिजीवस्यपुरुकालेसक्षितियौ गिकपुरुषनामकत्वोक्त्यापरिहृतमेव । यथोक्तंपुरस्तात् । स्वभाववादमालंब्येयमाशंकेत्यनुपपन्नमेव । तददर्शनात् । अतएवाचा र्यैस्तस्यस्वोत्पत्तावस्वातंत्र्यादितिस्वयमेवस्वभाववादमपाकृतवान्। त्वत्पक्षेविज्ञानानंदस्यापिब्रह्मणउत्पादकशंकायाअपरिहाराच्च

भा० । तस्यचस्वोत्पत्तावस्वातंत्र्यादन्येनोत्पादकेनभाव्यं । कोसावितिप्रश्नाशयः । तेपुतूष्णींभूतेपुस्वयमेवपरिहरतिविज्ञानमानंदंब्रह्मेति ।

नैवास्यजनकःकश्चिन्नित्यजानोह्यसौहरिरितिप्रमाणेएतद्वाक्यस्ययाज्ञवल्क्यपरिहारवाक्यांतर्गतत्वावगतेस्तद्विरोधाच्चेतिभावेनत
दवतारयति ॥ तस्यापीति ॥ नन्वेवंव्याख्यानेकोन्वेनंजनयेत्पुनरितिपुनःशब्दोऽयुक्तःस्यात् । क्रियाभ्यासापेक्षयाप्रयुक्तेनपुनःश
ब्देनैकवारंजननप्रतीतेः । परमात्मनश्चसकृदपिजननानंगीकारादित्यतआह ॥पुरुषांतरेति॥ अनेनपुनःकइतिपुनःशब्दान्वयःसू
चितोभवति। ननुक्रियाभ्यासेपुनःशब्दप्रयोगोदृष्टःपुनरागतइत्यादौ नपुरुषांतरापेक्षयेत्यर्थे। अतस्तत्रापिप्रयोगमाह॥ एकएवेति॥
रातिरितिप्रथमाषष्ठ्यर्थे। रातेर्धनस्य दातुःपरायणमितिपरव्याख्यानमसत्। सप्रियःसर्वदानृणामितिप्रमाणविरोधादितिभावेनरा
तिशब्दार्थमाह ॥ रातिरिति ॥ व्यवहितत्वेनान्वयंदर्शयति ॥ तिष्ठमानस्येति ॥ एवंस्ववचनेनव्याख्यायदार्ढ्यायश्रुतिव्या
ख्यानरूपंप्रमाणंपठति॥ विजित्येति ॥तंत्वौपनिषदंपुरुषंपृच्छामीतिशाकल्यंप्रतिकृतप्रश्नापेक्षयापुनःशब्दः । अनेनअथहोवाच
ब्राह्मणाइत्याद्यारभ्यपप्रच्छेत्यंतमुक्ततात्पर्यंभवति।यथावृक्षइत्यादेरर्थमाह॥यथेति॥यथार्थतःविद्यमानार्थत्वेन पूर्वोत्तराभ्यामेतत्सं
वध्यते। तच्छब्दःपुरुषशब्दः पुरुषेपिवर्तते। नन्वेतत्प्रष्टव्यार्थासंगतंकिमुच्यतइत्याशंकांपरिहरन्प्रश्नवाक्यतात्पर्यमाह॥नित्यत्वा

---

भा॰ । तस्याप्यन्यउत्पादकइत्याशंकामाभूदितिजातएवनजायतइत्याह । पुरुषांतरापेक्षयापुनःशब्दोनतुक्रियाभ्यासापेक्षया । एक॰॰वह
रिर्वंधुःपुनरन्योनविद्यतइतिवत् । रातिरिष्टः । तिष्ठमानस्यतद्विदःपरायणं । विजित्यसर्वान्पप्रच्छयाज्ञवल्क्यःपुनर्मुनीन् । यथावनस्पतौवृक्षश
ब्दएवंयथार्थतः । पुरुषेपिहितच्छब्दोनित्यत्वादेवयुज्यते । तस्मान्नास्यशरीरेणनाशस्तस्मात्पुनर्जनिः । आमुक्तेर्भवितानित्यंकुतस्तदितिचोच्यतां ।

देवेति॥ तच्छब्दइत्यनुवर्तते । शरीरेणसह रेतसइतिमावोचतजीवतस्तत्प्रजायतइतिवाक्यस्यतात्पर्यमाह ॥ रेतसइति॥ मदी यप्रश्नस्त्वादिसृष्टिविषयकइतिभावः । अत्रमर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहतीतिपुरुषोत्पादकमात्रप्रश्नइतिप्रतीतिनिरा साययत्समूलमावृहेयुरित्येतदनुरोधेनप्रश्नाभिप्रायमाह ॥ निर्मूलस्येति ॥ कृत्स्नशइतितत्स्वरूपलक्षणविवक्षया । धानारुहइ ववृक्षइत्येतद्व्याचष्टे ॥ धानाजातइवेति ॥ इवशब्दाभिप्रायकथनं अविदुषामिति । विदुषामपितथाकुतोनदृश्यतइत्यतआह ॥ अस्वातंत्र्यादिति ॥ अस्वातंत्र्यान्नैवतत्कारणंभवेत् । अविद्यमानंकथंविदुषांदृश्येतेतिभावः। अविदुषांविदुषामितिकर्तरिष ष्ठ्यौ । अंजसाप्रेत्यसंभवइतिवाक्यंसंभवशब्देनभावउच्यतइतिप्रतीतिनिरासायव्याचष्टे॥ अंजसेति ॥ प्रेत्यस्थितस्येतिशेषः । अनेनसंभवतिअस्मादितिव्युत्पत्तिर्दर्शिता। अंजसाप्रेत्यसंभूतिकारणमपिस्वयंजीवएवकिंनस्यादित्यतआह ॥प्रेत्येति॥ जीवस्त्व स्वतंत्रइतिभावः। जातएवनजायतइत्यादेःऋषीणांपरिहारवाक्यत्वमितिप्रतीतिनिरासायमध्येवक्तव्यमाह॥इतीति॥ तद्वेत्तारोपि उत्पादकस्वरूपवेत्तारोपि तत्प्रश्ननिर्मूलनेतत्पृष्टलक्षणकथनेनसर्वथाप्रश्नपरिहारेबलोज्झिताइत्यर्थः । तेहब्राह्मणानदधृषुःइत्येत

453

भा० । रेतसोजननंयावत्प्रलयस्तावदेवहि । निर्मूलस्यचवृक्षस्यप्रलयेपुरुषस्यच । पुनरुत्पादकोयस्तंवदंतुममकृत्स्नशः । धानाजातइवायं हिदृश्यतेऽविदुषांतरुः । अस्वातंत्र्यात्तुविदुषांनैवतत्कारणंभवेत् । अंजसाप्रेत्यसंभूतिकारणंतद्वदंतुनः । प्रेत्यसंभूतिकर्ताहिस्वतंत्रोघटतेयतः । इतिपृष्टास्तुमुनयोनवक्तुंशेकुरंजसा । तद्वेत्तारोपितत्प्रश्ननिर्मूलनबलोज्झिताः ।

स्यतात्पर्यमाह ॥ अधाष्टर्यादिति ॥ विज्ञानमानंदंब्रह्मेतिवाक्यमपेक्षिताध्याहारंसूचयन्व्याचष्टे ॥ पूर्णानन्दइति ॥ मुख्या मुख्ययोर्मध्येमुख्येसंप्रत्ययइतिपूर्णानन्दइत्युक्तं । पूर्णविज्ञानइत्यपिग्राह्यं । जातएवनजायतेकोन्वेनंजनयेत्पुनरितिवाक्यंहेतुहे तुमद्भावप्रतिपादकतयाव्याचष्टे ॥ नैवेति ॥ रातिर्दातुरित्यस्यार्थमाह ॥ सप्रियइति ॥ तद्विदःपरायणमित्यस्यार्थमाह ॥ ज्ञा निनामिति ॥ ज्ञानिनांमध्यमभक्तानामित्यर्थः । तिष्ठमानस्यपरायणमित्यस्यार्थमाह ॥ येत्विति ॥ तुविशेषेण । तद्भाविताए कांतिनइत्यर्थः ॥ ततश्चायंखंडार्थः ॥ अथवाचक्रव्युपरमानंतरं एनंयाज्ञवल्क्यं । शकलस्यापत्यंशाकल्यः विदग्धोनामतः प प्रच्छ । किं हेयाज्ञवल्क्य देवाः कतिकिंसंख्याकाइति एवंपृष्टःसःयाज्ञवल्क्यः यावंतोयावत्संख्याकादेवाः वैश्वदेवस्यशस्त्रस्य निविदि निवित्संज्ञिकमंत्रे उच्यंते तावतोदेवान्हएतयावक्ष्यमाणयानिविदातत्संज्ञकमंत्रेण प्रतिपेदेज्ञातवान् । तांनिविदंदर्शय ति ॥ त्रयश्चेति ॥ त्रयश्चत्रीचशतात्रयस्त्रिंशच्छतानि । त्रयश्चत्रीचसहस्रात्रयस्त्रिंशत्सहस्राणीत्यर्थः । यद्यपिइतोप्यधिकसं

भा० । अधाष्टर्यातत्प्रभावेनधर्षितानांशकन्यदा । स्वयमेवतदोवाचयाज्ञवल्क्योमहामुनिः । पूर्णानंदोहरिर्नान्यःकारणंसृज्यसर्जने । नैवास्यजनकःकश्चिन्नित्यजातोह्यसौहरिः । सप्रियःसर्वदातॄणांज्ञानिनांपरमप्रियः । येतुतद्भावितानित्यंतेषामेषपरायणमितिनारायणीये ॥ इति शाकल्यब्राह्मणं ॥ ९ ॥ इतिबृहद्भाष्येपंचमोध्यायः ॥ ५ ॥

उप० । अथहैनंविदग्धःशाकल्यःपप्रच्छकतिदेवायाज्ञवल्क्येतिसहैतयैवनिविदाप्रतिपेदेयावंतोवैश्वदेवस्यनिविद्युच्यंते । त्रयश्चत्रीचशतात्र यश्चत्रीचसहस्रेति




५ । ९
कं० ९

त्रिपे
454

ख्यादेवानामस्ति । नवकोट्योहिदेवानामित्याद्युक्तेः । तथापितेषुत्रयस्त्रिंशत्सहस्रसंख्याकादेवाअधिकाः तेषुचत्रयस्त्रिंशच्छतसंख्याकाअधिकाइतिभावः । एवंयाज्ञवल्क्योक्तंपरिहारंशाकल्योंगीकरोतीत्याह ॥ ओमितिहोवाचेति ॥ शाकल्यइतिशेषः । त्रयस्त्रिंशच्छतसंख्याकेष्वपिदेवेषुअधिकान्पृच्छति ॥ कत्येवेति ॥ उत्तरमाह ॥ त्रयस्त्रिंशदिति ॥ एवमुत्तरत्रापिप्रश्नपरिहारौव्याख्येयौ । अथसंख्येयस्वरूपंपृच्छति ॥ कतमइति ॥ १ ॥ सएवंपृष्टोयाज्ञवल्क्यः उवाच । किं त्रयस्त्रिंशदेवदेवाः तुविशिष्टाः । एतेत्रयस्त्रिंशच्छतसंख्याकादेवाः एषांत्रयस्त्रिंशत्संख्याकानांदेवानां महिमानएवमहिनामाहात्म्येनमिताःपरिमिताःन्यूनाः अतएवतेषांपरिवारभूताएवेत्यर्थः । तेषांवहुलत्वात्पृथङ्निर्देशमकृत्वामहिमानइत्येवोक्तं । तथाएतेत्रयस्त्रिंशत्सहस्रसंख्याकादेवाः एषांत्रयस्त्रिंशच्छतसंख्याकानां देवानांमहिमानइत्यपियोज्यं । त्रयस्त्रिंशत्संख्याकान्पृच्छति ॥ कतमइति ॥ तेत्रयस्त्रिंशच्छतसंख्याकेष्वधिकाः। उत्तरमाह ॥ अष्टाविति ॥ इंद्रश्चप्रजापतिश्चत्रयस्त्रिंशौद्वात्रिंशत्त्रयस्त्रिंशत्संख्यापूरकौ। अत्रेंद्रशब्देनवायुजइंद्रोग्राह्यः । नक्षत्रशब्देनरूपांतरग्रहणात् । प्रजापतिशब्देनेंद्रपुत्रोजयंतउच्यते ॥ २ ॥ अग्निःसुपर्णः पृथिवीत

---

उप०। ओमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयस्त्रिꣳशदित्योमितिहोवाच।कत्येवदेवायाज्ञवल्क्येतिषडित्योमितिहोवाच। कत्येवदेवायाज्ञवल्क्येतित्रयइत्योमितिहोवाच।कत्येवदेवायाज्ञवल्क्येतिद्वावित्योमितिहोवाच। कत्येवदेवायाज्ञवल्क्येत्यध्यर्धइत्योमितिहोवाच।कत्येवदेवायाज्ञवल्क्येत्येकइत्योमितिहोवाच । कतमेतेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेति॥ १ ॥ सहोवाचमहिमानएवैषामेतेत्रयस्त्रिꣳशत्त्वेवदेवाइति कतमेतेत्रयस्त्रिꣳशदित्यष्टौवसवएकादशरुद्राद्वादशादित्यास्तएकत्रिꣳशदिंद्रश्चैवप्रजापतिश्चत्रयस्त्रिꣳशाइति ॥ २ ॥

द्भार्यासौपर्णी वायुःसूत्रात्मा अंतरिक्षंतत्पत्नीश्रद्धा आदित्यःशिवः द्यौस्तद्भार्योमा चंद्रमाःकामः नक्षत्राणींद्रः बहुवचनंरूपबाहुल्याभिप्रायेण । इत्येतेवसवः कुतएतेवसुशब्दाभिधाइत्यतआह ॥ एतेष्विति ॥ सर्वंवसतीतिवसुशब्दवाच्यंजगत् एतेषुअष्टसुहितंनिहितंइति हियस्मात् तस्मादेतेवसवइत्यर्थः ॥३॥ पुरुषेजीवेवर्तमानाः प्राणाःज्ञानेंद्रियकर्मेंद्रियनियामकाः इमेप्रसिद्धाःदक्षाग्निप्रमुखावायुपुत्राःदश आत्माबुद्ध्यभिमानीबृहस्पतिः एकादशःएकादशत्वसंख्यापूरकः । तेषुरुद्रशब्दंनिर्वक्तुमाह॥तेयदेति॥ ते एकादशेंद्रियाभिमानिनः यदायस्मिन्काले । अस्मान्मर्त्यात्म्रियमाणाच्छरीरात् उत्क्रामंति अथतदारोदयंतिम्रियमाणसंबंधिनो जनान् । किंततइत्यतआह ॥ तदिति ॥ यत्यस्मात् तत्तस्मिन्नुत्क्रांतिकाले रोदयंतितस्माद्रुद्राइत्युच्यंतइत्यर्थः ॥ ४ ॥ संवत्सरस्यसंवत्सरात्मकस्यकालस्य वैप्रसिद्धायेद्वादशमासाद्वादशमासाभिमानिनःएतेआदित्याःतेचधातार्यमाविवस्वान्पूषात्वष्टा सविताभगःपर्जन्योवरुणोमित्रोयमश्चेंद्रइत्येते तेष्वादित्यशब्दंनिर्वक्तुमाह॥एतेहीति॥ एतेद्वादशादित्याःइदंसर्वंप्राणिनामायुरादिकं आददानायंतिपरितोयांति । तेयत्यस्मात् इदंसर्वमाददानायंति तस्मादादित्याउच्यंतइत्यर्थः ॥ ५ ॥ वायुर्जेंद्रजयंतयोः

---

उप० । कतमेवसवइत्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौश्चचंद्रमाश्चनक्षत्राणिचैतेवसवएतेषुहीदंवसुसर्वंहितमितितस्माद्वसवइति ॥ ३ ॥ कतमेरुद्राइति दशेमेपुरुषेप्राणाआत्मैकादशस्तेयदास्माच्छरीरान्मर्त्यादुत्क्रामंत्यथरोदयंतितद्यद्रोदयंतितस्माद्रुद्राइति ॥ ४ ॥ कतमआदित्याइति द्वादशवैमासाःसंवत्सरस्यैतआदित्याएतेहीदꣳसर्वमाददानायंति । तेयदिदꣳसर्वमाददानायंतितस्मादादित्याइति ॥ ५ ॥

रूपविशेषंपृच्छति ॥ कतमइति ॥ स्तनयित्नुरेवतदभिमान्येव प्रसिध्यर्थएवकारः यज्ञोयज्ञाभिमानी तस्यापिरूपविशेषंपृच्छति ॥ कतमइति ॥ अशनिःवज्राभिमानी पशवःपश्वभिमानी ॥ ६ ॥ एतेषुत्रयस्त्रिंशद्देवेषुयेषडधिकाउक्तास्तान्पृच्छति ॥ कतमे षडिति ॥ अग्न्यादिशब्दार्थस्तूक्तएव । एतेषांत्रयस्त्रिंशत्स्वाधिक्येहेतुमाह ॥ एतेषुहीति ॥ इदंबुद्धिस्थं षट्ज्ञानविज्ञानैश्वर्यवीर्यश्रीयशोरूपगुणषट्कं एषुअग्न्यादिशब्दाभिधेयेषुगरुडादिषु सर्वंपूर्णं देवतांतरापेक्षयोत्कृष्टं हियस्मात् इतितस्मात् तएवत्रयस्त्रिंशत्स्वधिकाइत्यर्थः ॥ ७ ॥ षट्स्वधिकान्त्रीन्पृच्छति ॥ कतमइति ॥ इमएवपूर्वोक्ताअग्निवाय्वादित्यशब्दवाच्याःवींद्रवायुमहेश्वराः लोकाःस्वस्वभार्याणामाश्रयाःज्ञानरूपाश्च । अनेनवायुवींद्रमहेश्वराणांसर्वदेवोत्तमत्वंलब्धं तत्कुतइत्यतआह ॥ एषुहीति ॥ हियस्मादेषुवायुवींद्रमहेश्वरेषु सर्वेदेवाअंतर्भूताः इतितस्मात्तेसर्वदेवोत्तमाइत्यर्थः । अत्रसर्वदेवानांतदंतर्भावोनामतत्परिवारत्वंविवक्षितमितिबोध्यं । षट्सुस्वभार्यापेक्षयाधिकप्रश्नेत्रयइतिपरिहारोभिहितः । षट्स्वेवस्वरूपोत्तमापेक्षयाअधिकप्रश्नेद्वावितियदुत्तरमुक्तंतयोर्द्वयोःस्वरूपंपृच्छति ॥ कतमाविति ॥ अन्नंप्रागंतरीक्षशब्दोक्ताश्रद्धा प्राणःतत्पतिर्मु

---

उ० । कतमइंद्रःकतमःप्रजापतिरितिस्तनयित्नुरेवेंद्रोयज्ञःप्रजापतिरिति कतमःस्तनयित्नुरित्यशनिरिति कतमोयज्ञइतिपशवइति ॥ ६ ॥ कतमेषडित्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौश्चैतेषडेतेपुहीदꣳसर्वंषडिति ॥ ७ ॥ कतमेतेत्रयोदेवाइतीमएवत्रयोलोकाएतेपुहीमेसर्वेदेवाइतिकतमौतौद्वौदेवावित्यन्नंचैवप्राणश्चेति ॥ ८ ॥

ख्यवायुः चशब्दौपरस्परसमुच्चये । एवकारःप्रसिध्यर्थः ॥ ८ ॥ अध्यर्धस्वरूपंपृच्छति ॥ **कतमइति** ॥ यःसर्वलोकाधारतया पवते अयमध्यर्धइत्युच्यते । ततूतत्रवायोरध्यर्धशब्दवाच्यत्वविषये आहुःपृच्छंतिशाकल्याद्याः । किमिति कथमध्यर्थइतिकेन निमित्तेनअध्यर्धशब्दवाच्यइत्यर्थः । तस्योत्तरमाह ॥ यदस्मिन्निति ॥ यत्यस्मात् अस्मिन्वायौ इदंबुद्धिस्थं सर्वज्ञानादिगुणजातं अध्यार्ध्नोत्आधिक्येनऋद्धमभवत् तेनकारणेनाध्यर्धइति । ततूतत्रापि आहुःपृच्छंति । किमिति कथमस्मिन्गुणजातमध्यार्ध्नोदिति । तस्योत्तरमाह ॥ यदयमिति ॥ यत्यस्मात् अयंवायुः एकइवैवपवते । नायमेकएव यतोविष्णुरेतद्विशिष्टः । नापिद्वितीयएव । विष्ण्वतिप्रीतिविषयत्वात् अतोऽयमेकइवेवेत्युच्यते । अथतस्मात्उक्तनिमित्तेनैकइवैवेत्युच्यमानत्वात् । अस्मिन्इदंसर्वमध्यार्ध्नोदित्यर्थइतियोज्यं । यत्यस्मात् । अस्मिन्वायौ । इदंसर्वप्रमाणप्रमितंजगत् अध्यार्ध्नोत्आधिक्येनस्थापितमभवत् तेनाध्यर्धइत्युच्यतइत्यपियदस्मिन्निति वाक्यंव्याख्येयं । प्राणोविष्णुः सप्राणनामाविष्णुः । ब्रह्मेति गुणपूर्णइति त्यदितितत्तथा । यथाश्रुत्यादौप्रतिपादितंतथैवनतुविकारेणानाद्यनंतकालेपुयातीतित्यदित्याचक्षतेविद्वांसः ॥ ९ ॥ **पुनरपिप्रष्टुंप्रष्टव्यार्थज्ञानिनस्तावत्फलमाह॥पृथिवीति॥** हेयाज्ञवल्क्य यस्यपुरुपस्य पृथिव्येवप्रसिद्धैवपृथिवी आयतनमाश्रयः यदभिमन्यमानेतियावत् । अग्निर्वागभिमान्यग्निस्थाअग्निशब्दाभिधारमा लोकोबाह्यप्रकाशहेतुःमनोवृत्तिहेतुः मनःमनःस्थितामनोनाम्नीरमा ज्यो

उ० । कतमोध्यर्धइतियोयंपवतइति तदाहुर्यदयमेकइवैवपवतेऽथकथमध्यर्धइति यदस्मिन्निदꣳसर्वमध्यार्ध्नोत्तेनाध्यर्धइति कतमएको देवइतिप्राणइतिसब्रह्मत्यदित्याचक्षते ॥ ९ ॥ पृथिव्येवयस्यायतनमग्निर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणंसवैवेदितास्या

तिरांतरप्रकाशरूपस्वरूपज्ञानाविर्भावहेतुः तंसर्वस्यात्मनोजीवजातस्यपरायणंउत्तमाश्रयंपुरुषंयोवैयएवाधिकारी विद्यात्जानीयात् सवैसएव वेदिताज्ञानी स्यादित्यर्थः। अत्रतंपुरुषंत्वंजानासिकिमितिग्राह्यं। याज्ञवल्क्यउत्तरमाह॥ वेदवाइति॥ हेशाकल्य यमात्थतंसर्वस्यात्मनःपरायणंपुरुषं अहंवेदवैजानाम्येव। यदिवेत्थतर्हितंब्रूहीत्यतआह॥ यएवेति॥ योयंप्रसिद्धःशारीरः पुरुषःजीवाभिमानीस्वायंभुवोमनुः सएव एषत्वयापृष्टः नैतावतोपरंतव्यं किंतुप्रष्टव्यंपृच्छैवेत्याह॥ वदैवेति॥ शाकल्यःपृच्छति तस्यमनोः कादेवतानियमनादिकर्त्रीति। एवंपृष्टोयाज्ञवल्क्यः अमृतंवायुर्देवतेत्युत्तरमुवाचहेत्यर्थः॥ १०॥ एवमेवोत्तरखंडसप्तकस्याक्षरयोजनाद्रष्टव्या। कामोमनोवृत्तिविशेषः। हृदयंहृद्ययनाहृदयंबुद्धिस्थारमा। एवमुत्तरत्रापिचक्षुर्लोकइत्यादौचक्षुःशब्दद्वयेनश्रोत्रशब्देनहृदयशब्दत्रयेणचतत्तदंतर्गतातत्तच्छब्दाभिधारमैवोच्यते। अत्रसर्वत्रमनोज्योतिरित्यत्रमनःशब्देन रमैवोच्यते। काममयःकामाभिमानीप्रद्युम्नः स्त्रियःश्रीसरस्वत्युमाः॥ ११॥ रूपाणिशुक्लादीनि आदित्येवर्तमानः पुरुषोरुद्रः

---

उ०। याज्ञवल्क्यवेदवाअहंतंपुरुषंसर्वस्यात्मनःपरायणंयमात्थयएवायꣳशारीरःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेत्यमृतमितिहोवाच॥ १०॥ कामएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंकाममयःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिस्त्रियइतिहोवाच॥ ११॥ रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवासावादित्येपुरुषः सएषवदैवशाकल्यतस्यकादेवतेतिसत्यमितिहोवाच॥ १२॥

त्यंचतुर्मुखः ॥ १२ ॥ आकाशोभूताकाशः श्रौत्रःश्रोत्रगतस्सन् प्रतिशृणोतीतिप्रातिश्रुत्कः पुरुषश्चंद्रः दिशोगरुडशेषदक्षाः ॥ १३ ॥ तमःप्रसिद्धं छायामयःतदभिमानीनिर्ऋतिःमृत्युर्यमः ॥ १४ ॥ आदर्शेविद्यमानः पुरुषः सूर्यः असुःअंतर्गतरूपो वायुः ॥ १५ ॥ आपोजडभूताः अप्सुपुरुषःपर्जन्यः वरुणःप्रसिद्धः ॥ १६ ॥ रेतः प्रसिद्धं पुत्रमयःपुत्राभिमानीशक्रःप्र

उ० । आकाशएवयस्यायतनꣳश्रोत्रंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायꣳश्रौत्रःप्रातिश्रुत्कःपुरुषःसएषवदैवशाकल्यस्यकादेवतेतिदिशइतिहोवाच ॥ १३ ॥ तमएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंछायामयःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिमृत्युरितिहोवाच ॥ १४ ॥ रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायमादर्शेपुरुषःसएषवदैवशाकल्यतस्यकादेवतेत्यसुरितिहोवाच ॥ १५ ॥ आपएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायमप्सुपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिवरुणइतिहोवाच ॥ १६ ॥ रेतएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंपुत्रमयःपुरुषस्सएषवदैवशाकल्यतस्यकादेवतेतिप्रजापतिरितिहोवाच ॥ १७ ॥

जापतिःप्रजापालकोब्रह्मा ॥ १७ ॥ एवमतिप्रश्नादनर्थंपश्यन्याज्ञवल्क्यःकरुणयाह ॥ शाकल्येति ॥ याज्ञवल्क्यःशाकल्येतिसंबोध्योवाच । किं इमेब्राह्मणाः स्वित्वितर्के नूनंत्वांअंगारावक्षयणं अंगाराःअवक्षीयंतेइतस्ततःअवक्रियंतेयेनकाष्ठेन तत्अंगारावक्षयणं तत्स्थानीयं अकृतकृतवंतः त्वंतुतन्नजानासि। अकृताइतिप्लुतिःकारुण्यविशेषद्योतिका ॥ १८ ॥ एवमुक्तंहितोपदेशंविपरीतार्थंमत्वाऽमर्षवशेनयाज्ञवल्क्येतिसंबोध्योवाचशाकल्यः । त्वंकुरुपांचालानांदेशानांसंबंधिनः तद्देशस्थान्ब्राह्मणानतिक्रम्य मामंगारावक्षयणंकृतवंतइतियदवादीः इदंकिंब्रह्मविद्वानितिबुध्योक्तं सत्यमहंब्रह्मविद्वानिति । नकेवलमहंब्रह्मस्वरूपमात्रंविद्वान्किंतुसर्वप्रतिष्ठात्वेनतद्विद्वानित्याशयेनाहयाज्ञवल्क्यः॥ दिशोवेदेति॥ अहंसदेवाःअभिमानिदेवतासहिताः सप्रतिष्ठाःसाधाराःदिशोवेद ॥१९॥ शाकल्यःपृच्छति यत्यदि सदेवाःदिशोवेत्थ तर्हिअस्यांप्राच्यांदिशिकिंदेवतोसिकादेवताधिष्ठात्रीज्ञातायेनसकिंदेवतः। अस्यांदिशिकांदेवतांजानासीतियावत्। उत्तरमाहयाज्ञवल्क्यः॥आदित्यदैवतइति॥ यदिसप्रतिष्ठादिशोवेत्थ तर्हिआदित्यःकस्मिन्प्रतिष्ठितइतियोज्यं। चक्षुपिचक्षुस्थेदृष्टिशक्तिप्रेरकेस्वायंभुवमनावित्याहयाज्ञवल्क्यःतस्याप्याधारंपृच्छति ॥ कस्मिन्निति॥ रूपेषुरूपाभिमानींद्रे चक्षुषातदभिमानिस्वायंभुवमनुनातत्प्रसादेन रूपाणितदभिमानींद्रं पश्यतिजीवोहियस्मात्

---

उ० । शाकल्येतिहोवाचयाज्ञवल्क्यस्त्वां३स्विदिमेब्राह्मणाअंगारावक्षयणमक्रता ३ इति ॥ १८ ॥ याज्ञवल्क्येतिहोवाचशाकल्योयदिदंकुरुपांचालानांब्राह्मणानत्यवादीः किंब्रह्मविद्वानितिदिशोवेदसदेवाःसप्रतिष्ठाइतियद्दिशोवेत्थसदेवाःसप्रतिष्ठाः ॥ १९ ॥ किंदेवतोस्यांप्राच्यांदिश्यसीतिआदित्यदेवतइति सआदित्यःकस्मिन्प्रतिष्ठितइतिचक्षुषीति

तस्माच्चक्षुःरूपेषुप्रतिष्ठितं। अमात्यप्रसादेनराजदर्शनेअमात्यस्यराजाधीनत्वदर्शनात् । यद्वारूपज्ञानस्यचक्षुःसत्वव्यवस्थापकत्वे नबाह्येंद्रियापेक्षयाविषयस्यप्राधान्यविवक्षयारूपाणिहिचक्षुषापश्यतीत्येवंयोज्यं । अन्यथायथाश्रुतेऽसंभवात् । अचेतनयोर्नियम्यनियामकभावस्तुचेतननियम्यनियामकभावाधीनइतिभावः । हृदयेबुध्यभिमानिन्यामुमायां हियस्मात् हृदयेनरूपाणिजानाति मनसःसर्वज्ञानसाधनत्वप्रसिद्धेः । तस्मात्हृदयेएवरूपाणिप्रतिष्ठितानिभवंतीत्यर्थः । हेयाज्ञवल्क्यएतत्त्वयोक्तं एवमेवेत्याहशाकल्यः ॥ २० ॥ यज्ञेतदभिमान्यनिरुद्धे । दक्षिणायांतदभिमानिरत्यां । श्रद्धायांतदभिमानिकामे । तदुपपादयति ॥ यदेति ॥ यस्मिन्काले श्रद्धत्ते अथतदा दक्षिणांददाति वैप्रसिद्धं। हियस्मात् तस्मात्श्रद्धायामेवदक्षिणाप्रतिष्ठितेति । हृदय इत्यादिपूर्ववत् ॥ २१ ॥ अप्सुतदभिमानिनिचंद्रे रेतसितदभिमानिबृहस्पतौ हृदयेउमायां । तस्मादपितस्मादेव । जातंप्रति

उ० । कस्मिन्नुचक्षुःप्रतिष्ठितमितिरूपेष्विति चक्षुषाहिरूपाणिपश्यति कस्मिन्नुरूपाणिप्रतिष्ठितानीतिहृदयइतिहोवाच हृदयेनहि रूपाणिजानातिहृदयेह्येवरूपाणिप्रतिष्ठितानिभवंतीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥ किंदेवतोस्यांदक्षिणायांदिश्यसीतियमदेवतइति सयमःकस्मिन्प्रतिष्ठितइतियज्ञइति कस्मिन्नुयज्ञःप्रतिष्ठितइतिदक्षिणायामिति कस्मिन्नुदक्षिणाप्रतिष्ठितेतिश्रद्धायामिति यदाह्येवश्रद्धत्तेऽथदक्षिणांददातिश्रद्धायाꣳह्येवदक्षिणाप्रतिष्ठितेतिकस्मिन्नुश्रद्धाप्रतिष्ठितेतिहृदयइतिहोवाच हृदयेनहिश्रद्धांजानातिहृदयेह्येवश्रद्धाप्रतिष्ठिताभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किंदेवतोस्यांप्रतीच्यांदिश्यसीतिवरुणदेवतइति सवरुणःकस्मिन्प्रतिष्ठितइत्यप्स्विति कस्मिन्वापःप्रतिष्ठिताइतिरेतसीति कस्मिन्नुरेतःप्रतिष्ठितमितिहृदयइति तस्मादपिप्रतिरूपंजातमाहुर्हृदयादिवसृप्तोहृदयादिवनिर्मितइति हृदयेह्येवरेतःप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

रूपंपुत्रं । आहुर्लौकिकाः । किं अस्यपितुःहृदयादिवअयंपुत्रः सृप्तःविनिःसृतः हृदयादिवनिर्मितः । यतएवंअतःहृदयेएवरेतः प्रतिष्ठितमित्यर्थः ॥२२॥ दीक्षायांशतरूपायां सत्येस्वायंभुवमनौ तस्मादपितस्मादेव दीक्षितंपुरुषंसत्यंवदेत्याहुः। हियस्मात् एवं तस्मात्सत्येदीक्षाप्रतिष्ठितेति । हृदयेउमायां ॥ २३ ॥ अस्यांध्रुवायांप्राचीदक्षिणामध्यभूतायां वाचिवागभिमानिनिबृहस्पतौ । हृदयेउमायां । एवंशङ्काद्याश्रयभूतायाहृदयात्मिकोमायाअप्याश्रयंपृच्छति ॥ कस्मिन्निति ॥२४॥ हेअहल्लिकअहर्ज्ञानंलीनमस्ये त्यहर्लीकअहर्लीकएवाहल्लिकअज्ञेतिहोवाचयाज्ञवल्क्यः । कुतस्तस्याज्ञत्वमित्यतःआह ॥ यत्रेति ॥ यत्रयस्मात् । एततहृदयं अस्मात्अहंकाराभिमानिनोरुद्रात् अन्यत्रमन्यासेजानासि वुध्यभिमानिन्युमायाअहंकाराभिमानिरुद्राश्रितत्वंप्रसिद्धंनजानासी तियावत् । तस्मात्त्वमज्ञइत्यर्थः । तस्यारुद्रानाश्रितत्वेकिंवाधकमित्याह ॥ यद्धीति ॥ यत्यदि एततहृदयं अस्मत्अहंकारा भिमानिरुद्रात् अन्यत्रस्यात् तदनाश्रितंस्यादितियावत् । तर्हिवुध्यभिमान्युमायाःदेहाभिरक्षणोपयोगिवुद्धिशक्त्यभावप्रसंगेनै तच्छरीरंश्वानोवाद्युः वयांसिचएनत्शरीरं विमथ्नीरन्विकर्षेरन् कस्यापिजीवनंनस्यादितिभावः ॥ २५ ॥ इदानींरुद्रोमयोराधारं

---

किंदेवतोस्यामुदीच्यांदिश्यसीतिसोमदेवतइति ससोमःकस्मिन्प्रतिष्ठितइतिदीक्षायामिति कस्मिन्नुदीक्षाप्रतिष्ठितेतिसत्यइति तस्मादपिदीक्षितमाहुः सत्यंवदेति सत्येह्येवदीक्षाप्रतिष्ठितेति कस्मिन्नुसत्यंप्रतिष्ठितमितिहृदयइतिहोवाच हृदयेनहिसत्यंजानातिहृदयेह्येवसत्यंप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञ वल्क्य ॥ २३ ॥ किंदेवतोस्यांध्रुवायांदिश्यसीत्यग्निदेवतइति सोग्निःकस्मिन्नुप्रतिष्ठितइतिवाचीति कस्मिन्नुवाक्प्रतिष्ठितेतिहृदयइतिकस्मिन्नुहृदयंप्र तिष्ठितमिति॥२४॥अहल्लिकेतिहोवाचयाज्ञवल्क्योयत्रैतदन्यत्रास्मन्मन्यासेयद्ध्येतदन्यत्रास्मत्स्याच्छ्वानोवैनदद्युर्वयांसिवैनद्विमथ्नीरन्निति ॥२५॥

पृच्छति ॥ कस्मिन्निति ॥ त्वं त्वमहमितिरूपःअहंकाराभिमानीरुद्रः आत्माबुध्यभिमान्युमाचइत्येतौ कस्मिन्प्रतिष्ठितौस्तः
(स्थः)इति प्राणेप्राणनामकेशेषे अपानेअपाननामिकायांभारत्यां व्यानेव्यानाभिधेवायौ उदानेउदाननामिकायांश्रियां समाने
समानशब्दाभिधेयेहरौ। कुतएवंसमाननामकस्यविष्णोःसर्वाधारत्वमित्यतआह॥ सएषइति ॥ सकतमएकोदेवःप्राणइत्युक्तः।
एषसमानशब्दाभिधेयःआत्माविष्णुः । इतिनदुःखास्पृष्टरमावन्नभवति। इतिनदुःखस्पृष्टब्रह्मादिवन्नभवति । यद्वाइतिनवद्धब्रह्मा
दिवन्नभवति । इतिनरमादिमुक्तवन्नभवतीत्यर्थः । तत्रहेतुमाह ॥ अगृह्यइति ॥ अगृह्यःअग्राह्यःसाकल्येनज्ञातुमशक्यःकुतइत्य
तःपरमात्मनःसाकल्येनग्राह्यत्वेप्रमाणाभावादित्याह ॥ नहीति ॥ परमात्मासाकल्येनगृह्यतइत्यत्रप्रमाणंनहीत्यर्थः । वैलक्षण्येहे
त्वंतरमाह ॥अशीर्यइति॥ कारणकालादिप्रयुक्तविशरणशून्यःस्वतइतिशेषः। कुतइत्यतआह॥ नेहीति॥ परमात्माशीर्यतइत्यत्र
प्रमाणंनहीत्यर्थः।वैलक्षण्येएवहेत्वंतरमाह॥असितइति॥स्वतएवबंधाभाववान्। तत्रापिहेतुमाह॥नेति॥ व्यथतेदुःखीभवतीत्य
त्रप्रमाणंनहीत्यर्थः।हेत्वंतरंचाह॥ नरिष्यतीति॥ त्रैकालिकनाशशून्यइत्यर्थः। अत्रापिप्रकरणान्नहिनरिष्यतीतिग्राह्यं । एवंशाक
ल्यप्रश्नस्यसर्वस्योत्तरमुक्त्वा स्वयंसामर्षोयाज्ञवल्क्यःशाकल्यंपृच्छति ॥एतानीति॥ एतानिपृथिव्येवयस्यायतनमित्यादिनोक्ता
निपृथिव्यादीनिअष्टावायतनाति अग्निर्लोकइत्यादिनोक्ताअष्टौलोकाः अमृतमितिहोवाचेत्यादिनोक्ताः अष्टौदेवाः शारीरःपुरुषइ ॥ २३२ ॥

उप० । कस्मिन्नुत्वंचात्माचप्रतिष्ठितौस्त(स्थ)इतिप्राणइति कस्मिन्नुप्राणःप्रतिष्ठितइत्यपानइति कस्मिन्नपानःप्रतिष्ठितइतिव्यानइति क
स्मिन्नुव्यानःप्रतिष्ठितइत्युदानइति कस्मिन्नूदानःप्रतिष्ठितइतिसमानइति सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्यते

त्याद्युक्ताअष्टौपुरुषाउक्ताः सप्रसिद्धोयस्तान्पुरुषान् उपलक्षणमेतत् आयतनलोकदेवानपि निरूह्यतदपेक्षांविनानिर्गत्य बहिष्ठरूपेणोह्य प्रत्यूह्यप्रतितत्तदंतर्यामिरूपेणोह्यात्यक्रामत् अतिक्रांतवान्। तंऔपनिषदंउपनिषन्मात्रगम्यं पुरुषं त्वात्वां पृच्छामि तंपुरुषंचेत्यदिमेमम त्वं विशेषेणनवक्ष्यसि तर्हितेमूर्धाशिरः विपतिष्यतीत्युवाचयाज्ञवल्क्यः। शाकल्यःकिंकृतवानितिजिज्ञासायांश्रुतिःस्वयमाह॥ तमिति॥ शाकल्यःतंयाज्ञवल्क्यपृष्टविशेषवंतंपरमात्मानं नमेनेनज्ञातवान्ह तस्यशाकल्यस्यमूर्धाविपपात प्रश्नोत्तराज्ञानात्। नकेवलमयंमृतएव अपितुअस्यशाकल्यस्य अस्थीन्यपि परिमोषिणःस्तेना अन्यन्मन्यमानाःसादृश्यात्रजतंमन्यमानाःअपजह्रुरपहृतवंतः॥२६॥ अथशाकल्यशिरःपातानंतरं याज्ञवल्क्यउवाच। हेब्राह्मणाभगवंतःपूजार्हाः वोयुष्माकंमध्ये यःकामयतेयाज्ञवल्क्यंपृच्छामीतिइच्छति समामां पृच्छतु अथवासर्वेयूयं मामां पृच्छत वोयुष्माकंमध्येयःकामयते याज्ञवल्क्योमांपृच्छत्विति तंवोयुष्माकंमध्येवर्तमानं अहंपृच्छामि वाऽथवा सर्वान्वोयुष्मान्पृच्छामीति। एवंयाज्ञवल्क्येनोक्तास्तेब्राह्मणानदधृषुःधैर्यवंतोनाभवन्॥ २७॥ तान्ब्राह्मणान् तैर्वक्ष्यमाणैःश्लोकैः पप्रच्छयाज्ञवल्क्यः। ननुजीवस्यैवदेहातिरिक्तस्याभावात् भावेवात

---

उप०। ऽसितोनव्यथतेनरिष्यति एतान्यष्टावायतनान्यष्टौलोकाअष्टौदेवाअष्टौपुरुषाःसयस्तान्पुरुषान्निरूह्यप्रत्यूह्यात्यक्रामत्तंत्वौपनिषदंपुरुषंपृच्छामितंचेन्मेनविवक्ष्यसिमूर्धातेविपतिष्यतीतितंहनमेनेशाकल्यस्तस्यहमूर्धाविपपातापिहास्यपरिमोषिणोस्थीन्यपजह्रुरन्यन्मन्यमानाः॥२६॥ अथहोवाचब्राह्मणाभगवंतोयोवःकामयतेसमापृच्छतुसर्वेवामापृच्छतयोवःकामयतेतंवःपृच्छामिसर्वान्वावःपृच्छामीतितेहब्राह्मणानदधृषुः॥२७॥ तान्हैतैःश्लोकैःपप्रच्छ। यथावृक्षोवनस्पतिस्तथैवपुरुषोऽमृषा॥ तस्यलोमानिपर्णानित्वगस्योत्पाटिकाबहिः॥ १॥

स्यैवदेहेनसहैवनाशेनपूर्वोत्तरदेहेष्वेकस्याभावेनतस्यपुनरुत्पादकप्रश्नोऽयुक्तएवेत्याशंकापरिहारायपुरुषस्यनित्यत्वंतावदुपोद्घात संगत्यासाधयति ॥ यथेति ॥ यथावनस्पतिः । प्रथमासप्तम्यर्थे वनस्पतौ । वृक्षइत्ययंशब्दः अमृषाविद्यमानार्थः । तथैवपुरुषेपुरुष इत्ययंशब्दोऽमृषाविद्यमानार्थएव । वृक्षशब्दप्रवृत्तिनिमित्तंवृश्चणत्वंयथावनस्पतौविद्यमानं तथापुरुकालसत्वरूपंपुरुषशब्दप्रवृत्ति निमित्तंपुरुषेविद्यमानमेव । तथाचोक्तप्रवृत्तिनिमित्तकपुरुषनामकत्वात्तन्नित्यत्वंसिद्धमितिभावः । एवंवृक्षसदृशतयाप्रकृतस्यपुरु षस्यशरीरस्यहेयत्वख्यापनार्थंवृक्षसादृश्यंवक्ति ॥ तस्येत्यादिना ॥ यद्वानित्यस्यपुरुषस्यपुनरुत्पत्तिर्नामदेहोत्पत्तिरेव देहस्यैवोत्प त्तिनाशसिध्यर्थंपुरुषस्यवृक्षसाम्यमाह ॥ तस्येत्यादिना ॥ अथवाकस्मान्मूलात्प्ररोहतीत्यत्रपुरुषोत्पादकमिववृक्षोत्पादकमपिप्र ष्टुंपुरुषोत्पादकप्रश्नावसरेवृक्षोत्पादकप्रश्नोसंगतइत्याशंकापरिहारायवृक्षपुरुषयोस्साम्यमुपपादयति ॥ तस्येत्यादिना ॥ तस्यपु रुषदेहस्य लोमानि पर्णानिवृक्षपर्णानीव अस्यपुरुषदेहस्य त्वक्लोमाश्रयभूतंचर्म बहिरुत्पाटिकावृक्षस्यसर्वापेक्षयाबहिर्भूतत्व गिव ॥ १ ॥ पुरुषत्वचः वृक्षत्वक्साम्यमुपपादयति ॥ त्वचइति ॥ यथाअस्यवनस्पतेःत्वचःउत्पटःनिर्यासः प्रस्यंदी तथाऽ स्यपुरुषस्य त्वचएवरुधिरंप्रस्यंदि । तदेवविवृणोति ॥ तस्मादिति ॥ यस्मादेवंसाम्यं तस्मात्आहतात् छिन्नात् वृक्षात् रसइव आ तृणात्सम्यक्छिन्नाद्देहात्तद्रुधिरंप्रकर्षेणएतिनिर्गच्छतीत्यर्थः॥२॥ वृक्षदेहयोःसाम्यांतरमाह ॥**मांसानीति**॥ अस्यमांसानिशर्करा णिवृक्षशकलस्थानीयानि वृक्षांतस्त्वङ्निभानिवा स्नावमध्येयत्स्थिरंविद्यतेअस्थिसंलग्नंतत्कीनाटमिवदारुसंश्लिष्टपाशवत् । पुरु

उप० । त्वचएवास्यरुधिरंप्रस्यंदित्वचउत्पटः ॥ तस्मात्तदातृणात्प्रैतिरसोवृक्षादिवाहतात् ॥२॥ मांꣳसान्यस्यशर्कराणिकीनाटंस्नावतःस्थिरं॥

पस्यास्थीनिवृक्षस्यांतरतोविद्यमानदारूणिवृक्षांतस्थसारभूतदारूणीववनस्पतिमंज्जा पुरुषमज्जोपमापुरुषमज्जायाःदृष्टांतभूताकृते त्यर्थः॥३॥ एवंपुरुषस्यवृक्षसाम्यमुपपाद्येदानींनाशोत्पत्तिमत्त्वेनापिसाम्योपपादनपूर्वकंयत्प्रष्टव्यं तत्पृच्छति॥यदिति॥ यद्यथा वृक्णःछिन्नो मूलान्नवतरःपूर्वस्मादभिनवतरः पुनःप्ररोहतेउत्पद्यते तथामृत्युनावृक्णःमर्त्यःस्विन्मर्त्योपि पुनःप्ररोहति। सवृक्षोमर्त्यश्च कस्मान्मूलात्कारणात्प्ररोहत्युत्पद्यते। वृक्षपुरुषयोःस्वातंत्र्येणोत्पादकःकःकिंलक्षणश्चेतिप्रश्नाशयः ॥ ४ ॥ स्वयमेव पुरुषोत्पत्तौसंभावितंकारणांतरमाशंक्यनिराकरोति ॥ रेतसइति ॥ हेब्राह्मणाःरेतसःसकाशात्पुरुषःप्ररोहतीतिमावोचतमेवंवक्तुमर्हथ कुतइत्यतआह॥जीवतइति॥ यस्मात् तत्रेतोजीवतःपित्रादेःप्रजायते मयातुअंजसाप्रेत्यस्थितस्यमहाप्रलयानंतरमिति यावत्। संभवत्यस्मादितिसंभवउत्पादकः। पृष्टः नहिमहाप्रलयेरेतःसिचःपित्रादेर्जीवनं तस्माद्रेतसःपुरुषोत्पत्तिर्नशंकनीयेत्यर्थः। ननुवृक्षस्यपुनरुत्पादकप्रश्नोऽयुक्तःतस्यधानाजन्यत्वस्यप्रत्यक्षसिद्धत्वादित्यतआह ॥ धानारुहइवेति ॥ वृक्षोधानारुहः स्वातंत्र्येणधानाजन्यइवाऽविदुषांप्रतीयतेनतुविदुषां। अतस्तन्नस्वातंत्र्येणवृक्षकारणमितिभावः। ननुवृक्षोमूलाद्रोहतीत्युक्तत्वात् वृक्षोत्पादकप्रश्नःसिद्धविषयइतिचेत्न। तस्यांगीकारवादमात्रत्वात् ॥ ५ ॥ कुतइत्यतःतममिपक्षंदूषयन्मर्त्यइतिपूर्वोक्तमेवानुवदति ॥ यत्समूलमिति ॥ यत्यदा समूलंवृक्षं पुरुषाआवृहेयुरुद्धर्तयेयुस्तदासः उन्मूलोवृक्षः पुनरासम्यक् नभवेत्किं यथा

---

उप०। अस्थीन्यंतरतोदारूणिमज्जामज्जोपमाकृता॥३॥ यद्वृक्षोवृक्णोरोहतिमूलान्नवतरःपुनः॥ मर्त्यस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहति॥४॥ रेतसइतिमावोचतजीवस्तत्प्रजायते ॥ धानारुहइववैवृक्षोंजसाप्रेत्यसंभवः ॥ ५ ॥ यत्समूलमावृहेयुर्वृक्षंनपुनराभवेत् ॥

एवंमृत्युनावृक्णोमर्त्यःस्वित्मर्त्योपिपुनर्भवेत्किं । भवेदेववृक्षोमर्त्यश्च । तत्कस्मान्मूलात्प्ररोहतीत्यर्थः । एवंयाज्ञवल्क्येनपृष्टेपुरुषस्यपुनरुत्पादकंभगवंतंजानंतोपिऋषयस्तत्पृष्टंसर्वंवक्तुमशक्तत्वात्तूष्णींबभूवुः ॥ ६ ॥ तेषुतूष्णींभूतेषुयाज्ञवल्क्यःस्वयमेवपरिहरति ॥ **जातएवेत्यादिना** ॥ ब्रह्मपरंब्रह्मैवसृज्यसर्जनेकारणमित्यर्थः । सार्वज्ञाभावेसर्वसर्जनायोगइत्यतउक्तं ॥ विज्ञानमिति ॥ विज्ञानपूर्णमित्यर्थः । प्रयोजनापेक्षयासर्जनेऽपूर्णताप्रसंगइत्यतआनंदोद्रेकादेवसर्जनमित्याशयेनोक्तमानंदमिति । आनंदपूर्णमित्यर्थः । तस्याप्यन्यतउत्पत्तौकोविशेषोजीवादित्यतउक्तं ॥ **कोन्विति** ॥ एनंपरमात्मानं नुइदानींसृष्टिकाले पुनःकः पुरुषोजनयेन्नकोपि । कुतइत्यतउक्तं ॥ **जातएवेति** ॥ अयंपरमात्माजातएवनित्यजातएव अनादिकालतश्चिदानंददेहयुक्तएव अतोनजायते तथाचकएनंजनयेदित्यर्थः । नकेवलंपूर्णविज्ञानानंदंब्रह्म किंतुअधिकारियोग्यतानुसारेणपुरुषार्थप्रदंचेत्याह ॥ **रातिरिति** ॥ दातुःस्वोद्देशेनहविरादिदातुर्यजमानस्य रातिरिष्टः। तद्विदःब्रह्मविदः परायणंपरमप्रियः तिष्ठमानस्यनिष्ठावतः परायणंमुख्याश्रयइत्यर्थः ॥ ७ ॥ २८ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यबृहदारण्यकोपनिषद्भाष्यटीकायांरघूत्तममुनिविरचितायांपंचमोध्यायः ॥ ५ ॥

---

उ० । मर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहति ॥ ६ ॥ जातएवनजायतेकोन्वेनंजनयेत्पुनः ॥ विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणं ॥ तिष्ठमानस्यतद्विदइति ॥ ७ ॥ २८ ॥ इतिशाकल्यब्राह्मणं ॥ ९ ॥ इतिश्रीबृहदारण्यकेपंचमोध्यायः ॥ ५ ॥

आगतानामृषीणांमध्येयोब्रह्मिष्ठस्तस्यगुरुत्वेनवरणायहि तद्विवेकार्थमृषिभिःकथाकारिताजनकेन । कथयाचयाज्ञवल्क्यःश्रेष्ठोनिश्चितस्तदनंतरंजनकोयाज्ञवल्क्यंगुरुत्वेनवव्रेचेत्याहानेनाध्यायेन।यद्वापंचमाध्यायेविद्यापरीक्षाहेतुभूतयाविजिगीषुकथयाब्रह्मस्वरूपंनिर्धारितं इदानींगुरुशिष्ययोर्याज्ञवल्क्यजनकयोःवादरूपकथयाब्रह्मस्वरूपनिर्धारणायायमध्यायःप्रवर्तते।पशूनिच्छन्नण्वंतानित्युभयमेवसम्राळितिहोवाचेत्येतत्पशून्ण्वंतानित्युभयमिच्छन्इतियोजनयायाज्ञवल्क्यवचनमितिप्रतीयते तदयुक्तं। याज्ञवल्क्यस्यस्वयंज्ञानित्वेनान्यस्मादण्वंतेच्छाभावादित्यतःपशूनिच्छन्नण्वंतानित्येतज्जनकस्यैववाक्यमितिसूचयन्नपेक्षिताध्याहारेणाऽण्वंतानित्येतद्व्याचष्टे॥ अणुरिति॥तद्विषयानित्यनेनाणोरंताअण्वंताइतिविग्रहः षष्ठीचकर्मणीत्युक्तंभवति। अंतानित्यस्यार्थोनिर्णयानिति वक्तुंचेतिशेषोक्तिः अब्रवीत्तुतेतस्यायतनंप्रतिष्ठामित्यादिवाक्यषट्कगतप्रतिष्ठाशब्दआश्रयपरइतिव्याख्यानमसत् आयतनशब्देनपुनरुक्तिप्रसंगादितिभावेनप्रतिष्ठाशब्दार्थनिर्वचनपूर्वकमाह॥ प्रतिष्ठेति॥ प्रतिरूपेणप्रतिबिंबरूपेण प्रतिष्ठाशब्दोक्ताप्रतिमाकेत्यतआह ॥ प्रतिमेति ॥ रमाविष्णोर्मुख्याप्रतिमा ब्रह्मादीनामपिप्रतिमात्वान्मुख्येत्युक्तं तत्रहेतुर्विष्णोरधिकसादृश्यादिति ।तदधीनत्वेसतितत्सदृशत्वस्यैवप्रतिबिंबत्वादितिभावः । नित्यमुक्तत्वदेशव्याप्त्याद्यधिकसादृश्यादित्यर्थः ।सदेतिस्वरूपसंकीर्तनं यद्वामुक्तानामपिस्वानंदानुभवितृत्वादिनाऽधिकसादृश्यात्सदेत्युक्तं। ननुश्रुतावाकाशःप्रतिष्ठेत्याकाशस्यप्रति

भा० । अणुर्भगवांस्तद्विषयान्निर्णयान्वक्तुंवा । प्रतिष्ठाप्रतिमाप्रोक्ताप्रतिरूपेणसंस्थितेः । प्रतिमाधिकसादृश्यान्मुख्याविष्णोःसदारमा ।

मात्वोक्तेः कथमेतदित्यतआकाशशब्देनरमैवोच्यतइत्याह ॥ **दीप्तत्वादिति** ॥ आइत्यनुवादेनसमंतादितिव्याख्यानं । ननु एकस्यविष्णोर्यथैकैवप्रतिमा एवमेकमेवायतनंवक्तव्यं कथंवागादीनिषडायतनान्युक्तानीत्यतआह ॥ **प्रत्येकमिति** ॥ वाक्प्राणचक्षुःश्रोत्रमनोहृदयनामकानांप्रत्येकंविष्णुरूपाणां अन्यत्रमाभिन्नंवागिंद्रियादिकं पृथगायतनमित्यर्थः । ननुवाग्वैब्रह्मेत्याद्युपदिष्टस्यवागादिनामकब्रह्मणःपूर्णत्वात् एकपाद्वाएतत्सम्राळितिकथमुच्यतइत्यतःतदभिप्रायमाह ॥ **प्रतिमानमिति** ॥ प्रतिमेत्यर्थः। सार्थकंप्रतिपाद्यार्थसहितंरहस्यंनामेतिसंबंधः । रहस्यंनामतदर्थश्चेतिचतुष्टयमित्यर्थः। विद्याफलंसम्यगितिसंबंधः। तथाचविद्यासंपूर्णफलायज्ञातव्यचतुष्टयेजित्वादिभिःषड्भिराचार्यैर्वाग्वैब्रह्मेत्यादिनारहस्यंनामैवोक्तंनप्रतिष्ठादित्रयं अतएकपाद्वाएतदित्युक्तमितिभावः। ननुकाप्रज्ञता काप्रियतेत्यादिधर्मप्रश्नेवाक्प्राणादिनिष्ठोधर्मएवोत्तरत्वेनवक्तव्यः वागेवसम्राळितिप्राण एवसम्राळितिवाक्प्राणादिरूपोधर्मीकथमुत्तरत्वेनोच्यतइत्यतआह ॥ केति ॥ इत्यादेःप्रश्नपरिहारात्मकस्यवाक्यस्यधर्मधर्म्यभेदोऽभिप्रेतइत्यर्थः। ननुऋग्वेदादिविद्यासाधनकथनप्रकरणेविद्याकथनमयुक्तं। नचकरणव्युत्पत्त्याविद्याशब्देनतत्साधनमेवोच्यतइतिवाच्यं । ऋगादिव्यतिरिक्तस्यतस्याभावात् । नचानुक्तपंचरात्रपरत्वंविद्याशब्दस्येतिवाच्यं भारतेपंचरात्रविदोमुख्याइतिप्रकृतपंचरात्रविषयत्वेन ऋषीनुवाचतान्सर्वान्अदृश्यःपुरुषोत्तमः। कृतंशतसहस्रंहिश्लोकानांहितमुत्तममितिश्लोकशब्दस्यप्रयोगात्

भा० । दीप्तत्वादासमंतात्साचाकाशइतिगीयते । प्रत्येकंविष्णुरूपाणामन्यदायतनंपृथगित्यध्यात्मे । प्रतिमानमवस्थानंरहस्यंनामसार्थकं । चतुष्टयंयदाज्ञातंसम्यग्विद्याफलंतदेतिच । काप्रज्ञतावागेवेत्यादेर्धर्मधर्म्यभेदः ।

श्लोकशब्देनपंचरात्रोक्त्यापुनरुक्तिप्रसंगादित्यतआह ॥ अमितेति ॥ अमिताक्षरंगद्यात्मकं मिताक्षरंछंदोबद्धपद्यात्मकं । पंचरात्रमित्यनुवर्तते वेदविद्याउपनिषदः श्लोकाइतिवेदवाक्येविद्याश्लोकशब्दाभ्यामुभयंगद्यात्मकंपद्यात्मकंचपंचरात्रमीर्यतइत्यर्थः । यद्यपिविद्याख्यामूलिकाश्रुतिरित्युक्तं तथापिव्याख्यानांतरमेतदित्यदोषः । नचैवंमूलश्रुतेरसंग्रहः ऋगादिपदेनैवतद्ग्रहणात् । ऋचस्सऋचउद्धृत्येत्यादिमूलश्रुतावपिऋगादिपदप्रयोगात् । सूत्राणीतिसूत्रपदेनब्रह्मसूत्रमात्रग्रहणेबहुवचनानुपपत्तिरितिभावेनाह ॥ सूत्रमिति ॥ व्याख्यानानीत्यस्यार्थमाह ॥ ब्रह्मतर्कादयइति ॥ अन्यकृतप्रकाशिकादिसंज्ञकग्रंथव्यवच्छेदाय स्वयंसाक्षात् भगवत्कृताएवेत्युक्तं । अनुव्याख्यानानीत्यस्यार्थमाह ॥ बृहत्तर्कादयइति ॥ वाग्वैब्रह्मप्राणोवैब्रह्मचक्षुर्वैब्रह्मश्रोत्रंवैब्रह्ममनोवैब्रह्महृदयंवैब्रह्मेतिवाक्यानिवागादींद्रियाणामेवब्रह्मत्वमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ वागिति ॥ वाचकत्वेनवाचकत्वशक्तिप्रदत्वेनवचनक्रियाकर्तृत्वेनेतियावत् । वागादिशब्दाब्रह्मवाचकाइत्यत्रसमाख्यामाह ॥ अन्नमिति ॥ नचतत्रापिविवादः। अधीहिभगवोब्रह्मेतिब्रह्मप्रश्नेअन्नादीनामुक्तत्वात्। यतोवाइमानिभूतानिजायंते अन्नंब्रह्मेतिव्यजानादित्याद्यु

भा० । अमिताक्षरंपंचरात्रंविद्येत्याहुर्मनीषिणः । मिताक्षरंश्लोकवाच्यमुभयंवेदईर्यतइतिब्रह्मांडे । सूत्रंतुब्रह्मसूत्राख्यंमहामीमांसिकातथा । तथा सांकर्षणंसूत्रंब्रह्मतर्कादयस्तथा । प्रकाशिकानिर्णयश्चतत्वनिर्णयएवच । व्याख्येतिकथिताःसर्वाःस्वयंभगवताकृताः । बृहत्तर्कादयःसर्वाअनुव्याख्याःप्रकीर्तिताइतिप्रतिसंख्याने । वाग्विष्णुर्वाचकत्वेनप्राणःप्रणयनात्स्वयं । मनोमंतृत्वतोनित्यंसचक्षुःसर्वदर्शनात् । श्रोत्रंश्रवणशक्तित्वाद्धृदयंहृद्गतोयतइतिप्रत्याहारे । अन्नंप्राणंचक्षुःश्रोत्रंमनोवाचमितीत्यादिच ।

त्तरवाक्याच्चान्नादिशब्दानांब्रह्मपरत्वावगमात् । अन्नमत्रानुपयुक्तं आदिपदेनहृदयंब्रह्मेत्यारुणयइतिश्रुतिग्रहणं । ननुतथापि
वाग्वैब्रह्मेत्यादौवागादिशब्दानांनब्रह्मपरत्वमंगीकर्तुंशक्यं । तथासतिनैनंवाक्जहातिनैनंप्राणोजहातीत्यादिफलवाक्यानुपपत्तेः ।
नहिब्रह्मोपासकस्यवागादींद्रियात्यागःफलंसंभवति । उपासनाननुगुणत्वात् । अतइंद्रियाणामेवब्रह्मत्वमुच्यतइत्यतआह ॥ **वागा
दिष्विति** ॥ अस्त्वेवंवाग्वैब्रह्मेत्यत्रवागादिशब्दानांपरब्रह्मपरत्वं इंद्रियपरत्वस्याप्यंगीकारेकिंबाधकमित्यतआह ॥ **अतइति** ॥
यतएवंप्रमाणेनव्याख्यातमतोवागेवायतनमित्यादावायतनत्वेनोक्तमेववागादिकंवागिंद्रियादि नतुवाग्वैब्रह्मेत्यादिनाब्रह्मत्वेनोक्तं
तद्विरोधापत्तेरित्यर्थः । अतोवाग्वैब्रह्मेत्यादिनोक्तंवागादिब्रह्मैवेतिवक्तव्येआयतनमेववागादींद्रियादीत्युक्तिःब्रह्मत्वेनोक्तवागादे
र्वागादींद्रियत्वेवागेवायतनमितिवागादींद्रियस्यैवायतनत्वोक्तिर्विरुद्धास्यात् । नहिस्वस्यैवस्वयमायतनमितिबाधकांतरसूचनार्था ।
एतेनैतद्बाधकपरिहारायवाग्वैब्रह्मेत्यादौवागाद्यभिमानिदेवताऽग्न्यादिरेववागादिशब्देनोच्यते वागेवायतनमित्यादौतुवागिंद्रिय
मेवतस्यायतनत्वेनोच्यतइतियत्परव्याख्यानं तदप्यपास्तं । उदाहृतप्रमाणविरोधस्यतदवस्थत्वात् । वाग्वैब्रह्मेत्यादौवागादिश
ब्देनेंद्रियमात्रग्रहणेबाधकांतरमाह ॥ **परमामिति** ॥ यदिवाग्वैब्रह्मेत्यादौवागादिशब्दानांवागादींद्रियपरत्वं तर्हिवाग्वैसम्राट्प
रमंब्रह्मेतिपरमब्रह्मत्ववचनंनस्यात् । नहींद्रियस्यपरमब्रह्मत्वंसंभवति । सयएवंविद्वाने( न )तदुपास्तइत्युक्तमुपास्यत्वंचन

---

भा० । वागादिपुस्थितंविष्णुंयउपास्तेसदैवतु । वागादिनाम्नानैनंसप्रजहातिकदाचनेतिसत्तत्वे । अतआयतनमेववागिंद्रियादि । परमंब्रह्मेति
वचनान्नवागिंद्रियादिमात्रमुपास्यं ।

स्यात् । नहींद्रियमात्रस्यजडस्योपास्यत्वंयुक्तं अचेतनोपासनस्यव्यर्थत्वात् । तथाचसांकर्षणंसूत्रं अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वेविपर्ययाभ्यामिति । यद्यपिवाग्वैब्रह्मेत्यादौब्रह्मशब्दएववागादेःपरब्रह्मत्वसाधकोस्ति तथापिब्रह्मशब्दस्यकथंचिद्वागिंद्रियादावेवसावकाशताशंकापरिहारायपरमंब्रह्मेतिवचनादित्युक्तं । यद्वावागादिशब्दसमभिव्याहृतब्रह्मशब्दस्यपरब्रह्मत्वसाधकत्वंशिष्यैरेवसुज्ञेयमितिभावेनव्यवहितवाक्यगतपरमब्रह्मशब्दोपादानमित्यवधेयं । ननुनात्रवागादींद्रियमात्रमुपास्यमुच्यते येनतद्वैयर्थ्यं किंतुवागादेःपरब्रह्मत्वेनोपासनमेव । तस्यचशुद्धब्रह्मोपासनांगत्वेनसार्थकत्वादितिचेन्न । वागादीनांब्रह्मत्वस्याभावेन तदुपासनस्यमिथ्योपासनत्वात् मिथ्योपासनायाश्चअनर्थफलहेतुत्वादित्याह ॥ **प्रतिमाद्यमिति** ॥ हरित्वेनेत्यस्योत्तरत्रापिसंबंधः । अग्नौपतंगवत् । वागादींद्रियेषुवागादिनामकभगवदुपासकोयःकश्चित्देवोभूत्वादेवत्वमप्येतीतिप्रतीतिनिरासायदेवोभूत्वादेवानप्येतीतिसमग्रंवाक्यंव्याख्यातुंतदुपासनाधिकारिणस्तावदाह ॥ **सर्वेति** ॥ ननुदेवोभूत्वादेवानप्येतीतिकथं देवत्वभवनव्यतिरेकेणदेवत्वप्राप्तेरभावादित्यतोदेवानप्येतीत्येतावन्मात्रंतद्व्याचष्टे ॥ **तयेति** ॥ इदानींदेवोभूत्वादेवानप्येतीतिसमग्रंवाक्यंव्याचष्टे ॥ **सायुज्यमिति** ॥ अथदेवप्राप्त्यनंतरं सर्वाण्येनंभूतान्यभिक्षरंतीतिवाक्यमैहिकफलपरत्वप्रतीतिनिरासायव्याचष्टे



भा० । प्रतिमाद्यंहरित्वेनपृथिव्याद्यमथापिवा । इंद्रियप्राणजीवाद्यमथवायउपासते । मिथ्योपास्तिमतांतेषांनिष्कृतिर्नकदाचन । अतिदुःखेपतंत्यद्धातमस्यंधेपतंगवदित्युपासनानिर्णये । सर्वेंद्रियेषुयाविष्णोरुपासायुगपत्सदा । देवानामेवयोग्यासातयादेवत्वमाप्नुयुः । सर्वेदेवपदेयोग्याःसायुज्यंस्वोत्तमेष्वथ । संप्राप्यब्रह्मणासार्धंप्राप्नुयुःपुरुषोत्तमं ।

॥ दुहंतीति ॥ तेभ्योदेवेभ्यः तेचमुक्तादेवाः स्वोत्तमेभ्योभोगान्दुहंति तेचोत्तमादेवा हरयेभोगान्दुहंतीतिसंबधः । ननुदेवोभूत्वेत्येतत्स्वोत्तमदेवोभूत्वेत्येवकुतोनव्याख्यायते । अधमदेवस्योत्तमदेवाभेदस्यप्रमाणबाधितत्वादितिचेत् । तर्हिंस्वोत्तमेष्वसायुज्यंसंप्राप्येतिकथंव्याख्यानं तत्सायुज्यस्यतत्स्वरूपाव्यतिरेकेणतदानंदभोगरूपत्वेनाभेदापरिहारादित्यतआह ॥ प्रविश्येति ॥ स्वरूपव्यतिरेकेसायुज्यंकथमित्यतआह ॥ संयुक्तत्वादिति ॥ नन्वस्यामुपासनायांदेवपदायोग्यानामपिकथंचिदधिकारोस्तिनवा । नाद्यः फलाभावात् । देवोभूत्वेत्यादेर्देवतापरत्वात् । नद्वितीयः प्राक्युगपदितिविशेषणवैयर्थ्यापत्तेरित्यतःप्रथमपक्षंतावदंगीकरोति ॥ इंद्रियेष्विति ॥ तत्रोक्तदोषपरिहारार्थंदेवोभूत्वेतिवाक्यंव्याचष्टे ॥ सइति ॥ मनुष्याणांसुरत्वाभावात्कथमेतदित्यतआह ॥ मानुषाइति ॥ देवानप्येतीत्येतद्व्याचष्टे ॥ मानुषाइति ॥ हस्त्यृषभंसहस्रमित्यस्यहस्तितुल्यऋषभोयस्मिन्गोसहस्रेतत्सहस्रहस्तिऋषभंसहस्रमितिव्याख्यानमसत् । गजऋषभाणामेवगुरुदक्षिणात्वेनक्षत्रियेणदातव्यतयाजनकराजेनतेषामेवगुरुदक्षिणात्वप्रतिज्ञोपपत्तेः । गवांचवैश्येनैवतत्वेनदातव्यत्वादितिभावेनतत्रप्रमाणमाह ॥ ऋषभानिति ॥ अने

---

भा० । दुहंतिसर्वभोगांश्चतेभ्योन्येमुक्तिगानराः । स्वोत्तमेभ्यश्चदेवेभ्यस्तेमुक्ताहरयेसदेतिच । प्रविश्यदेहंयोभोगःस्वरूपव्यक्तिरेकतः । सायुज्यमितितंप्राहुःसंयुक्तत्वाद्विशेषतइतिच । इंद्रियेषुस्थितंविष्णुमुपासीतक्रमेणतु । सदादेवपदायोग्यःसमानुषसुरोभवेत् । मानुषादेवलोकस्थास्तेप्रोक्तामानुषाःसुराः । मानुषादेवसायुज्यंयांत्युपासनयानयेतिच । ऋषभान्गजमिश्रांस्तुक्षत्रियोगुरुदक्षिणां । विप्रोदद्याद्वृपानेववैश्योगाःप्रतिविद्यकमितिचमानसंहितायां ।

नहस्तिनायुक्तऋषभोहस्तिऋषभस्तं । सहस्रंसहस्रसंख्याकं ददामीत्यर्थउक्तोभवति । एवंचद्वंद्वसमासत्वेहस्त्यृषभावितिस्यादितिं
परास्तं । गवांसहस्रमवरुरोधेतिपूर्वमुक्तंगोसहस्रावरोधनंतुविद्यापरीक्षणार्थमेवनतुगुरुदक्षिणार्थमितिनतद्विरोधः । ननुजनकस्यजि
त्वादयोयादृशगुरवो याज्ञवल्क्योपिकिंतादृशएव नेतिब्रूमः । किंतुमुख्यगुरुरेव तन्मोक्षसाधनविद्योपदेष्टृत्वात् । जित्वादय
स्त्वमुख्यगुरवः । मोक्षसाधनादन्यविद्याप्रदत्वात् । जित्वाद्युपदिष्टविद्याया अपिमनुष्यादिमोक्षसाधनत्वेनासिद्धोहेतुरितिचेन्न ।
तथापिजनकमोक्षहेतुत्वाभावात् । नन्वेकस्याएवविद्यायामनुष्यादिमोक्षहेतुत्वंजनकादिमोक्षहेतुत्वाभावश्चकथमित्यतआह ॥ अ 475
न्ययेति ॥ योग्यताभेदादित्यस्यात्रापिसंबंधः । तत्रापिएकस्यामपि । तर्हिसर्वेषामपिसुराणांकिमेकयैवविद्यामुक्ति नेत्याह
॥तत्रापीति॥ सुरेष्वपीत्यर्थः। प्रतिभेदाःप्रातिस्विकभेदाः । मोक्षसाधनतदन्यविद्यादातृत्वयोःमुख्यामुख्यगुरुत्वाभ्यांव्याप्तिमा
ह॥ ययेति ॥२॥ नन्वयाज्ययाजनाप्रतिग्राह्यप्रतिग्रहचौर्याणिभोजनसाधनान्येवनतुप्राणप्रीतिसाधनानि । अतःप्राणस्यैवकाम्या
याज्यंयाजयतीत्यादिकथमुच्यतइत्यतःश्रुतावप्ययाज्ययाजनादीनांपरंपरयैवप्राणप्रीतिसाधनत्वंविवक्षितमितिभावेनाह ॥ प्राणे
ति ॥ तदिच्छयावस्तुतःप्राणस्थविष्णुप्रीतिकरभोजनेच्छया ज्ञानिनोभोजनसाधनमयाज्ययाजनादिकंकुर्युः। अज्ञाअपिभोजनसा
धनंचौर्यादिकुर्युरित्यपिशब्दार्थः । तत्रवधाशंकंभवतीत्यस्यतात्पर्यंचौर्येति। आदिपदेनाऽयाज्ययाजनाप्रतिग्राह्यप्रतिग्रहयोःग्रहणं।

---

भा० । अन्ययाविद्ययामुक्तिःसुराणामन्ययानृणां । तत्रापियोग्यताभेदात्प्रतिभेदाअवांतराः । ययायस्यविमुक्तिःस्यात्तदातामुख्यतोगुरुः ।
एकदेशेगुरुत्वंस्यादन्यविद्याप्रदस्यत्वितिच ॥ २ ॥ प्राणसंस्थस्यवैविष्णोःसंप्रीत्यैभोजनंभवेत् ।

चौर्यस्येतरदोषापेक्षयाप्रबलत्वाच्छ्रुतिक्रमोलंघनं चौर्यादिकरणेकिंतेषांस्वातंत्र्यंनेतिभावेनोक्तं ॥ तदिच्छयैवेति ॥ प्राणस्थवि ष्णोरिच्छयैवेत्यर्थः । अनेनप्राणस्यैवकामायेतिद्वितीयवाक्यंव्याख्यातंभवति । ननुप्राणस्थविष्णुप्रीतिकरभोजनेच्छयातदिच्छ यैवयदिचौर्यादिकुर्युस्तर्हितेकथमज्ञाइत्यतआह ॥ तथापीति ॥ यद्यपिवस्तुतःप्राणस्थविष्णुप्रीतिकरभोजनेच्छयातदिच्छयैव चौर्यादिकुर्युः । तथापीत्यर्थः ॥ ३ ॥ चक्षुर्वैब्रह्मेत्यादौचक्षुःशब्देननेंद्रियमात्रमुच्यते । किंतुविष्णुरूपमेवेत्यत्रप्रमाणांतरमाह ॥ ॥ यदिति ॥ ननुचक्षुर्वैसम्राडृपश्यंतमाहुरित्यादिनाचक्षुरिंद्रियस्यैवसत्यत्वमुपपाद्यते । तत्कथमेतदित्यतस्तदपिचक्षुर्नामक भगवतएवसत्यत्वोपपादकमित्यभिप्रेत्याद्राक्षीरितिसआहाद्राक्षमित्यादिकमुपलक्षणपरमितिभावेनचक्षुःस्थभगवद्रूपविशेषंदर्शय न्नाह ॥ शब्दादेरिति ॥ आदिपदेनगंधादिग्रहणं अपिशब्देनरूपसमुच्चयः दक्षिणाक्षिस्थविश्वनामकविष्णुरूपस्यजाग्रद्दर्शन मात्रहेतुत्वादितिभावः । विश्वनामकविष्णोरूपादिसाक्षात्कारहेतुत्वंव्यतिरेकेणोपपादयति ॥ तद्गतस्येति ॥ चक्षुर्गतस्येत्यर्थः । ततश्चक्षुषःकुतोनजायतइत्यतआह ॥ चक्षुर्निर्मीलनमिति ॥ स्वप्नावस्थायांश्रोत्रादिसर्वेंद्रियगुणैर्व्यापारैस्सहचक्षुर्निमीलनं स्यात् अतःसन्निकर्षाभावान्नज्ञानमितिभावः । किंततइत्यतआह ॥ चक्षुरात्मेति ॥ ततोजाग्रद्दर्शनहेतुत्वात् ॥ ४ ॥ ननुअ

---

भा० । तदिच्छयैवचौर्यादिकुर्युरज्ञाअपिध्रुवं । तथापितंनजानीयुःप्राणात्मानंजनार्दनमितिप्रवृत्ते ॥ ३ ॥ यच्चक्षुपिस्थितंरूपंविष्णो श्चक्षुस्तदुच्यते । शब्दादेरप्यापरोक्ष्येतद्धेतुर्विश्वनामकं । तद्गतस्यततोविष्णोःकंठस्थानागमोयदा । तदास्वप्नोभवेज्जाग्रद्दर्शनंनैवजायते । चक्षुर्नि मीलनंचस्यात्सर्वेंद्रियगुणैःसह । चक्षुरात्माततोविष्णुःसत्यमित्यभिधीयतइतिच ॥ ४ ॥

नंतइत्येत(न)दुपासीतेतिश्रोत्रनामकस्यभगवतोऽनंतत्वमुक्त्वाकानंततादिशइतिहोवाचेतिदिशामनंतत्वमुच्यतेतदसंगतमित्यत आह ॥ सर्वव्यापीति ॥ दिक्षुस्थइतिसप्तम्याअलुक् ॥ ५ ॥ ननुकानंदतेतिप्रश्नेमनएवेतिमनोनामकस्यभगवतःआनंदत्वंप्रतिज्ञायमनसावैसम्राडित्यादिनापुत्रस्यानंदत्वमुच्यते । तदसंगतं पुत्रस्यानंदत्वमयुक्तंचेत्यतआह ॥ मनइति ॥ यत्यदा कैमुत्येनमनःस्थस्यभगवतआनंदहेतुत्वमुपपादयितुंपुत्रस्यानंदहेतुत्वमुच्यतइतिनासंगतिरितिभावः ॥ ६ ॥ हृदयंवैसम्राट्सर्वेषांभूतानांप्रतिष्ठेतिप्रतिज्ञावाक्येहृदयशब्देनसर्वदाजीवधारकंसुप्तौचजीवधारकंभगवद्रूपमुच्यतइतिज्ञापनायहृदयेह्येवसम्राट् सर्वाणिभूतानिप्रतिष्ठितानिभवंतीत्युपपादकवाक्यं अपेक्षिताध्याहारेणद्वेधाव्याचष्टे॥सदेति॥ननुहृदयनामकंहृद्गतंचभगवद्रूपमेकमेव । अत्रतुहृदयंवैसम्राट्सर्वेषांभूतानामायतनमित्यायतनत्वेनोच्यमानंरूपंएकंप्रतिष्ठात्वेनोच्यमानंरूपद्वयमितिरूपत्रयमुच्यते ।तत्कथमित्यतोहृदयस्थंरूपत्रयमप्यस्तीतिभावेनहृदयंवैसम्राट्सर्वेषांभूतानामायतनमितिवाक्यंतावद्व्याचष्टे॥हृदयइति ॥ तत्तद्धृदयव्यापीतत्तज्जीवस्थानमितिसर्वेषांजीवानांस्थानमित्यर्थः । एवंसर्वेजीवाःप्रतिष्ठिताइत्युत्तरवाक्यमपिव्याख्येयं । हृदयंवैसम्राट्सर्वेषांभूतानांप्रतिष्ठेतिवाक्यंद्वेधाव्याचष्टे ॥ हृत्कर्णिकेति ॥ प्रतिष्ठिताः सर्वदेतिशेषः।तुविशेषेणप्रविशंतीत्यन्वयः।अनेन प्रादेशमा 

---

भा० । सर्वव्यापीतुभगवाननंतइतिकीर्तितः । दिङ्नामासतुविज्ञेयोदिक्षुस्थोनित्यदेशनादितिच ॥ ५ ॥ मनःस्थितस्ययद्विष्णोःसंबंधादेवकामतः । जातःसुतःसुखेहेतुःपरानंदोहरिःकिम्वितित्रह्मतर्के ॥ ६ ॥ सदाप्रतिष्ठितानिभवंतिविशेषतोपिप्रतिष्टतानिसुप्तौ । हृदयेसर्वशोव्यापीप्रादेशःपुरुषोत्तमः । जीवानांस्थानमुदिष्टःसर्वदैवसनातनः । हृत्कर्णिकामूलगतःसोंगुष्ठाग्रप्रमाणकः । मूलेशइतिनामास्मिन्सर्वेजीवाःप्रतिष्ठिताः ।

त्रंपुरुपंवसंतमिति अंगुष्ठमात्रःपुरुषइति अंगुष्ठाग्रप्रमाणकइतिवचनानांविरोधःपरिहृतोभवति। ननुजाग्रदवस्थायांजीवोदक्षिणाक्षि
स्थःस्वप्नावस्थायांकंठदेशस्थःसुप्तौतुहृदयस्थः। जाग्रदाद्यवस्थाप्रेरकविश्वतैजसप्राज्ञानांदक्षिणाक्ष्यादिषुस्थितत्वात्। यथोक्तं दक्षि
णाक्षिमुखेविश्व इत्यादि। तथाचहृत्कर्णिकामूलगतभगवद्रूपेजीवःसर्वदाप्रतिष्ठितः। सुप्तौहृत्कर्णिकाग्रगतहरौप्रविशतीतिकथमुक्तं।
कथंवाहृदयव्याप्तप्रादेशपरिमितभगवद्रूपस्यसर्वदाजीवस्थानत्वमितिचेन्न। हृदिस्थमेवसर्वदाजीवस्वरूपं हृदिह्येपआत्मेत्यादिश्रुतेः।
अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहीतिसूत्राच्च। जागरितादावप्यक्ष्यादिषुविशेपसन्निहितंभवति दीपप्रकाशवत्। यथोक्तं
गुणाद्वालोकवदिति। ननुकथमंगुष्ठमात्रत्वंभगवद्रूपस्य परिमाणांतरस्यापितत्रसत्वादितिचेन्न। हृदिविद्यमानाकाशस्यांगुष्ठमात्र
त्वेनभगवन्मूर्तिविशेषस्यतत्राभिव्यक्त्यालक्षणयांगुष्ठमात्रत्वव्यपदेशात्। भिन्नेष्वपिस्थानैक्योक्तिवत्हृदयाकाशस्यांगुष्ठमात्रत्वेन
तत्संबंधात्सर्वगतेपिहरावुपचारेणवांगुष्ठमात्रत्वव्यपदेशात्। नन्वेवंविष्णुरूपस्यैवयद्यायतनत्वंप्रतिष्ठात्वंच तर्हिश्रुतौहृदयमायत
नंहृदयंप्रतिष्ठेतिकथमुक्तमित्यतआह ॥ सोयमिति ॥ नन्वायतनप्रतिष्ठाशब्दयोर्नार्थभेदोस्ति। नचायतनशब्दःस्थानार्थइत्यु
क्तमिति वाच्यं तथापिप्रतिष्ठाशब्दस्यतदन्यार्थानुपलंभादित्यतआह ॥ स्थानमिति ॥ ७ ॥ इतिषडाचार्यब्राह्मणं ॥ १ ॥

---

भा० । अंगुष्टमात्रेपुरुपेकर्णिकाग्रस्थितेहरौ । प्रविशंतिसुपुप्तौतुप्रवुध्यंतेततस्तथा । सोयंत्रिरूपोभगवान्हृदयाख्यःप्रकीर्तितइतिच ।
स्थानमायतनंप्रोक्तंप्रतिष्टाधारकःपुमानितिच ॥ ७ ॥ इतिषडाचार्यब्राह्मणं ॥



478

अथखंडार्थः ॥ एवंविद्यापरीक्षानंतरंजनकोहवैदेहआसांचक्रेआसनंकृतवान् । सिंहासनमधिरूढइतियावत् । अथतदनंतरं याज्ञवल्क्योजनकसमीपमाववाज। तंयाज्ञवल्क्यं विधिवत्संपूज्यहोवाचजनकः । किमिति हेयाज्ञवल्क्य किमर्थमचारीःपर्यटनम कार्षीः किंपशूनिच्छन्नुताणुर्भगवान्तद्विषयानंताञ्निर्णयान्वक्तुंवेति । एवमुक्तोयाज्ञवल्क्योहेसम्राट्सार्वभौमउभयमेवपश्विच्छा एवंतवचनंचेत्युभयसपिसमचरणेनिमित्तमित्युवाच । उभयमेवनान्यदितिवा ॥ १ ॥ यद्यण्वंतान्वक्तुमागतस्तर्हिवक्तव्यमिति राज्ञोक्तेस्त्वयमन्येभ्योज्ञातादधिकंमुक्तिसाधनंवक्तुंतेतवकश्चिदाचार्योयदब्रवीत् तत्तावद्वयंशृणवामेत्याहयाज्ञवल्क्यः । एवमुक्तो जनकआह ॥ अब्रवीदिति ॥ मेमम शिलिनस्यापत्यंशैलिनिः जित्वानामतो ब्रह्मगुणपरिपूर्णविष्ण्वाख्यं वाग्वैव कृत्वाह्वाङ्नामकंवैप्रसिद्धमित्यब्रवीत् । शैलिनोपदिष्टंस्तोतुकामोयाज्ञवल्क्यस्तस्याप्तत्वप्रयोजकीभूतशुद्धित्रयमाह ॥ यथेति ॥ मातायस्यानुशासित्रीसमातृमान् पितायस्यानुशासकःसपितृमान् आचार्योयस्यानुशासकःसआचार्यवान् पुरुषोयथा स्वशिष्यायब्रूयात् शैलिनस्तुभ्यंवाग्वैब्रह्मेत्यब्रवीदितियत्तत्तथेत्यर्थः । वाग्वैब्रह्मेत्येतन्मुनिरेवोपपादयति ॥ अवदतइ ति ॥ अवदतोवाङ्नामकभगवद्रूपशून्यस्यकिंफलंस्यात् वचनक्रियायाएवासंभवेनाध्ययनादिनित्यकर्मानुष्ठानस्यैवासं भवात् । हियस्मादिति । तस्माद्वाग्ब्रह्मेतिसाधूक्तं । अनेनैवोपदेशेनकृतकृत्योस्मीतिनमंतव्यमितिभावेननृपंप्रतिमुनिःपृच्छति



उ० । जनकोहवैदेहआसांचक्रेऽथहयाज्ञवल्क्यआवव्राज तंहोवाचयाज्ञवल्क्यकिमर्थमचारीःपशूनिच्छन्नण्वंतानि त्युभयमेवसम्राळिति होवाच ॥ १ ॥ यत्तेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेजित्वाशैलिनोर्वाग्वैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छैलिनोब्रवीद्वाग्वै

॥ अब्रवीदिति ॥ सजित्वा तेतव तस्यवाङ्नामकस्यभगवतः आयतनंस्थानं प्रतिष्ठांप्रतिमां उपलक्षणमेतत् । वा
ङ्नामार्थं तुर्विशेषेणाब्रवीत्किमिति । एवमुक्तोजनकोनमेब्रवीदित्याह तंप्रतिमुनिराह हेसम्राट्एतत्जित्वोपदिष्टमुपास्य
स्यभगवतोवाङ्नामकत्वमेकपाद्वाइति । उपास्यस्यभगवतोहिआयतनंप्रतिमारहस्यंनामतदर्थश्चेतिचतुष्टयंमोक्षार्थंज्ञेयं । तत्र
जित्वारहस्यनाममात्रमुपदिष्टवानितितदुपदिष्टमेकदेशरूपमेवेत्यर्थः । एवमुक्तोराजाह ॥ सइति ॥ हेयाज्ञवल्क्यसर्वैसर्व
ब्राह्मणप्रश्नोत्तरदातात्वं नोऽस्माकं ब्रूहि । वाङ्नामकस्यभगवतआयतनादित्रयमितिशेषः । एवमुक्तोमुनिराह ॥ वागेवेति ॥
वागेवप्रसिद्धवागिंद्रियमेवायतनमधिष्ठानं आकाशआसमंतादीप्तत्वादाकाशनाम्नीरमा प्रतिष्ठाप्रतिमा । एनदेतत्प्रज्ञेत्युपासीत ।
राजापृच्छति ॥ काप्रज्ञतेति ॥ धर्मधर्मिणोरभेदाभिप्रायेणोत्तरमाह ॥ वागेवेति ॥ वाङ्नामकभगवद्रूपमेवेत्यर्थः । तस्यप्रज्ञता
मुपपादयति ॥ वाचेति ॥ वाचावैवाङ्नामकभगवद्रूपेणबंधुःप्रज्ञायते । कोवंधुरित्यतआह ॥ ऋग्वेदइति ॥ ऋग्वेदादीना
मिष्टसाधनाववोधकत्वाद्बंधुत्वं । विद्येत्यमिताक्षरंपंचरात्रमुच्यते श्लोकाइलिमिताक्षरंपंचरात्रं सूत्राणिब्रह्मसूत्रादीनि अनुव्या
ख्यानानिवेदव्याख्यानविस्तररूपाणिबृहत्तर्कादीनि व्याख्यानानिवेदव्याख्यानभूतब्रह्मतर्कादीनि इष्टंयजनं हुतंहोमः अशित

उ० । ब्रह्मेत्यवदतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीत्येकपाद्वाएतत्सम्राडिति सवैनोब्रूहियाज्ञवल्क्यवागेवायतनमाकाशःप्रतिष्ठा
प्रज्ञेत्येनदुपासीत काप्रज्ञतायाज्ञवल्क्यवागेवसम्राडितिहोवाच वाचावैसम्राड्बंधुःप्रज्ञायतऋग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणं
विद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानीष्टंहुतमाशितंपायितमयंचलोकःपरश्चलोकःसर्वाणिचभूतानिवाचैवसम्राट्प्रज्ञायंते

मन्नदानं पायितंपेयदानं अयंचलोकःपरश्चलोकःसर्वाणिभूतानिचवाचावैप्रज्ञायंते । उपसंहरति ॥ **वाग्वाइति** ॥ अतइति शेषः । यद्वाब्रह्मशब्दस्यान्यत्रापिकथंचिद्वृत्तेर्वाग्वैब्रह्मेत्यत्रवाङ्नामकत्वमन्यस्योच्यतइतिनभ्रमितव्यमित्याह ॥**वाग्वाइति**॥ उक्तप्रकारेणवाङ्नामकभगवदुपासकस्यफलमाह ॥ **नैनमिति** ॥ योदेवत्वयोग्योधिकारी एवमायतनादिचतुष्टयसाहित्येन एतत् वाङ्नामकभगवद्रूपं विद्वानुपास्ते एनमधिकारिणं वाक्वाङ्नामकंब्रह्म नजहाति सदेवान्देवत्वमप्येति । ततोदेवोभूत्वा स्वोत्तमदेवेषुसायुज्यंप्राप्य देवान्क्रीडादिगुणसंपन्न श्वेतद्वीपादिस्थितभगवद्रूपविशेषान्ब्रह्मणासहाप्येतिप्राप्नोति । तत्रमुक्तौ सर्वाणिभूतानितदवराणि एनमभिक्षरंतिएतस्मैसर्वान्भोगान्दुहंतीत्यर्थः । योदेवपदायोग्यएवंविद्वानेतदुपास्ते सदेवोभूत्वा देवलोकस्थोभूत्वादेवानप्येतिमुक्तौदेवेषुसायुज्यंप्राप्नोति । इतरत्समानं । अत्रदेवपदयोग्यस्यवागिंद्रियादिषुयुगपदुपासनं अन्यस्य तुक्रमेणेतियुक्तःफलभेदः । एवमुपदिष्टोराजास्वयोग्यगुरुदक्षिणांप्रतिजज्ञे ॥ **हस्त्यृषभमिति** ॥ हस्तिनायुक्तऋषभोहस्त्यृषभस्तंसहस्रंसहस्रसंख्याकं ददामीतिहोवाचजनकोवैदेहः। एवमुक्तःसयाज्ञवल्क्योहोवाचकिं । अननुशिष्यशिष्यस्योपदेष्टव्यं सर्वमनुपदिश्य नाहरेतगुरुदक्षिणांनगृह्णीयादितिमेमपिताऽमन्यत । अतोनाहंसमग्रमनुपदिश्यगृह्णामीतिभावः । एवमुत्तरखंडपंचकेप्यक्षरयोजना ॥ २ ॥ शुल्वायनस्यापत्यंशौल्वायनः । उदंकोनामतः ब्रह्मप्राणः प्रणयनात्प्राणनामकं वैप्रसिद्धमित्यत्र

---

उ० । वाग्वैसम्राट्परमंब्रह्मनैनंवाग्जहातिसर्वाण्येनंभूतान्यभिक्षरंति देवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहः सहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ २ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मउदंकःशौल्वायनः

वीत् । अप्राणतःप्राणनामकभगवद्रूपशून्यस्यकिंस्यात् । चेष्टादिसर्वप्रवृत्तिविलोपापत्तेः प्राणएवप्राणापानादिरूपोवायुरेवआ
यतनंस्थानं एत(न)त्प्राणनामकंब्रह्म प्रियमित्युपासीत । प्राणनामकस्यभगवतःप्रियत्वमुपपादयति ॥ प्राणस्यैवेति ॥ हेसम्राट्
प्राणस्यैवप्राणस्थस्यप्राणनामकस्यविष्णोरेव कामायसंप्रीत्यै भोजनंभवेत् । तादृशभोजनार्थमेवाज्ञोपिजनः प्राणस्यतन्नामक
विष्णोः कामायेच्छयैवायाज्यंयाजनायोग्यंशूद्रादिकमपि याजयति । अप्रतिगृह्यस्याप्रतिग्राह्यमपिप्रतिगृह्णाति यस्मात्प्रतिग्रहो
नग्राह्यस्तस्यसकाशादितिवा । चौर्यंचकरोति तदर्थंयांदिशमेति तत्रवधाशंकंवधविषयाशंकाभवतीत्यर्थः । यद्वायांदिशमेति
तत्रवधाशंकंयथाभवति तथातांदिशमेतीत्यर्थः । एनमुपासकं प्राणःप्राणस्थःप्राणनामकोविष्णुर्नजहाति ॥ २ ॥ बर्कुर्नामतः
वृष्णस्यापत्यंवार्ष्णः ब्रह्म चक्षुःसर्वदर्शनाच्चक्षुर्नामकंवै । अपश्यतश्चक्षुर्नामकंभगवद्रूपशून्यस्य किंस्यात् । विश्वनामकस्यतस्य

---

उ० । प्राणोवैब्रह्मेति यथासातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छौल्वायनोब्रवीत्प्राणोवैब्रह्मेत्यप्राणतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनं
प्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडिति सवैनोब्रूहियाज्ञवल्क्यप्राणएवायतनमाकाशःप्रतिष्ठाप्रियमित्येनदुपासीत काप्रियतायाज्ञवल्क्यप्रा
णएवसम्राडितिहोवाच प्राणस्यैवसम्राट्कामायाऽयाज्यंयाजयत्यप्रतिगृह्यस्यप्रतिगृह्णात्यपितत्रवधाशंकंभवतियांदिशमेतिप्राणस्यैवसम्राट्कामाय
प्राणोवैसम्राट्परमंब्रह्मनैनंप्राणोजहातिसर्वाण्येनंभूतान्यभिक्षरंति देवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाच
जनकोवैदेहः सहोवाचयाज्ञवल्क्यः पितामेमन्यतनाननुशिष्यहरेतेति ॥ ३ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेव(र्कु)र्कुर्वार्ष्णश्चक्षुर्वै
ब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातद्वार्ष्णोब्रवीच्चक्षुर्वैब्रह्मेत्यपश्यतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदिति

जाग्रद्दर्शनमात्रहेतुत्वेनतदभावेजाग्रद्दर्शनमात्राभावापत्तेरितिभावः । चक्षुरेवचक्षुरिंद्रियमेव । आयतनमवस्थानं । चक्षुःस्थस्यचक्षुर्नामकस्यविश्वस्यसत्यत्वमुपपादयति ॥ चक्षुषेति ॥ चक्षुषाचक्षुःस्थेनचक्षुर्नामकेनविश्वाख्यविष्णुरूपेणतत्प्रेरणयेतियावत् । पश्यंतंपुरुषंप्रत्याहुरन्येपुरुषाः । त्वंतत्ररूपादिकमद्राक्षीरिति । सपश्यन्नाह ॥ अद्राक्षमिति ॥ पुनर्दृष्टंचेत्तद्वस्तुसत्यंयथास्थितंभवति । श्रौत्रज्ञानाद्युपलक्षणमेतत् । एवमन्वयउक्तः । चक्षुस्थविश्वाख्यविष्णुरूपस्यकंठस्थानादौगमनेजाग्रद्दर्शनंनभवतीति व्यतिरेकोपिद्रष्टव्यः । यतएवंचक्षुर्नामकभगवतोयथार्थज्ञानहेतुत्वंतत्तस्माच्चक्षुस्थंब्रह्मसत्यंभवतीत्यर्थः । एनमुपासकं चक्षुस्थं चक्षुर्नामकंब्रह्म नजहातीत्यर्थः ॥ ४ ॥ गर्दभीगर्दभदेशीयः विपीतोनामतः भरद्वाजस्यापत्यंभारद्वाजः । ब्रह्म श्रोत्रंश्रवणाच्छ्रोत्रनामकंवा इत्यब्रवीत् । अशृण्वतःश्रोत्रनामकभगवच्छून्यस्य किं स्यात् । सच्छास्त्रश्रवणाद्यसंभवात् श्रोत्रमेवश्रोत्रेंद्रियमेवायतनं ।

---

उ० । एकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यचक्षुरेवायतनमाकाशःप्रतिष्टासत्यमित्येनदुपासीत कासत्यतायाज्ञवल्क्यचक्षुरेवसम्राडितिहोवाच चक्षुषावैसम्राट्पश्यंतमाहुरद्राक्षीरितिसआहाद्राक्षमितितत्सत्यंभवतिचक्षुर्वैसम्राट्परमंब्रह्मनैनंचक्षुर्जहाति सर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोहवैदेहः सहोवाचयाज्ञवल्क्यःपितामेऽमन्यतनाननुशिष्यहरेतेति ॥ ४ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेगर्दभीविपीतोभारद्वाजःश्रोत्रंवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातद्भारद्वाजोब्रवीच्छ्रोत्रंवैब्रह्मे त्यशृण्वतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडिति सवैनोब्रूहियाज्ञवल्क्यश्रोत्रमेवायतनमाकाशःप्रतिष्टाऽनंतइत्येनदुपासीत कानंततायाज्ञवल्क्यदिशएवसम्राडितिहोवाच

483

दिशएवचक्षुस्थितोदिङ्नामकःविष्णुरेवेत्यर्थः। दिग्गतस्यविष्णोरनंतत्वमुपपादयति॥ तस्माद्वाइति॥ हेसम्राट् हियस्मादिशो ऽनंताःदिङ्नामादिक्षुस्थितोविष्णुःसर्वव्यापी तस्मादेवयःकोपियांकांचनदिशंतन्नामकभगवदधिष्ठितांदिशंप्रतिगच्छतिअस्यादि शोंतमवसानंनैवगच्छतीत्यर्थः।यदधिष्ठितदिशामेवानंतत्वं सोनंतइतिकिमुवक्तव्यमित्यर्थः। नन्वेवंदिङ्नामकस्यदिक्स्थस्यविष्णो रनंतत्वेपिश्रोत्रांतर्गतस्यविष्णोरनंतत्वेनोपासनंकथंस्यादित्यतआह ॥ दिशोवाइति ॥ दिक्स्थंविष्णुरूपमेव श्रोत्रंश्रोत्रांतर्गतमि त्यर्थः । एनमुपासकं श्रोत्रस्थंश्रोत्रनामकंब्रह्मनजहाति ॥ ५ ॥ जबालायाअपत्यंजाबालः सत्यकामोनामतः मनोमंतृत्वतोमनो नामकंवैब्रह्मेत्यब्रवीत्। अमनसोमनोनामकभगवद्रहितस्य किं स्यात्। मननादेरसंभवात् मनएवप्रसिद्धमनोरूपेंद्रियमेवायतनं । एतन्मनोनामकं ब्रह्मानंदआनंदहेतुरित्युपासीत । आनंदताआनंदहेतुता मनोगतस्यमनोनामकस्यविष्णोरानंदहेतुत्वमुपपादय

---

उ० । तस्माद्वैसम्राडपियांकांचदिशंगच्छतिनैवास्याअंतंगच्छत्यनंता हिदिशःदिशोवैसम्राट्श्रोत्रꣳश्रोत्रंवैसम्राट्परमंब्रह्मनैनꣳश्रोत्रंजहाति सर्वाण्येनंभूतान्यभिक्षरंति देवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोहवैदेहः सहोवाचयाज्ञवल्क्यः पितामेमन्यतनाननुशिष्यहरेतेति ॥ ५ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेसत्यकामोजाबालोमनोवैब्रह्मेति यथामातृमान्पितृमाना चार्यवान्ब्रूयात्तथातज्जाबालोब्रवीन्मनोवैब्रह्मे त्यमनसोहिकिꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहि याज्ञवल्क्यमनएवायतनमाकाशःप्रतिष्ठाऽऽनंदइत्येनदुपासीत कानंदतायाज्ञवल्क्यमनएवसम्राडितिहोवाच

ति ॥ **मनसेति** ॥ मनसामनोनामकविष्णवधिष्ठितेनमनोरूपेंद्रियेणैव पुमान्स्त्रियंप्रत्यभिहार्यते नीयतेह। तस्यांस्त्रियांप्रतिरूपोऽनुरूपःपुत्रोजायते। सजातःपुत्रः आनंदःआनंदहेतुः। एवंयदधिष्ठितमनोव्यापारेणजातःपुत्रःसुखहेतुः सआनंदरूपःपरमात्मासुखहेतुरितिकिमुवक्तव्यमित्यर्थः। एनमुपासकं मनोनामकंमनस्थंब्रह्म नजहातीत्यर्थः ॥६॥ विदग्धोनामतः शाकलस्यापत्यंशाकल्यः हृदयंहृदयनामकं वैब्रह्मेत्यब्रवीत् अहृदयस्यहृदयनामकभगवद्रूपशून्यस्य किंस्यात्। जीवस्यसुख्याद्यसंभवादितिभावः।हृदयमेवप्रसिद्धंहृदयमेव। आयतनंस्थितिःस्थितिहेतुः। स्थितितास्थितिहेतुता। उत्तरमाह॥ **हृदयमेवेति** ॥ हृदयमेवहृदयगतंहृदयनामकंहृदये सर्वत्रव्याप्तंप्रादेशपरिमितंहृत्कर्णिकामूलगतं अंगुष्ठाग्रप्रमाणकंहृत्कर्णिकाग्रगतमंगुष्ठमात्रपरिमितंचेतिभगवद्रूपत्रयमेवस्थितिहेतुरित्यर्थः। आद्यस्यहृदयनामकस्यस्थितिहेतुत्वमुपपादयति॥ **हृदयंवाइति** ॥ हेसम्राट्हृदयंवै हृद्गतंहृदयनामकंहृदयेसर्वशोव्याप्तं प्रादेशपरिमितंभगवद्रूपं सर्वेषांभूतानामायतनंस्थानंवैप्रसिद्धमित्यर्थः। द्वितीयतृतीयरूपयोःस्थितिहेतुत्वमुपपादयति ॥ **हृदयंवा**

---

मनसावैसम्राट्स्त्रियमभिहार्यतेतस्यांप्रतिरूपःपुत्रोजायतेसआनंदोमनोवैसम्राट्परमंब्रह्मनैनंमनोजहातिसर्वाण्येनंभूतान्यभिक्षरंति देवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाच याज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ६ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेविदग्धःशाकल्योहृदयंवैब्रह्मेति यथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छाकल्योब्रवीद्धृदयंवैब्रह्मे त्यहृदयस्यकिꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यहृदयमेवायतनमाकाशःप्रतिष्ठास्थितिरित्येनदुपासीतकास्थिततायाज्ञवल्क्यहृदयमेवसम्राडितिहोवाच हृदयंवैसम्राट्सर्वेषांभूतानामायतनꣳहृदयंवैसम्राट्सर्वेषांभूतानांप्रतिष्ठा

इति ॥ हृदयंहृदयनामकंहृद्गतंकर्णिकामूलगतंहृत्कर्णिकाग्रगतंविष्णुरूपं सर्वेषांभूतानां प्रतिष्ठाधारकं सर्वदासुप्तौचैवेतिशेषः । तदुपपादयति । हृदयेह्येवेति ॥ हृदयनामकेहृत्कर्णिकामूलगतेविष्णुरूपेएव सर्वाणिभूतानिसदाप्रतिष्ठितानिभवंतीत्यर्थः । तथा हृदयनामकेहृत्कर्णिकाग्रगतेविष्णुरूपेसर्वाणिभूतानिविशेषतोपिसुप्तौप्रतिष्ठितानिभवंतीत्यर्थः । एन(त)मुपासकंहृदयस्थंहृदयनामकं भगवद्रूपं नजहातीत्यर्थः ॥ ७ ॥ षडाचार्यब्राह्मणं ॥ १ ॥ ननुपूर्वमुपसत्तिमकृत्वेदानीमुपसत्तिकरणेकिंनिमित्तमित्यतस्तत्र निमित्तप्रदर्शनपूर्वकंजनकोहवैदेहःकूर्चादुपावसर्पन्नुवाचेतिवाक्यमर्थाप्रतीतेरपेक्षिताध्याहारेणव्याचष्टे ॥ स्वयोग्यमिति ॥ ज्ञानंज्ञानसाधनं ज्ञेयंवा । इंद्रियेषुभगवदुपास्तिस्तुनासाधारण्येनस्वयोग्या युपगदुपास्तौदेवानां क्रमेणोपास्तौमनुष्याणांचाधिकारादितिभावः । कूर्चादित्यस्यार्थःसिंहासनादिति । अवरुह्येतिशेषोक्तिः । उपावसर्पन्नित्यस्यार्थःउपसदनंकृत्वेति । ननुस्वयोग्योपदेशंश्रोतुमुपसदनंकृतवंतंराजानंप्रतियाज्ञवल्क्येनत्वदुपास्यंकिंजानासीतिप्रष्टव्येइतोविमुच्यमानःक्वगमिष्यसीतिमुक्तौप्राप्यप्रश्नोसंगतइत्यतस्तदभिप्रायमाह ॥ यत्स्वात्मनेति ॥ पृच्छति इतोविमुच्यमानइत्यादिनेतिशेषः । ननुजनकस्यदेवत्वाभावात्क

---

उप० । हृदयेह्येवसम्राट्सर्वाणिभूतानिप्रतिष्ठितानिभवंतिहृदयंवैसम्राट्परमंब्रह्मनैनंहृदयंजहातिसर्वाण्येनंभूतान्यभिक्षरंति देवोभूत्वा देवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवैदेहः सहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ७ ॥ इतिषडाचार्यब्राह्मणं ॥ १ ॥

भा० । स्वयोग्यंज्ञानंश्रोतुंसिंहासनादवरुह्योपसदनंकृत्वोवाच । यत्स्वात्मनाप्राप्यंमुक्तौतदुपास्यैवमुक्तिर्भवतीत्यतःप्राप्यंपृच्छति ।



486

थंतस्मिन्वृंदारकशब्दप्रयोगइत्यतआह ॥ वृंदैरिति ॥ वृंदैःभृत्यादिसमूहैः अर्यतेप्राप्यतइतिवृंदारकइत्यर्थः ॥ १ ॥ ननुजनकस्यमुक्तौप्राप्यंवक्ष्यामीतिप्रतिज्ञायइंधोहवैनामैषयोयंदक्षिणेक्षन्पुरुषइतिदक्षिणाक्षिस्थइंद्रनामाकथंप्राप्यत्वेनोच्यते । अंतरुपास्तियोग्यानांराज्ञांस्वहृदिस्थस्यैवोपास्यस्यमुक्तौप्राप्यत्वादित्यतःसत्यमित्याह ॥ **राज्ञामिति** ॥ इंद्रइत्याचक्षतइत्युक्त्यनुरोधादिंद्रोनामेत्युक्तं । प्रमाणांतरे इंद्रस्थस्ययमस्थस्यवाभगवद्रूपस्यमुक्तौराजप्राप्यत्वोक्तेस्तदनुरोधादाह ॥ **सइंद्रेचेति** ॥ तिष्ठतीतिशेषः । तस्मान्मुक्तौप्राप्यत्वात्प्राप्यस्यैवोपास्यत्वात् । एषास्यपत्नीविराडितिवाक्यंव्याचष्टे ॥ **विराण्णामेति** ॥ अस्यपत्नीत्यस्यार्थःतदाश्रयेति । तयोरेषसंस्तावइतिवाक्यंव्याचष्टे ॥ **तयोरिति** ॥ श्रुतौप्राणेनक्रियतइतिशेषोक्तिः । यएषोंतर्हृदयआकाशइत्याकाशशब्दस्य काशनात्सर्वजीवानामित्यर्थंवक्तुंतस्यासंभावनाशंकामादौपरिहरति ॥ **कर्णाविति** ॥ ज्ञेयासर्वजीवैःसंस्तावइतिसमित्युपसर्गतात्पर्यमाह ॥ **सर्ववेदात्मिकेति** ॥ एवमसंभावनाशंकांपरिहृत्याकाशशब्दार्थमाह ॥ **काशनादिति** ॥ इत्युच्यतइतिशेषः । यदिराज्ञांहृदयसंस्थइंद्रनामामुक्तौराजभिःप्राप्यउपास्यश्च तर्हिश्रुतौदक्षिणेक्षन्पुरुषइतिदक्षिणाक्षिस्थस्येंद्रनाम्नःकथंप्राप्यत्वमुच्यतइत्यतआह ॥ **जाग्रतामिति** ॥ सराजहृदयसंस्थइंद्रः ॥ २ ॥ तस्यप्राचीदिक्प्रांचःप्राणाइत्यादिवा 

---

भा० । वृंदैःप्राप्यतमत्वात्तुवृंदारकइतिस्मृतइतिचपाद्मे ॥ १ ॥ राज्ञांहृदयसंस्थोयइंद्रोनामजनार्दनः । सइंद्रेचयमेचैवसंप्राप्योमुक्तराजभिः । तस्मात्तेषामुपास्यःसविराण्णामातदाश्रया । श्रीः ॥ २ ॥ तयोःस्तुतिरेषाहिप्राणेनक्रियतेसदा । कर्णौपिधाययाज्ञेयासर्ववेदात्मिकाहिसा । काशनात्सर्वजीवानामाकाशइतिसास्तुतिः । जाग्रतांसर्वजीवानांसविष्णुर्दक्षिणाक्षिगः ॥ ३ ॥

क्थंप्राच्यादिदिशांतत्तत्प्राणानांचाभेदउच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ तस्येति ॥ सभार्याविंद्राग्नीइत्यनेनप्रांचःप्राणा
इतिबहुवचनोपपत्तिर्दर्शिता । अग्निराक्षसवाय्वीशानाःकोणपाः। सभार्यावित्यस्योत्तरत्रापिसंबंधः। तेनतत्रापिबहुवचनोपपत्तिः॥
सर्वादिशःसर्वेप्राणाइतिवाक्यंव्याचष्टे ॥ सभार्याइति ॥ चशब्दोपिशब्दार्थः । सर्वेपींद्राद्यास्सभार्याः एकैकस्यांदिशिचत्वार
एवेतिसंबंधः । यद्येवंतर्हिकथंश्रुतौप्राणशब्दप्रयोगइत्यतआह ॥ नेतृत्वादिति ॥ प्राणशब्दस्यतेषुयोगमुक्त्वारूढिमप्याह
॥ इंद्रियेति ॥ इंद्रियाणांचप्राणशब्दवाच्यत्वादितिभावः । योयदभिमानीसतच्छब्दवाच्यइत्येतत्प्रसिद्धमिति द्योतनायाद्यएव
शब्दः । प्राणाइत्येवशब्दिताःप्राणशब्दरूढिविषयाएवेत्यर्थः । अभयंत्वागच्छताद्याज्ञवल्क्ययोनोभगवन्नभयंवेदयसइत्यस्यैक
वाक्यतासिद्धयेयत्तच्छब्दाध्याहारेणवाक्यंयोजयति॥ त्वत्प्रसादादिति॥ नन्वात्मारामस्यमुनेरभयनामाभगवांस्तृप्तिहेतुरिति
सिद्धमेव तत्किमनेनोच्यतइत्यतस्तत्तात्पर्यमाह ॥ नान्यदिति ॥ अत्रदृष्टांतमाह ॥ सइति ॥ इतिवचनस्ययथानित्यतृप्तस्य
भगवतःप्रत्युपकाराभावएवतात्पर्यंतथाऽत्रापीत्यर्थः । इंधइत्यस्यस्थूलार्थभोक्तृत्वेनसदास्फुरणादितिव्याख्यानमसत् । तन्मतेभो
क्तुर्विशिष्टस्यप्राप्यत्वायोगात्प्राप्यस्यचभोक्तृत्वाभावादितिभावेनेंधशब्दार्थमाह ॥ इंधइति ॥ ननुजीवभोग्यस्येशभोग्यत्वाभा

भा० । तस्यपूर्वदिशींद्राग्नीसभार्यौसंप्रतिष्ठितौ । यमराक्षसौदक्षिणस्यांवरुणोवायुरेवच । पश्चिमस्यामुत्तरस्यांसोमेशानौप्रतिष्ठितौ। ब्रह्मा
प्रधानवायुश्चतथोर्ध्वायांदिशिस्थितौ । अधरायांशेषकामौसभार्याःसर्वएवच । एकैकस्यांहिचत्वारोनेतृत्वात्प्राणनामकाः । इंद्रियाभिमतेश्चैवप्राणा
इत्येवशब्दिताः । त्वत्प्रसादाद्यदभयमस्माकंप्राप्तंतदेवतवतृप्तयेस्तु नान्यद्वयंप्रत्युपकर्तुंशक्नुमइत्यर्थः । सभगवान्स्वकृतेनतुष्येदितिवत्। इंधोदीप्तः। ॥ २४४ ॥

वादीशभोग्यस्यचजीवभोग्यत्वाभावेनेशस्यप्रविविक्ताहारतरत्वमेववक्तव्यंअतःकथमिवशब्दप्रयोगइत्यतआह ॥ जीवभोगस्येति ॥ भोगस्यभोग्यस्यतद्भोग्यभुगित्यर्थः। गंधादिषुयोजीवेंद्रियागोचरःसारभागस्तस्यापिपरमात्मभोग्यत्वादितिभावः। यद्वा श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच । अधिष्ठायमनश्चायंविषयानुपसेवत इतीशस्यजीवभोग्यविषयभोगोक्तेःकथंशरीरात्प्रविविक्ताहारतरत्वमित्यतआह ॥ जीवेति ॥ यद्यपिजीवभोग्यस्येशोभोक्ता तथापिजीवस्तद्भोग्यभोक्तानैवभवति गंधादिस्थजीवेंद्रियागोचरसारभागस्यापीशभोग्यत्वात् । अतोसौविविक्तभुगित्युच्यतइत्यर्थः । अवतारेषुस्थूलमपिभुंक्तइतीवशब्दः । अनेनप्रविविक्ताहारतरोऽयंजीवएवेतिपरास्तं । शारीरादात्मनइतिभेदाभिधानात् । नहिजीवोजीवादेवविलक्षणाहारइतियुज्यते । ननुशारीराज्जागरावस्थाज्जीवात्स्वप्नसुषुप्त्यवस्थःसएवप्रविविक्ताहारतरइत्यवस्थाभेदोपाधिकंजीवस्यभेदमंगीकृत्यव्याख्यास्यामीतिचेत् न । शारीरस्तुत्रिधाभिन्नोजाग्रदादिष्ववस्थितेरितिवचनात्त्र्यवस्थस्यापिशारीरशब्देनगृहीतत्वात्ततःस्वप्नसुषुप्त्यवस्थस्यभेदायोगात्। नन्वस्तुत्र्यवस्थोपिशारीरः तथाप्यस्मादितिविशेषणेनात्रशारीरादितिजागरावस्थोजीवोगृह्यते तस्माच्चस्वप्नाद्यवस्थस्यभेदोक्तिरुक्तविधयासंभवति। भवत्पक्षेशारीरादितिजीवेसिद्धेअस्मादितिविशेषणंव्यर्थंस्यादितिचेन्न । एतद्विशेषणसार्थक्यायेश्वरंपरित्यज्य जीवस्यग्राह्यत्वात्। शारीरौताबुभौज्ञेयौजीवश्चेश्वरसंज्ञितइतिईश्वरस्यापिशारीरत्ववचनाच्छारीरादित्येवोक्तावीश्वरस्यापिप्राप्तावीश्वरादेवेश्वरस्यभेदानुपपत्तेस्तद्व्यावृत्त्यर्थंजीवमात्रपरिग्रहायविशेषणमितिसार्थक्योपपत्तेः । नन्वेवंपक्षद्वयेप्युपपत्तावीश्वरएवात्रो

भा० । जीवभोगस्यभोक्तेशोजीवस्तद्भोगभुङ्नतु ।

च्यते नजीवइतिकुतोविनिगमनमितिचेत् न। भेदश्रुतेःस्वाभाविकभेदरूपेगत्यंतरेसंभवतिपुरुषभेदएवार्थतयाग्राह्यः नत्ववस्थाभेदः मुख्यामुख्ययोःमुख्येसंप्रत्ययात्। अतोयुक्तंविनिगमनं। द्रष्टव्यस्थलेचायंभेदः आहच प्रविविक्तभुग्यतोह्यस्माच्छारीरात्पुरुषोत्तम इति ॥४॥ ततश्चायंखंडार्थः ॥ जनकोहवैदेहः स्वयोग्यंज्ञानंश्रोतुं कूर्चात्सिंहासनादवरुह्योपावसर्पन्गुरूपसदनंकुर्वन्कृत्वेति यावत् उवाच । हेयाज्ञवल्क्य तेनमोस्तु मामां अनुशाधि मोक्षानुकूल्येनशिक्षय। एवमुक्तोयाज्ञवल्क्यइतरसाधनसामग्रीसंपत्ति मतोपियत्स्वात्मनामुक्तोप्राप्यंतदुपासनयैवमुक्तिर्भवतीतिभावेनेतरसामग्र्यनुवादपूर्वकंप्राप्यंपृच्छति ॥ सहोवाचेत्यादिना ॥ हेसम्राट् यथाकश्चित्त्वादृशः सम्राड्राजा महांतमध्वानंमार्गं स्थलेजलेवैष्यन्यथाक्रमंरथंनावंवासमाददीत । एवंत्वमेताभिः पूर्वोक्ताभिः वाग्वैब्रह्मेत्यादिभि रुपनिषद्भिः समाहितात्मास्वस्थमना असि। अनेनांतःकरणशुद्धिरुक्ता। वैराग्यंसूचयन्विशेषणांत रमाह ॥ एवमिति ॥ एवंदृश्यमानप्रकारेण वृंदारकःभृत्यादिवृंदैःप्राप्यतमः आढ्यःधनीसन्नपि अधीतवेदः उक्तोपनिषत्कःव्या ख्यातोपनिषत्कस्त्वमितःसंसाराद्विमुच्यमानःक्वगमिष्यसीति । अहंयत्रगमिष्यामीतितत्प्रमेयंनवेदेतिराज्ञोक्तेमुनिराह ॥ अथ

---

भा० । विविक्तभुगिवातोसौभगवान्पुरुषोत्तमइतिपाद्मे ॥ ४ ॥ इतिकूर्चब्राह्मणं ॥ २ ॥

उ० । जनकोहवैदेहः कूर्चादुपावसर्पन्नुवाचनमस्तेस्तुयाज्ञवल्क्यानुमाशाधीति सहोवाचयथावैसम्राण्महांतमध्वानमेष्यन्रथंवानावंवासमा ददीतैवमेवैताभिरुपनिषद्भिःसमाहितात्मास्येवंवृंदारकआढ्यःसन्नधीतवेदउक्तोपनिषत्कइतोविमुच्यमानःक्वगमिष्यसीति नाहंतद्भगवन्वेदयत्रग मिष्यामीत्यथवैतेऽहंतद्वक्ष्यामियत्रगमिष्यसीतिसहोवाच

ति ॥ त्वंयत्रगमिष्यसितत्प्राप्यमहंतेतववक्ष्यामीति । एवमुक्तःसराजोवाच ब्रवीतुभगवानिति ॥ १ ॥ मुनिरुपदिशति ॥ इंधइ
ति ॥ योयंप्रसिद्धः सर्वेषांदक्षिणेक्षन्दक्षिणेक्षिणि विद्यमानःपुरुषो दीप्तत्वादिंधोवैनाम एषमुक्तौराजभिःप्राप्यः । अतःसएव
तद्धृदिस्थःउपास्यः तंराजहृदयांतस्थमेनं(त)दक्षिणाक्षिस्थमिंधमिंधनामानंसंतमिंद्रइतिपरोक्षेणाप्रसिद्धेननाम्नाऽऽचक्षतेदेवाः ।
कुतएवमाचक्षतइत्यतआह ॥ परोक्षप्रियाइति ॥ हियस्माद्देवाःपरोक्षप्रियाःअप्रसिद्धनाम्नाभगवदुपदेशप्रियाः प्रत्यक्षद्विषः
प्रत्यक्षनाम्नाभगवदुपदेशद्वेषिणः प्रत्यक्षोपदेशेऽसुराणामपिसम्यग्दर्शनापत्तेः । असम्यग्दर्शनेनतत्पतनस्यैवदेवानांप्रियत्वात् ।
क्वचिद्योग्येष्वपरोक्षोपदेशेनापिप्रीतिमत्त्वात्परोक्षप्रियाइवेतीवशब्दः ॥ २ ॥ दक्षिणाक्षिस्थभगवद्रूपमहिमानमाह ॥ अथेति ॥
अथशब्दोमाहात्म्योक्तिप्रारंभार्थः । एतद्दक्षिणाक्षिस्थितमेवपुरुषरूपं वामेक्षिणिस्थितं एषाप्रसिद्धा विराण्णाम्नीश्रीः । अस्याक्षि
स्थपरमात्मनः पत्नी यद्वायदेतत्प्रसिद्धंवामेक्षिणिविद्यमानंपुरुषरूपंपुरुषप्रतिमा एषाविराट्विराण्णाम्नीश्रीः अस्यदक्षिणाक्षिस्थ
परमात्मनः पत्नी । एषः तयोरिंद्रविराजोः संस्तावःसर्ववेदात्मिकास्तुतिः । कः योंतर्हृदयेप्राणेनक्रियमाणआकाशआसम्यक्स
र्वजीवानांकाशमानः । कर्णपिधानेघोषात्मकतयाश्रूयमाणएषइत्यर्थः । अथयएषप्रसिद्धोंतर्हृदयेंतःस्थितो लोहितपिंडोहृत्कमल

उप० । ब्रवीतुभगवानिति ॥ १ ॥ इंधोहवैनामैषयोयंदक्षिणेक्षन्पुरुषस्तंवाएतमिंधꣳसंतमिंद्रइत्याचक्षतेपरोक्षेणैवपरोक्षप्रियाइवहिदेवाः
प्रत्यक्षद्विषः ॥ २ ॥ अथैतद्वामेक्षिणिपुरुषरूपमेषास्यपत्नीविराट्तयोरेषसꣳस्तावोयएषोंतर्हृदयआकाशोऽथैनयोरेतदन्नंयएषोंतर्हृदयेलोहितपिंडो
थैनयोरेतत्प्रावरणंयदेतदंतर्हृदयेजालकमिवाथैनयोरेषासृतिःसंचरणीयैषाहृदयादूर्ध्वानाड्युच्चरति

रूपएतदेनयोःपूर्वोक्तयोरन्नं तत्रस्थित्वाताभ्यामन्नादनात् । अथयदेतत्प्रसिद्धंहृदयेंतर्जालकमिवस्रगिववर्तमानं वपारूपमेतदे नयोःपूर्वोक्तयोःप्रावरणं । अथयैषाप्रसिद्धा हृदयादूर्ध्वोपरिवर्तमाना नाडीउच्चरतिमस्तकपर्यंतंउद्गच्छति एषात(एन)योःपूर्वोक्त योःसंचरणीसंचरणहेतुभूतासृतिर्मार्गः । हृत्कमललोहितपिंडस्थितःकिंभुङ्क्तेइत्यतःतस्याहारंवक्तुमाह ॥ यथेति ॥ यथाकेशः सहस्रधाभिन्नः एवमेताःप्रसिद्धाहितानामजीवस्यहितकारित्वात्परमात्मस्वरूपविशेषसन्निहितत्वाद्वा(सन्निधियुतत्वाद्वा)हिताना मनाड्यः सहस्रधाभिन्नाः अस्यजीवस्य हृदयेंतःप्रतिष्ठिताभवंति । एताभिःहितानामकनाडीभि रेतत्जीवभुक्तेन्नेजीवेंद्रियागो चरगंधादिसारभूतं आस्रवत्क्रमेणस्यंदमानं आमास्रवतिआगच्छति । तद्भुंक्तेपरमात्मेत्यर्थः । तस्मात्तददनात् एषपरमात्मा अ स्माच्छारीरादात्मनोजीवात् प्रविविक्ताहारतरअतिशयेनविलक्षणभोगएवभवति । अवतारेषुस्थूलमपिभुंक्तइतीवशब्दः । जीव भोग्यस्येशभोग्यत्वेपिईशभोग्यस्यजीवभोग्यत्वाभावाद्वाइवशब्दः ॥ २ ॥ तस्यपरमात्मनःसर्वत्रावस्थितान्सेवकानाह ॥ तस्ये त्यादिना ॥ प्राञ्चःप्राचीदिगवस्थिताःप्राणा नेतृत्वात्प्राणनामकाइंद्रियाभिमानिनोवा । इंद्राग्नीतद्भार्येचेतिचत्वारः । तस्यपर मात्मनः प्राचीदिक्प्राच्यांदिशिप्रतिष्ठिताः । अत्रदिक्चतुष्टयविवक्षयाग्नेय्याअपिदिशःप्राचीदिगंतर्भावेणसभार्यस्याग्नेःप्राक्त्वो क्तिः । एवमुत्तरत्रापि । दक्षिणाःप्राणाःदक्षिणदिगवस्थायमनिर्ऋतीतद्भार्येचेतिचत्वारस्तस्यदक्षिणादिक्स्थाः । प्रत्यंचःप्रतीची

उ० । यथाकेशःसहस्रधाभिन्नएवमस्यैताहितानामनाड्योंतर्हृदयेप्रतिष्ठिताभवंत्येताभिर्वाएतदास्रवदास्रवतितस्मादेषप्रविविक्ताहारतरइ वैवभवत्यस्माच्छारीरादात्मनः ॥ ३ ॥ तस्यप्राचीदिक्प्रांचःप्राणादक्षिणादिक्दक्षिणाःप्राणाःप्रतीचीदिक्प्रत्यंचःप्राणाः

दिक्स्थाःप्राणा वरुणवायूतद्भार्येचेतिचत्वारस्तस्यप्रतीचीदिक्स्थाः । उदंचःप्राणाःउत्तरदिक्स्थाःसोमेशानौतद्भार्येचेतिचत्वारः । तस्यउदीचीदिक्स्थाः । ऊर्ध्वाऊर्ध्वदिगवस्थिताःप्राणा श्चतुर्मुखप्रधानवायूतद्भार्येचेतिचत्वारस्तस्योर्ध्वदिगवस्थिताः । अवांचःअधोदिगवस्थिताः प्राणाःशेषकामौतद्भार्येचेतिचत्वारस्तस्यावाचीदिगवस्थिताः । एवंसर्वेप्राणाःसभार्याइंद्राद्याःसर्वादिशः परमात्मनःपरितःसर्वासुदिक्षुप्रतिष्ठिताः । सएषइत्याद्युक्तार्थं । हेजनकत्वमभयंमुक्तस्यसर्वदाऽभयप्रदं अथाभयंभवेद्ब्रह्मतस्यमुक्तस्यसर्वदेतिवचनात् । प्राप्तोसीतिहोवाचयाज्ञवल्क्यः । जनकस्यनिश्चितमोक्षत्वात्प्राप्तोसीत्युक्तं । एष्यत्तुनिश्चितंयत्स्यादतीतत्वेनभण्यतइतिवचनात् । सजनकोहवैदेहउवाच हेभगवन्याज्ञवल्क्ययस्त्वंप्रसन्नःसन्नःअस्मान्यदभयंपरमात्मरूपंवेदयसेप्रापयसि तंत्वांतदेवाभयंगच्छतात्ततत्वतृप्तिहेतुरस्तु नान्यद्वयंप्रत्युपकर्तुंशक्नुमइतियावत् । तत्तुभ्यंनमोस्तु । अन्यत्किंदेयं इमेमदीयत्वेनप्रसिद्धाविदेहाविदेहदेशास्तवयथेष्टंभोगायसंतु । अयंत्वयोपदिष्टोहं तवदासोस्मि । मांराज्यंचयथेष्टंप्रतिपद्यस्वेत्यर्थः ॥ ४ ॥ कूर्चब्राह्मणं ॥ २ ॥ जनकंहवैदेहमित्यादेःयाज्ञवल्क्योयदाजनकंप्रतिगत्वाकामप्रश्नवरंददौतदैवजनकःपप्रच्छेतियथा

---

उ० । उदीचीदिगुदंचःप्राणाऊर्ध्वादिगुर्ध्वाःप्राणाअवाचीदिगवांचःप्राणाः सर्वादिशःसर्वेप्राणाःसएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेअसंगोनहिसज्यतेऽसितोनव्यथतेनरिष्यइत्यभयंवैजनकप्राप्तोसीतिहोवाचयाज्ञवल्क्यःसहोवाचजनकोहवैदेहोऽभयं त्वागच्छताद्याज्ञवल्क्ययोनोभगवान्नभयंवेदयसेनमस्तेस्त्विमेविदेहाअयमहमस्मि ॥ ४ ॥ कूर्चब्राह्मणं ॥ २ ॥

श्रुतव्याख्यानंप्रमाणविरुद्धमितिभावेनतद्वाक्यतात्पर्यंप्रमाणेनाह ॥ याज्ञवल्क्यइति ॥ समेनेनवदिष्यइत्यस्यार्थःसंवादका
मुक्इति कामप्रश्नवरंदत्वास्वयमेवकिमितिवैदेहनगरंप्रायादित्यतआह ॥ संतइति ॥ किंचयथाश्रुतव्याख्यानेकामप्रश्नवरदाना
नंतरमेवप्रश्नेसम्राट्पप्रच्छेत्येतावतापूर्तेःपूर्वशब्देवशब्दौव्यर्थौस्यातां । तर्हिपूर्ववरंदत्वाविदेहनगरंप्रायादितिव्याख्यानेपिकथंत
योस्सार्थक्यमित्यतआह ॥ तथापीति ॥ यद्यपितवकामप्रश्नवरदाताऽहंत्वत्पृष्टंवक्तुमागतोस्मित्वयातुयथेष्टंप्रष्टव्यमितियाज्ञव
ल्क्यवचनानंतरंराज्ञाप्रश्नःकर्तव्यः तथाप्यौत्सुक्यात्सम्राडेवपूर्वंपप्रच्छेत्यर्थः । यद्वायद्यपियाज्ञवल्क्येनसंवादकामुकतयाऽऽगत
त्वेनैवप्रथमतोवक्तव्यं तथापिकामप्रश्नवरस्यस्वीकृतत्वात्सम्राडेवपूर्वंपप्रच्छेत्यर्थः ॥१॥ अस्यजीवस्याऽऽत्मैवस्वयमेवज्योतिरिति
जीवस्यस्वज्योतिष्ट्वमुच्यतइतिप्रतीतिनिरासायआत्मैवास्यज्योतिर्भवतीतिवाक्यंव्याचष्टे ॥ आत्मेति ॥ ननुसुप्त्यादावस्यजीवस्य
भगवानेवज्योतिरितिनयुज्यते भगवतोऽस्तमयादिशून्यस्यजाग्रत्यपिज्योतिष्ट्वप्राप्त्यातदाविशिष्यात्मज्योतिष्ट्वोक्त्यनुपपत्तेरित्य
तआह ॥ भावइति ॥ यद्यपिसूर्यादेःज्योतिषोभावेअभावेपिजीवानांविष्णुर्ज्योतिर्भवत्येव तथापिसूर्यादेरभावेतु तत्विष्णवा
ख्यंज्योतिर्विशेषतोज्ञेयमितियोजना । तथाचतदाज्योतिरंतराभावाभिप्रायेणविशिष्योक्तिरितिभावः । ननुसूर्यादेर्विषयप्रकाश

भा० । याज्ञवल्क्योवरंदत्वाराज्ञासंवादकामुकः । वैदेहनगरंप्रायात्संतोयच्छास्त्रलोलुपाइतिस्कांदे । तथापिसम्राडेवपूर्वंपप्रच्छ ॥ १ ॥ आ
त्माभगवानेवास्यज्योतिः । भावेऽभावेपिसूर्यादेर्जीवानांविष्णुरेवहि । ज्योतिस्तथाप्यभावेतुतज्ज्ञेयंहिविशेषतः ।

कत्वादिनाबुद्धिहेतुत्वाद्युक्तंजीवंप्रतिज्योतिष्ट्वं भगवतःकथंजीवंप्रतिज्योतिष्ट्वमित्यपेक्षायामाह ॥ अस्वातंत्र्यादिति ॥ स्वबु
द्धिद्योतनेजीवस्यस्वातंत्र्येविष्णुज्योतिष्ट्वांगीकारोऽयुक्तःस्यादित्यतउक्तंअस्वातंत्र्यादिति । तुशब्दएवार्थः । तमस्यपिसूर्यादि
ज्योतिरंतराभावदशायां नकेवलंतत्सद्भावदशायामित्यपिशब्दः । नन्वंधेतमसितावन्नजीवबुद्धिप्रेरकत्वमीश्वरस्य । तथात्वेत
त्स्थस्येश्वरस्यदुःखादिप्राप्तेः । अतस्तत्रस्वतएवबुद्धिद्योतनसित्यंगीकार्यं । तथाचतद्वदत्रापिकिंनस्यादित्यतउक्तंतमस्यपीति । य
थोक्तं तत्रापिचतद्व्यापारादविरोधइति ॥ ६ ॥ यद्यात्माभगवान्तर्हितस्यध्यायतीवलेलायतीवेतिध्यानग्रहणकर्तृत्वंकथमुच्यते 495
तस्यजीवधर्मत्वात् । नचास्यजीवपरत्वेइवशब्दवैयर्थ्यं ध्यानादेरपिसिध्यात्वाभिप्रायेणतदुपपत्तेरित्यतस्तद्यथावद्व्याचष्टे ॥ स्वातं
त्र्यादिति ॥ असौसर्वेश्वरेश्वरो जीवमंजसाध्यापयन् स्वयंध्यायतीवेत्युच्यते । कुतः स्वातंत्र्यादितियोजना । लाउपादानइ
तिधातोर्लेलायतीत्येतद्गृह्णातीतिव्याख्यातं यद्वाध्यायतीतिलेलायतीत्यस्यांतर्णीतणिच्त्वमभिप्रेत्योक्तंध्यापयन्ग्राहयन्निति । इ
वशब्दोऽल्पार्थे । ननुविज्ञायतेऽनेनेतिविज्ञानंबुद्धिस्तन्मयस्तत्प्रायइतिजीवस्यविज्ञानमयत्वोक्तेःकथमात्माभगवानित्यतआह
॥ सदेति ॥ ननुसमानःसन्नुभौलोकावनुसंचरतीत्युभयलोकसंचरणमुच्यते । तच्चजीवस्यैवकर्मवशादुपपद्यते नतुभगवतइ
त्यतःतद्व्याख्यातुंसमानशब्दार्थंतावदाह ॥ समानइति ॥ यतःसदासमःअतःसमानः । कथंसदासमत्वमित्यतआह ॥

भा० । अस्वातंत्र्यात्तुजीवस्यद्योतयन्बुद्धिमस्यसः । प्रवर्तयतिसर्वेशस्तमस्यपिजनार्दनइतिच । स्वातंत्र्याद्ध्यायतीवासौध्यापयञ्जीवमं
जसा । गृह्णातीवग्राहयन्सजीवंसर्वेश्वरेश्वरः । सदाविज्ञानपूर्णोसौसमानोसौसदासमः ।

अविकारादिति॥तदिदानींव्याचष्टे॥ समानस्सन्निति॥ ननुस्वप्नोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणीतिजीवलिंगप्रतीतेःकथं
भगवत्परतयाव्याख्यानमित्यतस्तद्व्याचष्टे॥ स्वापकत्वादिति॥ ननुस्वप्नावस्थाप्रेरकःपरमात्मेमंलोकंपृथिव्याख्यमतिक्रामतीत्य
संगतमनुपपन्नंचेत्यतउक्तं॥ जाग्रदाख्यमिति॥ इमंलोकमतिक्रामतिमृत्योरूपाण्यतिक्रामतीतिवाक्यभेदप्रतीतिनिरासायाह॥
मृत्युरूपात्मकमिति॥ तर्हिश्रुतौबहुवचनानुपपत्तिरित्याशंकांपरिहरन्जाग्रदवस्थायामृत्युरूपात्मकत्वमुपपादयति॥बहिति॥
तारयेदित्यनेनातिक्रामतीत्येतत्अंतर्णीतणिजंतमित्युक्तंभवति। स्वापकत्वात्स्वप्ननामकस्यजाग्रत्तरणहेतुत्वंकथमित्यतउक्तं स्वप्नमा
नयन्निति। जीवमित्यनुवर्तमानंवक्ष्यमाणंवातारयेदित्यत्रस्वप्नमानयन्नित्यत्रचसंबध्यते। प्रकारांतरेणापितद्वाक्यंव्याचष्टे॥ इमंलो
कमिति॥ अस्मिन्पक्षेस्वप्नोभूत्वेत्यस्यांतरिक्षलोकप्रापकोभूत्वेत्यर्थोभिप्रेतः। यथाश्रुतेऽसंगत्यापत्तेरितिभावेनाह॥ अंतरिक्ष
गमिति॥ अनेनैवदेहेनजीवमंतरिक्षगंकुर्यात्किमितिजिज्ञासायामुक्तं मृताविति। भूर्लोकस्यमृत्युरूपत्वमुपपादयति॥ भूर्लो
कइति॥ बहुवचनार्थमाह॥ बह्वइति॥ चशब्दोयस्मादित्यर्थे। मृत्यवःकलावाभ्रोपमाजीवाइत्यादिवक्ष्यमाणप्रकारेणबहवः
हेत्वंतरेणापिमृत्युरूपत्वमुपपादयति॥ पापेति॥ नन्विदंचपरलोकस्थानंचेत्युक्तभूलोकस्वर्गलोकसंधौस्वप्नावस्थायाभवनाभावा

भा०। अविकारात्समानःसञ्जीवमादायसंचरेत्। उभौलोकौस्वापकत्वाद्भूत्वासौस्वप्ननामकः। इमंलोकंजाग्रदाख्यंमृत्युरूपात्मकंसदा।
बहुपापैकहेतुत्वात्तारयेत्स्वप्नमानयन्। इमंलोकंचभूराख्यंतारयित्वांतरिक्षगं। जीवन्कुर्यान्मृतौविष्णुर्भूलोकःक्षिप्रमृत्युमान्। बहवोमृत्यवश्चात्रमृ
त्योरूपाण्यतस्त्वयं। पापहेतुत्वतश्चायंभूलोकोमृत्युरूपकः।

त्कथंसंध्यंतृतीयंस्वप्नस्थानमित्युक्तमिचेत् न। भूलोकपरेदंशब्देनजाग्रदवस्थायाः द्युलोकपरपरलोकस्थानशब्देनसुषुप्त्यवस्थायाअवस्थावाचकस्वप्नशब्देनांतरिक्षलोकस्यापिग्रहणात्। तथाचजाग्रत्सुषुप्तिसंधौभवंसंध्यंस्वप्नस्थानं भूलोकद्युलोकयोःसंधौभवंसंध्यं अंतरिक्षलोकस्थानमितिवाक्यार्थइतिभावेनलोकवाचकशब्दयोरवस्थावाचकत्वंअवस्थावाचकशब्दस्यलोकवाचकत्वंप्रमाणेनाह ॥ जाग्रच्चेति ॥ अनेनेमंलोकंजाग्रदाख्यमितियदुक्तंअंतरिक्षगमित्यनेनस्वप्नोभूत्वेत्यस्यअंतरिक्षलोकप्रापकोभूत्वेतिचयद्विवक्षितंतदुभयमपिउपपादितंभवति। एवंलोकवाचकशब्दस्यावस्थायाअपिवाचकत्वेउभौलोकावित्यत्रनलोकमात्रंग्राह्यं। किंतुअवस्थापिग्राह्येत्याह॥ तद्व्यभिप्रायिकेति॥ तस्माल्लोकवाचकशब्दस्यावस्थावाचकत्वस्यापिसत्वादित्यर्थः। ननुसवाअयंपुरुषोजायमानइत्यादिजीवलिंगात्कथमात्माभगवानितिव्याख्यानमित्यतआह ॥सवाइति॥ व्याश्रयाईशजीवोभयपरा। नकेवलमुभौलोकावितिश्रुतिर्व्यभिप्राया। किंतुइयमपीतिव्यभिप्रायकत्वमात्रसमुच्चयार्थश्चशब्दः। ननुकथमियंश्रुतिरीशजीवोभयपरा ईशस्यपूर्वप्रकृतत्वात् सवाइतितत्परामर्शोपिजीवस्याप्रकृतत्वात्तत्परामर्शस्यासंभवादित्यतआह ॥ यस्येति ॥ तथासवाअयंजायमानइत्यनेन तथाचात्मैवास्यज्योतिरित्यत्रास्येतिभगवज्ज्योतिष्ट्वेनजीवस्यापिप्रकृतत्वात्तत्परामर्शोपियुक्तइतिभावः। आत्मैवास्येति योजीवः सपरामृश्यते। तथेत्येववक्तव्येयस्यज्योतिरयंविष्णुरित्युक्तिस्तद्वाक्यव्याख्यानार्था प्रमाणेन पूर्वंतस्याव्याख्यानात्। नन्वथा

497

भा०। जाग्रच्चपृथिवीचैवद्यौःसुषुप्तिस्तथैवच। स्वप्नश्चैवांतरिक्षंचज्ञेयाअन्योन्यनामकाः। तद्व्यभिप्रायिकायस्मादुभौलोकावितिश्रुतिः। सवाअयंजायमानइतिचव्याश्रयाश्रुतिः। यस्यज्योतिरयंविष्णुःसपरामृश्यतेतथा।

 

 





पिनेयंश्रुतिरीशजीवोभयपराईशस्यजननमरणपापसंसर्गतद्धानानामसंभवादित्यतआह ॥ यदेति ॥ स्वातंत्र्यतस्तन्नियामकइतिसंबंधः । यथाजयपराजययोःभृत्यगतत्वेपितन्नियामकतयाराजाजयीपराजयीत्युच्यते तथाजीवनमरणयोःजीवगतत्वेपितन्नियामकत्वेनभगवान्जायमानोम्रियमाणइत्युक्तइत्यर्थः। राज्ञोभृत्यनियामकत्वंयथान्याधीनं नैवंभगवतइत्याशयेनस्वातंत्र्यतइत्युक्तं । पापानामित्यस्यपूर्वोत्तराभ्यांसंबंधः । ग्रहउपादानं फलादानादित्यत्रापिपापानामित्येतदनुवर्तते । नन्वेवमपिकथमियंश्रुतिर्व्याश्रया जीवस्यजननमरणपापसंसर्गाणांसंभवेपितद्धानासंभवादित्यतआह ॥ जीवोपीति ॥ इदंचपरलोकस्थानंचेत्यादिकंनकेवलमुक्तरीत्यावस्थालोकोभयमात्रपरंकिंतुसंसारमोक्षपरंचेत्यभिप्रेत्याह ॥ स्वर्गइति ॥ सुप्तिरित्यादिकमिदंवचइतिसंबंधः । आदिपदेनस्वर्गइतिपरलोकस्थानमितीत्यस्यग्रहणं । यतस्सुप्तिरित्याख्यानकेवलंसुप्तिस्वर्गयोःकिंतुमुक्तेरपिसमा अतःसुप्तिरितीदंवचोद्युसुप्तिमोक्षाणामभिप्रायात्प्रवृत्तं। यतःस्वर्गइत्याख्यानकेवलं स्वर्गसुप्त्योः किंतुमुक्तेरपिसमा अतःस्वर्गइतीदंवचोद्युसुप्तिमोक्षाणामभिप्रायात्प्रवृत्तं । यतःपरलोकोमुख्योमुक्तिरेवामुख्यतस्तुस्वर्गसुषुप्ती अतःपरलोकइतीदंवचःद्युसुप्तिमोक्षाणामभिप्रायादितिबोध्यं । सुप्तिरितिस्वर्गइतिवाक्यांतराभिप्रायेणोक्तं सुप्तिरितिकथंमुक्तेराख्येत्यतःतत्पर्यायस्वापशब्दस्यस्वशब्दवाच्यविष्णुप्राप्ति

सा० । यदातुभगवानुक्तस्तदास्वातंत्र्यतोविभुः । म्रियमाणोजायमानइत्युक्तस्तन्नियामकः । फलदानायपापानांग्रहस्संसर्गउच्यते । मोक्षदानेफलादानाद्विजहातीतिचोच्यते । जीवोपिमुक्तिकालेतुहातापापस्यकथ्यते । स्वर्गःसुपुप्तिरित्याख्यामुक्तेरपियतःसमा । परलोकोयतोमुख्योमुक्तिरेवनचापरः । अतोद्युसुप्तिमोक्षाणामभिप्रायादिदंवचः ।

रूपमुक्तिपरत्वादितिभावेनाह ॥ स्वेतीनि ॥ स्वर्गइतिकथंमुक्तेराख्येत्यतोवाह ॥ स्वेतीति ॥ स्वरितिवक्तव्येरेफमविवक्षित्वा स्वेतीत्येवोक्तं । तंप्रतिगमनात्स्वर्गइतिमुक्तेराख्येतिभावः । ननुसुप्तिरितिवचोयदिद्युसुप्तिमोक्षाणामभिप्रायात् तर्हिअसुप्तःसु प्तानभिचाकशीतीत्येतन्मुक्तपरत्वेनापिव्याख्येयं । नचतद्युक्तं शुक्रमादायपुनरेतिस्थानमिति जीवस्यपुनरागमनोक्तेरित्यतआह ॥ पुनरागमनमिति ॥ तर्हिनचपुनरावर्ततइत्यादिश्रुतिविरोधइत्यतःपुनरागमनंविवृणोति ॥ प्रलयेत्विति ॥ पुनःसंसारप्राप्ति रूपपुनरागमननिषेधपराश्रुतिरितिभावः । निर्गच्छंति सृष्टिकाले। ननुमुक्तानांभगवतिप्रलयेप्रवेशेसृष्टौनिर्गमनेचाऽज्ञानदुःखादि कंस्यादित्यतउक्तं ॥ ज्ञानाविलोपेनेति ॥ सुखाविलोपेनेत्यपिग्राह्यं । तदेवविवृणोति ॥ नचेति ॥ तेमुक्ताः सृष्टौवहिर्लयेअंतश्चर मंत्येव। नचतेषांज्ञानसुखादीनांकश्चिद्विशेषइतिसंबंधः । ननुसयत्रप्रस्वपितीतिस्वापकर्तृत्वलिंगबलाज्जीवएवात्रप्रतिपाद्योऽवगम्य तइतिकथंभगवत्परतयाव्याख्यानमित्यतआह ॥ स्वापयतीति ॥ नन्वेवमंतर्णीतणिच्त्वादिनेदंप्रकरणंविष्णुपरतया कुतोव्याख्ये यमितिचेत्तस्मिन्संध्येस्थानेतिष्ठन्नुभेस्थानेपश्यति तमाक्रममाक्रम्योभयान्पाप्मनआनंदांश्चपश्यतीत्यस्यविष्णावेवसंभवात्जीवे चाऽसंभवादितिभावेनाह ॥ आनंदेति ॥ लोकादेरित्यत्रलोकशब्देनपृथिवीस्वर्गयोर्ग्रहणं । आदिपदेनजाग्रत्सुषुप्त्योःसंसारमुक्त्यो

---

भा० । सुप्तिरित्यादिकंस्वेतिविष्णोराख्यासुखत्वतः । पुनरागमनंनाममुक्तानामपिविद्यते । प्रलयेतुप्रविश्यैनंभगवंतंजनार्दनं । स्थित्वाज्ञा नाविलोपेननिर्गच्छंतिपुनस्ततः । नचज्ञानसुखादीनांतेषांसृष्टौलयेपिवा । विशेषःकश्चिदंतश्चवहिश्चैवरमंतिते । स्वापयत्येनमितिसस्वपितीत्युच्य तेहरिः । आनंदपापलोकादेर्दर्शनंस्वप्नसुप्तयोः । अपिविष्णोःसदैवास्तिनजीवस्यकथंचन ।

श्वसंग्रहः। अनेनोभेस्थानेइत्येतदुक्तार्थं। श्रुतौतास्मिंत्संध्येस्थानेतिष्ठन्निति स्वप्नेस्थितोभगवानुभेस्थानेपश्यतीत्युक्तं। तेनस्वप्नएवस्थितस्यविष्णोर्लोकादिदर्शनंनसुप्तिस्थस्येतिशंकास्यात्। तांपरिहर्तुंस्वप्नसुप्त्योरपिस्थितस्येत्युक्तं। विष्णोरेवेतिसंबंधः। नन्वात्मैवास्यज्योतिर्भवतीत्युक्तएवार्थः अत्रायंपुरुषःस्वयंज्योतिर्भवतीतिप्रत्यभिज्ञायते। तत्रचजीवस्यैवस्वज्योतिष्ट्वमुच्यते। अतआत्माभगवानितिव्याख्यानेप्रत्यभिज्ञाविरोधःस्यादित्यतआह ॥ अत्रेति ॥ अत्रसुप्तौ अवस्थांतरेपिभगवतोज्योतिष्ट्वात्किंविशिष्योच्यतेइत्यतआह ॥ विशेषतइति ॥ तथाचइदमपिवाक्यंभगवत्परमेवेतिनप्रत्यभिज्ञाविरोधइतिभावः। तद्वाक्यस्यजीवपरत्वेबाधकमाह ॥ नहीति ॥ हिशब्दोयस्मादित्यर्थे। स्वयंस्वातंत्र्येणास्वयंज्योतिष्ट्वंनामस्वातंत्र्येणद्रष्टृत्वं तच्चजीवस्यनसंभवतीतिभावः। अयंअत्रायमितिवाक्यप्रतिपाद्यः। ईश्वरपक्षेचवाक्यार्थोयुज्यतइतिभावेनाह ॥ सर्वमिति ॥ यद्वाऽऽनंदपापलोकादेर्दर्शनंजीवस्यनास्तिविष्णोरेवास्तीत्युक्तं। तत्कुतइत्यतआह ॥ नहीति ॥ द्रष्टुंआनंदपापलोकादिकमितिशेषः। नतत्ररथाइत्यादिवाक्यानिस्वप्नमात्रपरत्वप्रतीतिनिरासायव्याचष्टे ॥ स्वप्नइति ॥ ननुबाधकाभावात्कथंजीवलिंगानामन्यार्थत्वमित्यतोजीवपक्षेबाधकमाह ॥ जीवपक्षइति ॥ यद्यात्मैवास्यज्योतिर्भवतीत्यत्रात्माजीवःस्यात् तर्हिकतमआत्मेतिप्रश्नोनयुक्तःस्यात् जीव

---

भा०। अत्रायंभगवान्विष्णुर्जीवस्यस्वयमेवतु। ज्योतिर्विशेषतोभूयान्नैवान्यज्योतिरत्रयत्। नहिजीवःस्वयंद्रष्टुंसुप्तःशक्नोतिहिध्रुवं। अतःसनैवजीवोयंसर्वंपश्यतिसूक्ष्मदृक्। स्वप्नेंतरिक्षेस्वर्गेवानरथाद्याःपुरास्थिताः। तदैवतत्कर्मयोग्यान्निर्मिमीतेहरिःस्वयमित्यादिमहामीमांसायां। जीवपक्षेप्रसिद्धत्वात्कतमआत्मेतिप्रश्नोनयुक्तः।

स्याहमितिप्रत्यक्षविषयत्वेनप्रसिद्धत्वात् प्रसिद्धप्रश्नस्यचासंभवादित्यर्थः । भगवतश्चपरोक्षत्वेनाप्रसिद्धत्वात्तद्विषयकप्रश्नोनानुपपन्नइतिभावः । बाधकांतरमाह ॥ नचेति ॥ समानोविकारः कुतइत्यतआह ॥ सुखेति ॥ जीवस्यद्युपृथिवीलोकसंचरणे सुषुप्तिजाग्रत्संचरणेचयथाक्रमंसुखदुःखविशेषवत्त्वान्नसमानत्वमित्यर्थः । ननुसुखदुःखविशेषवत्त्वेपिजीवस्यनसमानत्वमनुपपन्नं । सुखदुःखादेर्मिथ्यात्वेनवास्तवसमानत्वाविरोधित्वात् नह्यारोपितनीलिम्नागगनस्यनीरूपत्वंविरुद्धंइत्यतआह ॥ नचेति ॥ स्यादेतदेवं यदिसुखादेर्मिथ्यात्वमेवस्या न्नचैतदस्ति । तत्रप्रमाणाभावात् । नतावदत्रप्रत्यक्षमस्ति । इदंनीलमितिवत्सुखादिकं मिथ्येतिप्रतीत्यभावात् । प्रत्युतसुखादिकंसदित्येवप्रतीतेश्च । नाप्यनुमानं लिंगाभावात् । विमतंमिथ्यादृश्यत्वादित्यनुमानमस्तीतिचेन्न । मिथ्यात्वस्यासत्वेऽपसिद्धांतापातात् । अनिर्वचनीयत्वेअप्रसिद्धविशेषणत्वात् सत्यविवेकस्यमिथ्याभावस्यसाध्यत्वान्नाप्रसिद्धविशेषणतेतिचेन्न । सत्यविवेकस्यासत्वानतिरेकेणापसिद्धांतानिस्तारात् । असदनिर्वचनीयसाधारणंसद्विविक्तत्वमितिचेन्न । तर्ह्यसत्वमादायार्थांतरतापातात् । अपरोक्षतयाप्रतीयमानत्वेनासत्वबाधेअनिर्वचनीयत्वमेवसेत्स्यतीतिचेन्न । असतोप्यपरोक्षप्रतीतिसंभवेनतस्यासत्वाबाधकत्वात् । अन्यथाशुक्तिरूप्यादावसत्प्रातिभासिकवैलक्षण्यज्ञानाभावेप्रवृत्त्यभावापत्तेः । अनिर्वचनीयस्यैवाभावेनधूमबाष्पयोःधूमत्ववत्सद्विविक्तत्वस्यसाधारणत्वायोगाच्च । दृश्यत्वंचयदिदृग्विषयत्वं तदाऽऽत्मनि व्यभिचारः । अन्यथावेदांतजनितविज्ञानस्यआत्मज्ञानत्वाभावापातात् । नचात्माज्ञाननिवर्तकत्वेनात्मज्ञानत्वं तदविषयकस्यतद

---

भा० । नचजीवःसमानःसन्नुभौलोकौसंचरति । सुखदुःखविशेषवत्त्वात् । नचसुखादेर्मिथ्यात्वेकिंचिन्मानं ।

ज्ञाननिवर्तकत्वेअतिप्रसंगात् । यदिचदृग्जन्यफलाश्रयत्वं तदाऽसिद्धं । ज्ञाततादिरूपफलस्यान्यत्रनिराकृतत्वात् । दृष्टांतस्यसा ध्यसाधनवैकल्यंचेति । नाप्यागमः । नेहनानेत्यादेरन्यार्थत्वस्योक्तत्वात् । नापिख्यातिबाधान्यथानुपपत्तिः । असतोपिपरोक्षाप रोक्षप्रतीतिसंभवेनासच्चेन्नप्रतीयेतेत्यापादनासंभवात् । सच्चेन्नबाध्येतेत्यत्रचेष्टापत्तिः । नाप्युपमानं तस्यसादृश्यादिनियतविषय त्वात् । नाप्यभावः प्रत्यक्षेणसुखदुःखादेःसत्यत्वस्यैवावगमेनसत्वानुपलब्ध्यसिद्धेरिति । तदेतदुक्तंकिंचिदिति । नकेवलंप्रमाणाभा वान्नसुखदुःखादेर्मिथ्यात्वं किंतुतद्विरुद्धत्वाच्चेत्याह ॥ याथातथ्यतइति ॥ कविस्सर्वज्ञो मनसामीष्टइतिमनीषी परिभवतिसर्वा नितिपरिभूःसर्वोत्तमः स्वयमेवभवतीतिस्वयंभूःस्वतंत्रःपरमेश्वरः शाश्वतीभ्यःसमाभ्यःसर्वदा अर्थान्पदार्थान्महदादीन् याथा तथ्यतएव व्यदधान्नतुमिथ्याभूतानित्यर्थः । गीतायांजगदसत्यत्ववादिनांनिंदनात्तत्सत्यत्वेतात्पर्यावगमात्तद्विरोधोजगन्मिथ्या त्वस्येतिभावः । आदिपदेन नासतोदृष्टत्वा च्चाभावउपलब्धेरितिसूत्रग्रहणं । ननुयद्यपीदानींसुखादिकंमिथ्येत्यनुभवोनास्ति त थाप्युत्तरत्रैततसुखादिजगन्नासीन्नास्तिनभविष्यतीत्यनुभवोवेदांतजन्यब्रह्मसाक्षात्काररूपोभविष्यति । तेनैवजगतोबाध्यत्वरूप मिथ्यात्वसिद्धिः । नचश्रुत्यादिविरोधः । व्यावहारिकसत्वपरत्वात्तस्य प्रत्यक्षंतुवर्तमानमात्रग्राहित्रिकालबाधाभावग्राहकंनेति नतद्विरोधोपि । तथाचकथंजगन्मिथ्यात्वेमानाभावस्तद्विरोधश्चेत्यतआह ॥ नन्वेति ॥ स्यादेतत् यद्ययमनुभवएवोत्तरत्रभवि

भा० । याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यः । असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं । वैधर्म्याच्चनस्वप्नादिवदित्यादिभगवद्वच नविरुद्धत्वाच्च ।

ष्यतीतिस्यात् । नचतदस्ति तत्रप्रमाणाभावात् । नतावत्तत्रप्रत्यक्षं तस्यवर्तमानमात्रग्राहित्वस्योक्तत्वात् । विमतंबाध्यंदृश्यत्वादित्यनुमानमस्त्वितिचेन्न । बाध्यत्वस्यापिबाध्यत्वेअबाध्यत्वस्यसत्यत्वप्राप्तेः । अन्यथातत्रहेतुवृत्तौव्यभिचारः । अवृत्तौचाऽनुमानवैयर्थ्यात् पूर्वोक्तदोषानिस्ताराच्च । अनिर्वचनीयत्वेनबाध्यत्वंसाध्यमितिचेन्न । हेतुस्वरूपासिद्धेः । ज्ञातेद्वैतंनविद्यते इतिआगमोत्रमानमितिचेन्न । अद्वैतंनविद्यतइतिपदच्छेदेनभेदेज्ञाते अद्वैतंनविद्यतइत्यर्थसंभवात् । ज्ञानेनमोक्षाभिधानान्यथानुपपत्त्यातत्सिद्धिरितिचेन्न । ज्ञानेनअज्ञाननिवृत्तौतदुपादानकंजगत्स्वयमेवबाध्यतइतिहितत्राभिप्रायःसनयुक्तः । अज्ञानस्यज्ञाननिवर्त्यत्वंहिज्ञानजन्यध्वंसप्रतियोगित्वमेव नत्रैकालिकाभावप्रतियोगित्वं शुक्तिज्ञानेनशुक्तिकाज्ञानंनष्टमित्येवानुभवात् एतादृग्बाध्यत्वस्यास्मत्कमप्रतिपक्षत्वाच्च । नचजगतोऽज्ञानतोपादानकत्वेकिंचिन्मानं । शुक्तिरूप्यादेरप्यज्ञानोपादानकत्वासंमतेः । तस्मादुक्तानुभवसत्वेनकिंचिन्मानं तदेतदुक्तंकिंचिन्मानंनेति । यदुक्तंजगन्मिथ्यात्वं वैधर्म्याच्चनस्वप्नादिवदितिसूत्रविरुद्धमिति तदयुक्तं । सूत्रेहिप्रपंचस्यस्वप्नादिवैधर्म्यमुच्यते तच्चप्रपंचस्यकिंचित्कालस्थिरत्वेनैव स्वाप्नपदार्थस्याशुतरविनाशित्वात् किंचित्कालस्थिरत्वमात्रंचास्माभिरपिप्रपंचस्यांगीक्रियते । तस्यशून्यवाद्यंगीकृतात्यंतासत्वविरोधित्वेप्यस्मदभिमतमिथ्यात्वाविरोधित्वादित्यतआह ॥ किंचिदिति ॥ यद्यत्रसूत्रेकिंचित्कालस्थिरत्वमात्रेणप्रपंचस्यस्वप्नादिवैधर्म्यमुच्यतेतदातत्सूत्रंशून्यवादिनिराकरणपरंनस्यात् किंचित्काल 503

---

भा० । नचैतन्नासीदस्तिभविष्यतीत्यनुभवःकदाचिद्भविष्यतीत्यत्रकिंचिन्मानं । किंचित्कालंस्थिरत्वमात्रस्यशून्यवादिनामपिसिद्धत्वाद्वैधर्म्याच्चनस्वप्नादिवदित्यादिवचनंव्यर्थंस्यात् ।

स्थिरत्वमात्रेणस्वप्नादिवैधर्म्यस्यशून्यवादिनामपिसिद्धत्वात् । तथाचतत्सूत्रंव्यर्थंस्यादित्यर्थः । एतेनप्रपंचस्यव्यावहारिकसत्वेन स्वप्नादिवैधर्म्योक्तिरित्यपिनिरस्तं । व्यावहारिकसत्वस्यतेनाप्यंगीक्रियमाणत्वात् । यथोक्तंशून्यवादिना सत्वंतुद्विविधंप्रोक्तंसांवृतंपारमार्थिकं । सांवृतंव्यावहार्यंस्यात्निवृत्तौपारमार्थिकमिति । तर्हिकेनप्रकारेणस्वप्नादिधर्म्यंप्रपंचस्यसूत्रेभिप्रेतमित्यतआह ॥ अतइति ॥ अर्थांतरस्यासंभवादित्यर्थः । अस्यप्रपंचस्य नास्तिनासीन्नभविष्यतीत्यनुभवःकदापिनभविष्यतीत्यभिप्रायेणैवस्वप्नादिवैधर्म्यवचनंप्रवृत्तं । शून्यवादिनाप्रपंचस्योक्तरूपानुभवःकदाचिद्भविष्यतीत्यंगीकारेणसूत्रस्यतद्दूषणपरत्वस्यसंभवेनवैयर्थ्यासंभवादित्यर्थः । ननुप्रपंचस्योक्तवाधाभावरूपेणसौत्रादिपदोपात्तरज्जुसर्पादिवैलक्षण्यसंभवेपिस्वप्नवैलक्षण्योक्तिर्नयुज्यते । नतत्ररथाइत्यादिनासृष्ट्युक्त्यास्वप्नपदार्थस्यसत्यत्वादितिचेन्न । स्वप्नशब्देनात्रस्वाप्नपदार्थेआरोपितजाग्रत्त्वग्रहणात् । तस्यचरज्जुसर्पादिवद्बाध्यत्वात् । नन्वस्त्वेवमबाध्यत्वेनैवप्रपंचस्यस्वप्नादिवैधर्म्योक्तिस्तथाप्यस्माकंकथंतद्विरोधः । (तस्य)शून्यवाद्यभ्युपगतजगदसत्यत्वविरोधित्वेप्यस्मदभिमतानिर्वचनीयत्वविरोधाभावादितिचेत् न । प्रपंचस्यानिर्वचनीयत्वंवदताकिंप्रपंचोनास्तिनासीन्नभविष्यतीत्यनुभवोंगीक्रियते नवा । द्वितीयेनविवादः अवाध्यत्वाविरोध्यनिर्वचनीयत्वस्यास्माकमप्रतिपक्षत्वात् इति । आद्यं दूषयति ॥ नचेति ॥ तथानुभवेत्वयाप्यंगीक्रियमाणे शून्यवाद्युक्तजगदसत्यत्वस्यत्वदुक्तानिर्वचनीयत्वस्यचनकश्चिद्विशेषः । तथाऽनुभवविषयत्वेऽसत्वस्यैवप्राप्तेः । मयातादृशानुभवांगीकारेप्यसद्वैलक्षण्यंअंगीक्रियतइतिचेन्न । अर्थक्रियाकारित्वादिना

भा०। अतोनकदाचिदस्यनासीदस्तिभविष्यतीत्यनुभवोभविष्यतीत्यभिप्रायेणैवतद्वचनं । नचतथानुभवेशून्यस्यानिर्वचनीयस्यचकश्चिद्विशेषः ।

तद्वैलक्षण्यस्यतन्मतेपिसत्वात् । तदभिप्रेतपारमार्थिकसत्वाभावस्यत्वन्मतेपिसत्वात् । तथाचवाङ्मात्रभेदएवायंनार्थभेदइति सूत्रविरोधोदुर्वारइतिभावः । ननुशून्यवादिनिराकरणपरसूत्रविरोधोऽस्माकंकथमितिचेन्न । सूत्रनिरसनीयांशस्यत्वन्मतेपिसा स्यात् । मायावादिनिरासायशून्यवादिनिरासकसूत्रोदाहरणेइतोपिनानुपपत्तिरित्याह ॥ नचेति ॥ तद्वादिनांमायावादिनां मतइतिशेषः । यद्यपिमायावादिनांशून्यवादिनांचमतेआचारविशेषोदृश्यते तथापिशास्त्रविषयीभूतप्रमेयेनकश्चिद्विशेषः । तथा चशून्यवादिनिरासकसूत्रेणमायावादिनिरासोनानुपपन्नइत्यर्थः । ननुशास्त्रविषयभूतेपिप्रमेयेशून्यवादिमतान्मायावादिमतस्य कुतोनविशेषइतिचेत् सचविशेषःकिंप्रधानफलविशेषा त्तत्साधनवैलक्षण्या त्परमप्रमेयवैषम्याद परप्रमेयविशेषाद्वा । आद्यपक्षं दूषयति ॥ नचेति ॥ प्रधानफलंहिमोक्षएव सचशून्यवादिनायादृशोऽभिधीयतेतादृशएवमायावादिनाप्यभिधीयतइतिमोक्षेशू न्यवादिनांमायावादिनांचमतेनकश्चिद्विशेषः ।तथाहि मायावादिमतेहि अविद्यास्तमयोमोक्षःसासंसारउदाहृतइत्युक्त्याकिंमोक्षो ऽविद्यानिवृत्तिरूपः उतब्रह्मवेदब्रह्मैवभवतिब्रह्मभूयायकल्पतइत्यादिश्रुतिस्मृतिप्रामाण्याभिमानेनब्रह्मभावः। आद्येशून्यवादेपि संवृतिनिवृत्तेर्मोक्षत्वेनतद्वैलक्षण्याभावः। अविद्यानिवृत्तिःसंवृतिनिवृत्तिविलक्षणेतिचेत् तत्किमविद्यानिवृत्तेःसंवृतिनिवृत्तिवैल क्षण्यंस्वतःप्रतियोगिवैलक्षण्याद्वा । नाद्यः । स्वतोवैलक्षण्यायोगात् । द्वितीयेसंवृतिवैलक्षण्यंकिमविद्यायाविरुद्धलक्षणयोगात् किंवाआवरणविक्षेपादिकार्यभेदा दथसंज्ञाभेदात् ।नाद्यः। मायावाद्यभिमतस्यानाद्यनिर्वाच्यत्वादेरविद्यालक्षणस्यशून्यवादिभिः

भा० । नचशून्यवादिनांतद्वादिनांचकश्चिद्विशेषोमोक्षे ।

संवृतावप्यंगीकारात् । उक्तंहि(तस्यैवानादिसंवृत्येत्यादि) । न द्वितीयः। संवृतिशब्देनैवावरकत्वस्यस्फुटंप्रतिभासनात् । विक्षेपस्यतैरप्यभ्युपगमाच्च । यथोक्तं। तस्यैवानादिसंवृत्यानानाभेदात्मकंजगत्। सदिवाभातीत्यादि। नापितृतीयः। पर्यायभूतसंज्ञाभेदस्यार्थवैलक्षण्याप्रयोजकत्वात् । संव्रीयतेअनयेतिसंवृतिरित्यावरकत्वरूपसंवृतिशब्दयोगार्थस्यत्वदभिमताविद्यायामपिसत्वात् । विद्याविरोधित्वरूपाविद्याशब्दप्रवृत्तिनिमित्तस्यशून्यवाद्यभिमतसंवृतावपिसत्वात् । उक्तंचानुव्याख्याने । मायातेषांतुसंवृतिरिति । किंचाविद्यानिवृत्तिस्त्वन्मतेह्यात्मरूपैव । यथोक्तं आत्मैवाज्ञानहानिरिति । शून्यवादिनोपिसंवृतिनिवृत्तिः शून्यमात्रमित्यंगीकुर्वंति । यथोक्तमनुव्याख्याने शून्यंतत्वमसंबाधंनानासंवृतिवर्जितं । मोक्षइत्युच्यतइति । तथाचकथंविशेषः । केचिन्मायावादिनस्त्वविद्यानिवृत्तिरात्मातिरिक्तापंचमप्रकारैव । यथोक्तं नसन्नासन्नसदसन्नानिर्वाच्यश्चतत्क्षयः। यक्षानुरूपोबलिरित्याचार्याःप्रत्यपीपदन्निति । आत्ममात्रत्वेऽसाध्यत्वापातात् । वृत्तिविशिष्टात्मरूपत्वेवृत्तिनिवृत्तौमोक्षनिवृत्त्यापातात् वृत्त्युपलक्षितात्ममात्रत्वेतुवृत्त्युपलक्षितात्मनःपश्चादिवपूर्वमपिसत्वेनसंसारदशायामपिमोक्षत्वापातात्। अनात्मत्वेपिसत्वेऽद्वैतहानि रसत्वेतदभावः। सदसत्त्वंविरुद्धं सदसद्विलक्षणत्वेऽज्ञाननिवृत्तित्वानुपपत्तिः। प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वादितिवदंति । तन्मतस्यापिशून्यवादिमतान्नविशेषः। शून्यवादिभिरप्यगत्यातत्वस्यपंचमप्रकारत्वस्वीकारात्। यथाहुःशून्यवादिनः नसन्नासन्नसदसन्नचाप्यनुभयात्मकं । चतुष्कोटिविनिर्मुक्तंतत्वंमाध्यमिकाविदुरिति। तस्मादविद्यानिवृत्तिरूपमोक्षस्यनशून्यवाद्यभिमतसंवृतिनिवृत्तिरूपमोक्षवैलक्षण्यं । नांत्यः। ब्रह्मभावरूपमोक्षस्यशून्यवाद्यभिमतशून्यभावरूपमोक्षानतिरेकात् ।



506

यथोक्तंशून्यवादिना तद्भावंयोगिनंनयेदिति । नन्वस्मन्मतेब्रह्मणःपरमानंदात्मकतयातद्भावःपुरुषार्थः । दुःखनिवृत्तिव्यतिरे
केणनिरतिशयानंदस्फुरणात् । यथोक्तं तस्मादविद्यास्तमयोनित्यानंदप्रतीतितः । निःशेषदुःखच्छेदाच्चपुरुषार्थःपरोमतइति ।
नैवं शून्यमितिनतद्भावःपुरुषार्थइतिचेत् । आनंदमनुभूयासमितिवदानंदोभूयासमितीच्छायाअदर्शनेनाऽऽनंदत्वस्यापुरुषार्थ
त्वात् । स्ववृत्त्यानंदानुभवःपुरुषार्थोपिपरेणनेष्यते । सुखस्यस्ववृत्तित्वानभ्युपगमात् । स्वस्मिन्कर्तृकर्मभावानभ्युपगमाच्च। किंच
ब्रह्मणःसुखमात्रत्वेप्रकाशमात्रत्वेवासुखप्रकाशाभावेनापुरुषार्थत्वं । उभयात्मकत्वेचाखंडत्वहानिः । ननुवस्तुतोज्ञानसुखात्मकत्वे
भवेदखंडत्वहानिः । नचैवं किंतुजाड्यादिविरोधित्वमात्रं । अनृतजडविरोधिरूपमंतत्रयमलवंधनदुःखताविरुद्धमितिसिद्धांतरह
स्यज्ञैरुक्तत्वादितिचेन्न । एवंसत्यानंदादिरूपतायावाङ्मात्रत्वापत्त्यानब्रह्मभावःपुरुषार्थःस्यात् । अन्यथाशून्यवादिभिःशून्यस्य
जाड्यसंवृतिदुःखांतपूर्वदोषविरोधियदित्यादिनाजाड्यदुःखविरोधिरूपज्ञानानंदात्मकत्वोक्त्याशून्यभावोपिपुरुषार्थःस्यादितिन
तद्वैलक्षण्यंब्रह्मभावस्य । ननुशून्यवादिभिरात्मनाशोमोक्षइत्युच्यते । नतथास्माभिरंगीक्रियते मोक्षेआत्मनोनित्यज्ञानस्वरूप
मस्तीत्यंगीकारात् । अतःकथंनविशेषइत्यतआह ॥ नचेति ॥ मोक्षइत्यनुवर्तते । आत्मनोमोक्षेनित्यज्ञानस्वरूपमस्तीतिवचनेन
मायावादिमतस्यशून्यवादिमतान्नकश्चिद्विशेषः । शून्यवादिभिरपिशून्याभिन्नात्मस्वरूपानुवृत्तेर्मुक्तावप्यंगीकारात् । अन्यथातद्भा
वंयोगिनंनयेदित्युक्तःशून्यभावःकस्यस्यात् । कर्तृत्वभोक्तृत्वप्रमातृत्वादिविशिष्टात्मनाशस्तुमायावादिनामपिसमइतिभावः ।

---

भा० । नचनित्यज्ञानस्वरूपमस्तीतिवचनेनकश्चिद्विशेषः ।

ननुयद्यपिशून्यवादिनआत्मस्वरूपमात्रंमुक्तावनुवर्ततइत्यंगीकुर्वंति नतुतन्नित्यज्ञानस्वरूपमिति । अतोविशेषइतिचेन्न । त्व
न्मतेप्यात्मस्वरूपंनित्यज्ञानात्मकमितिवचनमात्रत्वेनवस्तुगत्याऽयोगात्। तदिदमुक्तं इतिवचनेनेति । आत्मनोनित्यज्ञानस्वरूप
त्वंकुतोनयुक्तमितिचेत् न । तदाऽऽत्मस्वरूपभूतंज्ञानंसविषयंनिर्विषयंवा । द्वितीयंतावद्दूषयति ॥ ज्ञेयेति ॥ आत्मस्वरूपंनज्ञा
नात्मकं विषयशून्यत्वाद्धटवत् । अन्यथाघटोपिज्ञानंस्यादित्यर्थः । अत्रविषयशून्यत्वंविषयानुल्लेखित्वं नतूल्लिखितस्यविषयस्या
ऽवर्तमानत्वमत्यंतासत्वंवा येनातीतादिज्ञानेतुच्छादिज्ञानेचव्यभिचारःस्यात् । ननुविषयशून्यघटस्यज्ञानत्वाभावेपिआत्मावि
षयशून्योपिज्ञानमस्तुकोदोषः । नहिसर्वैर्भावैरेकविधैर्भाव्यमितिनियमोस्ति यथान्योज्ञाताऽन्यश्चज्ञेयइत्यन्यत्रदर्शनेप्यात्मन्यै
क्यंदृश्यतेतथेतिचेत् । मामहंजानामीतिप्रमाणसद्भावात् तत्रतथाकल्पनात् । नचात्रकिंचित्प्रमाणमस्तीत्याह ॥ नहीति ॥ स
विषयकत्वेपिकिंतत्परविषयंस्वविषयंवा । नाद्यः । परमतेमोक्षेपराभावात्। त्वन्मतेवर्तमानस्यैवसाक्षात्साक्षिविषयत्वाच्च। द्वितीयंदू
षयति ॥ नचेति ॥ यद्यप्यस्मन्मतेआत्मरूपंज्ञानंस्वविषयकं आत्मनःस्वप्रकाशत्वांगीकारात् । तथापितेषांमायावादिनांपक्षो
नभवति । नचैवमात्मनस्त्वन्मतेस्वप्रकाशत्वांगीकारविरोधः । अपरप्रकाश्यत्वंस्वप्रकाशत्वमितिपरसिद्धांतादितिभावः । आत्म
स्वरूपंज्ञानंस्वविषयमितितेषांपक्षोनभवतीतिकुतोज्ञायतइत्यतआह॥ तदेति॥ यदिआत्मस्वरूपभूतंज्ञानंस्वविषयंस्यात् तदाज्ञा
नस्यैवकर्तृत्वंकर्मत्वंचांगीकर्तव्यंस्यात् विषयीकरणलक्षणव्यापारंप्रतिज्ञानस्यकर्तृत्वात्। अन्यथाज्ञानंस्वात्मानंविषयीकरोतीतिन

भा० । ज्ञेयाभावेज्ञानत्वाप्यभावात् । नहिज्ञेयरहितंज्ञानंनामास्तीत्यत्रकिंचिन्मानं । नचस्वविषयंतदितितेषांपक्षः । तदाकर्तृकर्मविरोध

स्यात् । नचैकस्यांक्रियायामेकस्यैवकर्तृत्वंकर्मत्वंचयुक्तं विरोधात् । परसमवेतक्रियाजन्यफलशालित्वस्यकर्मलक्षणत्वादितिभावः । एवमात्मस्वरूपस्यविषयशून्यत्वेनज्ञानत्वाभावमुपपाद्येदानींज्ञात्रभावादपितन्नज्ञानमित्याह ॥ नचेति ॥ आत्मस्वरूपभूतज्ञानंप्रति नतावदन्यःकर्ताऽस्तितदभावात् । अतआत्मस्वरूपज्ञानमेवस्वंप्रतिकर्त्रीतिवक्तव्यं । तत्रेदंदूषणं । आदिपदेनानुभवतीत्यादेर्ग्रहणं । ज्ञानस्यात्मस्वरूपस्य कुतएतज्ज्ञायतइतिचेत् ज्ञानरूपक्रियांप्रत्यात्मरूपज्ञानस्यकर्तृत्वांगीकारेआत्मरूपज्ञानंस्वाश्रयइत्युक्तंस्यात् । धात्वर्थाश्रयस्यैवकर्तृत्वात् । नचतद्युज्यतइत्याह ॥ निर्विशेषत्वेति ॥ तर्हिभवतामप्यात्माज्ञानात्मकःकथमितिचेत् अस्माभिस्तस्यस्वविषयकत्वस्याप्यंगीकारात् । आत्मनएवज्ञातृत्वांगीकाराच्चेति । नचोक्तदोषः । अभेदेपिभेदप्रतिनिधिविशेषबलात्सर्वस्योपपत्तेः । नचपरमतेतद्युज्यतइत्याह ॥ निर्विशेषत्वेति ॥ ज्ञातृज्ञेयशून्यस्यापिज्ञानत्वांगीकारेकोदोषइतिचेत् वाच्यवक्तृविहीनस्यवचनस्यभोज्यभोक्तृविहीनस्यभोजनस्यगम्यगंतृविहीनस्यगमनादेरप्यंगीकारापातात् । एवंचात्मनोनित्यज्ञानस्वरूपत्वमस्तीत्यस्यवाङ्मात्रत्वेनमोक्षेशून्यवादिमतान्मायावादिमतस्यनकश्चिद्विशेषइतिस्थितं । नापितत्साधनवैलक्षण्यादितिद्वितीयःपक्षोयुक्तः । शून्यवादिभिःशून्याद्वैतसाक्षात्कारस्येवमायावादिभिरपिब्रह्माद्वैतसाक्षात्कारस्यैवमोक्षहेतुत्वोक्तेः । नन्वस्तुतृतीयःपक्षः । मायावादिनोहिब्रह्मैवतत्वमितिब्रुवते शून्यवादिनस्तुशून्यमेवेति तथाचनद्वितीयपक्षोक्तदोषः । ब्रह्मसाक्षात्कारशून्यसाक्षात्कारयोर्विषयवैलक्षण्यादेववैलक्षण्यसिद्धेः । एवंचकथंतयोरविशेषइतिचेत् । न शून्यवाद्यभिमतशून्यान्मायावाद्यभिमतब्रह्म

भा० । आपतीतिहितेषांवचनं । नचजानातीत्यादिकर्तृत्वंज्ञानस्यतैरंगीक्रियते ।

णोविशेषोक्तेर्व्याहतत्वात् । कुतइत्यतआह॥ निर्विशेषत्वेति ॥ तैरित्यनुवर्तते । ननुमाभूत्ब्रह्मणोनिर्विशेषत्वाच्छून्याद्विशेषः शून्यस्यब्रह्मणोविशेषःकिंनस्यादितिमंदाशंकामप्यपाकरोति ॥ निर्विशेषत्वेति ॥ शून्यस्यशून्यवादिनापीतिशेषः । निर्विशेषंस्वयंभातमित्यादितद्वचनात् । किंचयद्धियतोव्यावर्तते तत्तद्व्यावर्तकधर्मयोगेनैवततोव्यावृत्तंदृष्टं यथाघटात्पटः । नच ब्रह्मशून्ययोःकश्चिद्व्यावर्तकधर्मोस्ति । कुतइत्यतआह ॥ निर्विशेषत्वेति ॥ शून्यवादिमायावादिभ्यांशून्यब्रह्मणोरितिशेषः । किंचनतावद्ब्रह्मणःशून्याद्विशेषोविरुद्धलक्षणयोगादितिवक्तुंयुक्तं । सकिंजगत्कारणत्वादिरूपतटस्थलक्षणयोगोवा सत्यत्वज्ञानत्वादिस्वरूपलक्षणयोगोवा । नाद्यः । मायावादिभिःशुद्धब्रह्मणोजगत्कारणत्वाद्यनंगीकारात् । कुतइत्यतआह ॥ निर्विशेषत्वेति ॥ अज्ञानोपहितस्यजगत्कारणत्वांगीकारस्तुशून्यवादेपिसमः संवृतियोगेनशून्यस्यापिशून्यवादिभिर्जगत्कारणत्वांगीकारात् । यथाहुःशून्यवादिनः । विश्वाकारंचसंवृत्यायस्यतत्पदमक्षयमिति । यथोक्तमनुव्याख्याने । नहिलक्षणभेदोस्तिनिर्विशेषत्वतस्तयोरिति । नद्वितीयः । मायावदिभिर्ब्रह्मणःपरमार्थतःसत्यत्वाद्यनंगीकारात् । कुतइत्यतआह॥ निर्विशेषत्वेति ॥ ननुपरमार्थतःसत्यत्वाद्यभावेपि अनृतविरोधित्वादिनैवसत्यत्वादिव्यवहारः । यथाहुरस्मन्मततत्ववेदिनः । अनृतजडविरोधिरूपमंतत्रयमलबंधनदुःखताविरुद्धमिति तथाचोक्तविधलक्षणप्रयुक्तएवशून्याद्ब्रह्मणोविशेषइतिचेन्न । शून्यवादिभिरपिशून्यस्योक्तविधलक्षणांगीकारात् । यथाहुःशून्यवादिनः । जाड्यसंवृतिदुःखांतपूर्वदोषविरोधियदिति । उक्तंचानुव्याख्याने । अनृतादिविरोधित्व

भा० । निर्विशेषत्वांगीकारात् ।

मुभयोश्चस्वलक्षणमिति । नापिविरुद्धधर्मयोगाच्छून्याद्ब्रह्मणोविशेषः । सचब्रह्मशून्ययोःकिंभावत्वाभावत्वंवा सत्वासत्वंवा दोषित्वगुणवत्त्वंवा हेयत्वोपादेयत्वंवाऽन्यद्वा । सर्वत्रापिदोषमाह ॥ निर्विशेषत्वेति ॥ शून्यवादिमायावादिभ्यांशून्यब्रह्मणो रितिशेषः । नन्वन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चेत्यादिनाभाष्यकृता(ज्ञानमा)नंदाविषयानुभवोनित्यत्वंचेतिसंतिधर्मा इतिपंचपादिकाकृताचब्रह्मणिधर्माःस्वीकृताइतिचेत् सत्यं । नतुपरमार्थतः काल्पनिकास्तुभावत्वादयोधर्माःशून्यवादिनाशून्य स्याप्यंगीक्रियंतएव । यथाहुःशून्यवादिनः । भावार्थप्रतियोगित्वंभावत्वंवानतत्वतः । नास्यसत्वमसत्वंवानदोषोगुणएववा । हेयो पादेयरहितंतच्छून्यंपदमक्षयमिति । ननुधर्मांगीकारस्तावज्ज्ञायते । सचपरमार्थतोनेतिकथंज्ञायतइत्यतआह ॥ निर्विशेषत्वे ति ॥ यदिब्रह्मणोधर्मांगीकारःपारमार्थिकःस्यात् तदानिर्विशेषत्वांगीकारविरोधःस्यादित्यर्थः । ननुब्रह्मेतिशून्यमितिसंज्ञाभेदा देवतयोर्भेदसिद्धिरितिचेत्न । निमित्तभेदरहितसंज्ञाभेदस्यार्थवैलक्षण्याप्रयोजकत्वात् । तथाहि ब्रह्मशब्दस्यकिंब्रह्मणिमुख्य वृत्तिरमुख्यवृत्तिर्वा आद्येपिकिंयोगोरूढिर्योगरूढिर्वा । नाद्यः । ब्रह्मशब्दस्ययौगिकार्थोहिगुणपूर्णत्वं अथकस्मादुच्यते ब्रह्मेति बृहंतोह्यस्मिन्गुणाइत्यादिश्रुतेः । नचत्वन्मतेब्रह्मणस्तद्युक्तं कुतइत्यतआह ॥ निर्विशेषत्वेति ॥ देशकालवस्तुपरिच्छेदराहि त्यरूपमहत्वमेवब्रह्मशब्दप्रवृत्तिनिमित्तमितितुमंदं तस्यशून्यवादिभिःशून्येप्यंगीकृतत्वेनतथाविधयोगवृत्तिमतोब्रह्मशब्दस्यत द्वैलक्षण्याप्रयोजकत्वात् । यथाहशून्यवादी जाड्यसंवृतिदुःखांतपूर्वदोषविरोधियदिति । नापिद्वितीयः । असिद्धेरपसिद्धांताच्च । यथाघटादिशब्दानांयथाघटत्वादिकमेवप्रवृत्तिनिमित्तमेवंब्रह्मण्यपिब्रह्मशब्दप्रवृत्तिनिमित्तंकिंचिद्वाच्यं । नचतद्युक्तं कुतइत्यत

आह ॥ **निर्विशेषत्वेति** ॥ एतेनतृतीयोपिनिरस्तः । अमुख्यवृत्तिरितिद्वितीयपक्षेपिकिंब्रह्मशब्दस्यब्रह्मणिगौणीवृत्तिर्लक्षणावा । नाद्यः । प्रवृत्तिनिमित्तातिरिक्तमुख्यार्थगुणयोगेहिगौणीदृष्टा । नचात्रमुख्यार्थगुणयोगोस्ति । कुतइत्यतआह ॥ **निर्विशेषत्वेति** ॥ नद्वितीयः । मुख्यार्थसंबंधिनिअर्थांतरेवृत्तिर्लक्षणा । नचब्रह्मणोमुख्यार्थसंबंधोस्ति । कुतइत्यतआह ॥ **निर्विशेषत्वेति** ॥ ब्रह्मणिब्रह्मशब्दवच्छून्यवादिनाशून्येपिशून्यशब्दस्यलक्षणांगीकाराच्च । यथोक्तंशून्यवादिना । अवाच्यंसर्वशब्दैस्तल्लक्ष्यतेचाखिलैःपदैरिति । तस्माच्छून्यब्रह्मणोरविशेषान्नपरप्रमेयेशून्यवादान्मायावादस्यवैलक्षण्यं । अपरप्रमेयेवैलक्षण्याभावोपपादनंतत्प्रागेवकिंचित्कृतमितिचतुर्थोपिनिरस्तएवेति । एवंमायावादस्यशून्यवादसाम्यमुपपाद्योपसंहरति ॥ **अतइति** ॥ **एवंसुखदुःखादेर्मिथ्यात्वाभावाज्जीवस्यसमानत्वंनयुज्यतइतिस्थितं** । ननुजीवपक्षइवेश्वरपक्षेपिबाधकमस्ति ईश्वरस्यस्वप्नाभेदाभावेन स्वप्नोभूत्वेत्यस्यानुपपत्तेरित्यतःतदनूद्यव्याचष्टे ॥ **स्वप्नोभूत्वेति** ॥ जीवपरतयायथाश्रुतएवार्थःकिंनस्यादित्यतआह ॥ **नहीति** ॥ तस्याप्यवस्थाभिन्नत्वादित्यर्थः । स्वप्नइत्यस्यस्वापकइत्यर्थंव्युत्पाद्यदर्शयति ॥ **स्वापमिति** ॥ ७ ॥ ननुतथापीश्वरस्यजननमरणादिकर्तृत्वासंभवात्तत्पक्षे सवाअयंपुरुषोजायमानो म्रियमाणः सयत्रप्रस्वपिति इमंलोकमतिक्रामतीत्यादिकंनयुक्तमित्यतआह ॥ **जायमानइति** ॥ विवाहंपाणिग्रहणंकृत्वाकारयित्वा विजानीहिविज्ञापय जज्ञे

---

भा० । अतःशून्यवादिनएवतेपि । स्वप्नोभूत्वास्वापकोभूत्वा । नहिजीवोपिस्वप्नएवभवति । स्वापंनयतीतिस्वप्नइतिचव्युत्पत्तिः ॥ ७ ॥ जायमानोम्रियमाणःस्वपितीत्यादितु कृत्वाविवाहंतुकुरुप्रवीराः । तदेतन्मेविजानीहियथाहंमंदधीर्हरे । सुखंबुध्येयदुर्बोधंयेषांभवदनुग्रहात् ।

जनयामास द्रष्टुर्दर्शयितुः तदेतन्मेविजानीहीत्येतावत्युदाहर्तव्येऽप्यंतर्णीतणिजर्थत्वख्यापनाययथाहमित्याद्युदाहृतं। एवंसवाअ यंजायमानइत्यादिकमंतर्णीतणिच्त्वेनोपपन्नमितिप्रयोगोपदर्शनेनोपपाद्यतथाप्रयोगेकिंनिमित्तमित्यतःप्रयोजनंनियामकसूत्रेण दर्शयति ॥ स्वातंत्र्येति॥ स्वातंत्र्यस्नेहयोर्विवक्षितयोर्णिच् अंतरंतर्गतोनतुप्रयुज्यतइत्यर्थः। प्रकृतेस्वातंत्र्यरूपार्थप्रदर्शनायांऽ तर्णीतणिच्प्रयोगइतिभावः। एवंजीवपरतयाप्रतीयमानानामपिलिंगानांविष्णौसावकाशत्वमुक्तं तदनंगीकृत्यजीवपरत्वांगीकारे बाधकांतरमाह ॥ कथमन्यथेति ॥ अन्यथाजीवपक्षे स्वयमेवबाह्यव्यापारविरामकर्तृत्वस्यस्वाप्नपदार्थस्रष्टृत्वस्यसर्वकर्तृत्वस्य चजीवेअसंभवात्। स्वप्नेत्यादिमंत्रस्यासंगतेश्च। नह्ययंजीवप्रतिपादको येनसंगतिःस्यादितिभावः। नन्वीश्वरनिष्ठमपिसमानत्व स्वप्नपदार्थकर्तृत्वादिकंजीवस्यापिसंभवत्येव। तस्येश्वराभिन्नत्वेनस्वरूपैक्यविवक्षयासमानत्वाद्युक्तिसंभवात् । नचैवंयथाऽभे दाभिप्रायेणसमानत्वादिकंजीवेनीयते तथाजायमानत्वादिकमप्यभेदाभिप्रायेणेशेनेतुंशक्यतइतिकिंजीवएवेतिनिर्बंधेकारणमि तिवाच्यं । चैतन्यैक्याभिप्रायेणेशगतसमानत्वादेर्जीवेमुख्यवृत्तिवदीश्वरेजायमानत्वादेर्विशिष्टनिष्ठस्यामुख्यतोपिवक्तुमयो गात्। नचजीवेशाभेदएवकुतइतिवाच्यं। तदुभयप्रापकलिंगसामानाधिकरण्यान्यथानुपपत्त्यैवतत्सिद्धेः। नचजीवप्रापकलिंगा

---

भा०। जज्ञेवहुज्ञंपरमाभ्युदारं द्रष्टुश्चक्षुषोनास्तिजिह्वेत्यादिवदंतर्णीतणिच्त्वेनभवति। स्वातंत्र्यस्नेहयोरंतर्णिजितिहिसूत्रं। कथमन्यथा स्वयंनिहत्य स्वयंनिर्मायस्ववंत्यःसृजते। सह्हिकर्तास्वप्नेनशारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीतीत्यादियुज्यते।

निरीशपरतया व्याख्यातानीतिवाच्यं । एवमभेदेनैवोपपत्तौ तथा व्याख्याने नियामकाभावादित्यत आह ॥ उक्तार्थेचेति ॥ यद्युभयप्रापकलिंगान्यथानुपपत्त्या जीवेशाभेदो विवक्षितः स्यात् । तदा स्वप्नेनेत्यादिमंत्रा असंगता विरुद्धाश्च स्युः । उक्तार्थे खल्वेते मंत्राः प्रमाणत्वेनोक्ताः जीवेशाभेदो ह्युक्तार्थः । अत्र च जीवेशभेद एवोच्यत इति तत् कुत इति चेत् । असुप्तत्वसुप्तत्वव्यपदेशात् शुक्रमादायेति कर्मकर्तृव्यपदेशाच्च । कर्मकर्त्रोरुत्सर्गतो भेदस्यैव सत्वात् । न च कर्तेश्वरः कुत इति वाच्यं । हिरण्मयत्वैकहंसत्वादिविशेषणात् । कुलायाद्बहिश्चरणस्यापि स्वप्नाद्यवस्थायां जीवस्य स्वतोऽसंभवात् । अमृतस्येश्वरस्य संभवात् । न तं पश्यति कश्चनेत्यदृष्टत्वोक्तेश्च । न च जीवस्यादृष्टत्वमस्ति । तं नायतं बोधयेदित्ययोग्यं प्रत्यनुपदेश्यत्वोक्तेश्चेति । तस्मादुक्तरीत्या जीवप्रापकलिंगानामीश्वरपरत्वेनैव व्याख्यानं युक्तं । न तु जीवेशाभेद इत्यर्थः । ननु मंत्रेष्वपि जीवेशाभेद एव विवक्षितः । अन्यथा कथमसुप्तत्वादीश्वरलिंगानां स्वप्नांतमुच्चावचमीयमान इति भयानि पश्यन्निति जीवलिंगानां च सामानाधिकरण्यमुपपन्नं स्यादिति चेत् । न स्वप्नांतमुच्चावचमीयमान इत्यस्यान्यथा व्याख्यास्यमानत्वादिति भावेन जक्षदुतेवापि भयानि पश्यन्निति वाक्यमीश्वरपरतया व्याचष्टे ॥ ईश्वर इति ॥ जक्षभक्षहसनयोरिति धातोरिति भावः । तथा चेदमपि जीवेशभेदपरमिति भावः । ननु स्वप्नेन शारीरमित्यादौ भेदप्रतिपादनेपि तत्र तात्पर्याभावान्न तद्विरोध इत्यत आह ॥ प्राज्ञेनेति ॥ इत्यादिषु सर्वत्र संबंधः । आदिपदेन एतस्यैवानंदस्यान्यानि भूतानीत्यादिवाक्यसंग्रहः । चश

---

भा० । उक्तार्थे च स्वप्नेन शारीरमित्यादि जीवेश्वरभेदमंत्रा उक्ताः प्रमाणत्वेन । ईश्वरो जीवस्य भयानि पश्यन् जक्षदिव हसदिव । प्राज्ञेनात्मनासंपरिष्वक्तः प्राज्ञेनात्मनान्वारूढ इत्यादिषु चाभ्यासेन सर्वत्र भेद एव निर्दिश्यते ।

व्देनस्वप्नेनशारीरमित्यादिमंत्रसमुच्चयः । अभ्यासस्यचतात्पर्यलिंगत्वमितिभावः । ननुप्राज्ञेनात्मनासंपरिष्वक्तइतिसुषुप्तिप्रकरणे प्राज्ञेनात्मनान्वारूढइत्युत्क्रांतिप्रकरणेचजीवेशभेदःप्रतिपाद्यतइतिकुतोऽवगतमितिचेत् संपरिष्वक्तान्वारूढशब्दबलादेव हेत्वं तरमाह ॥ सुषुप्त्युत्क्रांत्योरिति ॥ सुषुप्त्युत्क्रांत्योःप्रकरणयोःजीवेशयोःभेदेनव्यपदेशादितिसूत्रार्थः । एतेनसवाएषएतस्मि न्संप्रसादेरत्वेत्यादौरमणचरणकर्तृत्वपुण्यपापफलशुभाशुभद्रष्टृत्वस्वापादिद्रष्टृत्वरूपजीवलिंगस्यपुण्यपापानन्वागतत्वासंगत्व रूपेशलिंगस्यचसामानाधिकरण्यान्यथानुपपत्त्याजीवेशाभेदोविवक्षितइत्यपिपरास्तं । सर्वज्ञत्वेनस्वापादिद्रष्टृत्वस्येशएवोपपत्तेः । इतरलिंगानामीशेसावकाशत्वस्यवक्ष्यमाणत्वाच्च । ननु स्वप्नेनशारीरमितिनजीवेशभेदःप्रतिपाद्यते किंतुअसुप्तोजाग्रदवस्थाप न्नोजीवःशारीरंसुप्तमात्मानंस्वप्नेनाभिप्रहत्येत्यवस्थाभेदेनजीवभेदएव एवंचसुषुप्त्युत्क्रांतिप्रकरणयोरपितद्भेदपरत्वमेवेत्यतआह ॥ नचेति ॥ किमुपारमार्थिकइतिकैमुत्यद्योतनायापिशब्दः।स्यादेतत् । यदि जागराद्यवस्थाभेदेनैकस्यैवजीवस्यभेदएवस्यात् । नचसोस्ति प्रमाणाभावादित्यर्थः । पारमार्थिकभेदाभावेपिव्यावहारिकःस्यादित्यतउक्तं॥ व्यावहारिकोपीति ॥ त्वन्मतेजीवभे दस्यव्यावहारिकस्यसत्वादस्यतत्परत्वेकथंचिदुपपत्तिः । अवस्थाभेदोपाधिकजीवभेदपरत्वांगीकारेतु नकथंचिदितिभावः । किंचा वस्थाभेदोपाधिकोव्यावहारिकोजीवभेदोयदिस्यात् । तदायथाव्यावहारिकभेदाभिप्रायेण द्वासुपर्णेति द्वाविमौपुरुषावितिचप्र

भा० । सुषुप्त्युत्क्रांत्योर्भेदेनेतिचंनिर्णयात्मकंभगवद्वचनं । नचावस्थाभेदेनजीवभेदोव्यावहारिकोप्यस्तीत्यत्रकिंचिन्मानं ।

योगोस्ति। तथाजाग्रत्स्थःस्वप्नस्थश्चेतिद्वावितिप्रयोगःस्यात्। नचसोस्तीत्याह॥नहीति॥ ननुवैदिकप्रयोगाभावेपिलौकिकप्रयो
गःस्यादित्यतउक्तं॥लौकिकइति॥ ननुलोकेपिज्ञानिनांतादृशप्रयोगासंभवेपिअज्ञप्रयोगःस्यादित्यतआह॥अज्ञप्रयोगोपीति॥
ननुयद्यपिज्ञानिनांतादृशप्रयोगोनसंभवति। प्रयोगमूलभूतस्यज्ञानस्यप्रमारूपस्य भ्रमरूपस्यवाऽसंभवात्।तथाप्यज्ञप्रयोगःसंभव
ति।प्रयोगमूलभूतप्रमारूपज्ञानासंभवेपिभ्रमरूपज्ञानसंभवादित्यतआह॥नचेति॥ तादृशःजाग्रत्स्थःस्वप्नस्थश्चद्वावित्येवमाकारः
अस्तीत्यनुवर्तते। एतावत्पर्यंतंमयास्वप्नोदृष्टइतिउत्थितस्यप्रत्यभिज्ञानेनविशेषदर्शनस्ययएवाहमेतावत्पर्यंतंसुखमस्वाप्संसएवेदा
नींदुःखमनुभवामि। यएवाहंस्वप्नेगजादिकमद्राक्षंसएवेदानींघटादिकमनुभवामीतिचविशेषदर्शनस्य सर्वजनसाधारणत्वादिति
भावः।यद्वानन्वत्रश्रुत्यनुमानयोरभावेपिप्रत्यक्षप्रमाणंस्यादितिचेन्न तत्प्रत्यक्षंकिंस्वकीयंपरकीयंवा। नाद्यः। तदभावात्।नद्वितीयः।
तस्यप्रत्यक्षत्वेनव्यवहारानुमेयत्वात्। नचासावस्तीत्याह॥नहीति॥ ननुव्यावहारिकतादृशभेदाभावेपिप्रातिभासिकःस्यादेवेत्यत
आह॥ नचेति॥ उक्तएववाक्यद्वयार्थः। जीवपक्षइत्यादिनोक्तमुपसंहरति॥तस्मादिति॥ जीवपक्षेबाधकसद्भावात्।
साधकाभावाच्चेशपक्षेचतदभावादित्यर्थः। एवशब्दोजीवव्यावर्तकः। अत्रात्मैवास्यज्योतिरित्यादौ सर्वकर्तृत्वेनेति सहकर्ते
ति वाक्यार्थकथनेनजीवपक्षेबाधकंईशपक्षेसाधकंचोक्तं। एतेनसहिकर्तेतिवाक्यंजीवपक्षेनयुज्यतइतियदुक्तं तन्न। कर्तृत्वमात्र
स्यजीवेपिसत्त्वादित्याशंकापिपरास्ता। सर्वकर्तृत्वस्यैवतद्वाक्यार्थत्वात् तस्यचजीवेऽसंभवात्। अन्यथातस्यपूर्वोक्तस्वाप्नपदार्थ

---

भा०। नहिजाग्रत्स्वप्नस्थश्चद्वावित्यज्ञप्रयोगोपिकश्चिदस्तिलौकिकः। नचभ्रमस्तादृशः। तस्माद्भगवानेवात्रोच्यतेसर्वकर्तृत्वेन।

स्रष्टृत्वेहेतुत्वासंभवादितिभावः । वेशांताःपल्वलाइतिव्याख्यानमसत् । पुष्करिण्यइत्यनेनैवतेषामपिग्रहणसंभवेनपृथगुक्त्य
योगादितिभावेनतस्यपदस्यार्थमाह ॥ वेशांताइति ॥ इदंचपरलोकस्थानंचेत्यादिकमिदंप्रकरणमवस्थालोकमोक्षपरत्वेनातो
द्युसुप्तिमोक्षाणामभिप्रायादिदंवचइतिव्याख्यातं तस्यप्रकरणस्यसुषुप्तिमोक्षपरत्वेनियामकांतरमाह ॥ सुषुप्सीति ॥ उभय
विवक्षयैव नत्वेकमात्रविवक्षयेत्येवार्थः तद्वचनंअत्रपिताऽपिताभवतीत्यादिवचनमित्यर्थः। अपिशब्देनपूर्वोदाहृतप्रमाणसंग्रहः।
सूत्रकर्त्रापीत्यर्थः । तद्वचनमुदाहरति ॥ स्वाप्ययेति ॥ यदुक्तंप्रदीपवदावेशस्तथाहिदर्शयतीतिपूर्वसूत्रेमुक्तस्यदुःखाद्यनु
भवोनास्तीत्यत्रदर्शयतिहीत्यंशेन । तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतीतिवाक्यंप्रमाणमिति तदयुक्तं । तीर्णोहीतिवाक्य
स्यस्वर्गस्थपरत्वसंभवेनमुक्तानामदुःखित्वेप्रमाणत्वासंभवात् । नचस्वर्गस्थस्यकथंदुःखाभावइतिवाच्यं । स्वर्गेलोकेनभयं
किंचनास्ति नतत्रत्वंनजरयाबिभेतीत्यादिनास्वर्गेदुःखाभावसिद्धेरित्याशंकापरिहारायेदंसूत्रं । स्वाप्ययोमुक्तिः संपत्तिःसुप्तिः।
तीर्णोहीतिवाक्यंमुक्तिसुप्तिविषयमेव नस्वर्गविषयं । कुतः अत्रपिताऽपिताभवतिअनन्वागतंपापेनेत्यादिनापितृत्वपुण्यपापा
द्यसंगतत्वादिलिंगश्रवणात् । अस्यवाक्यस्यसुप्तिमुक्तिविषयत्वस्याविष्कृतत्वात्स्फुटंप्रतीयमानत्वात् । स्वर्गस्थस्यश्राद्धादिभोक्तु
स्तदसंभवादितिसूत्रार्थः । ननुयदुक्तंसुषुप्तिमोक्षोभयविवक्षयैवतद्वचनमिति तदयुक्तं । सूत्रेऽन्यतरशब्देनएकविवक्षयातद्वच

---



भा० । वेशांतावेश्यागृहाः । सुषुप्तिमोक्षोभयविवक्षयैवतद्वचनमपिभगवताप्युक्तंस्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीति ।

नमित्युक्तत्वात् । अन्यथास्वाप्ययसंपत्त्यपेक्षमित्येतावतापूर्णत्वेनान्यतरपदवैयर्थ्यापत्तेःइत्यतआह॥उभयापेक्षमिति ॥ स्वाप्ययसंपत्त्यपेक्षमित्युक्तइत्यर्थः । यदिस्वाप्ययसंपत्त्यपेक्षमित्युच्यते तदास्वाप्ययेमोक्षेयासंपत्तिःसुप्तिःतदपेक्षंतद्विषयमितिप्रतीत्यामोक्षेपिसुप्तिरस्तीत्याशंकास्यात् नचाज्ञाननिवृत्तिरूपेमोक्षेकथमज्ञानकार्यसुप्तिशंकास्यादितिवाच्यं । प्रेक्षावतांतच्छंकाऽभावेपिमंदस्यमोक्षस्याज्ञाननिवृत्तिरूपत्वंसुप्तेरज्ञानकार्यत्वंवाऽजानतःशंकासंभवादित्यर्थः । किंततइत्यतआह ॥ अतइति ॥ अतएवमंदस्याशंकानिवृत्त्यर्थमेवेत्यर्थः । ज्ञापयितुमेवेतिवासंबंधः । ननुस्वाप्ययसंपत्त्योरन्यतरापेक्षमित्युक्त्यामोक्षेसुप्तिरस्तीत्याशंकानिवृत्तिरेवभवति । द्वंद्वसमासप्रदर्शनेनतत्पुरुषत्वभ्रांतिनिवारणात् । नतुमोक्षेसुप्तिरेवनास्तीतिज्ञापनं । ज्ञापकानुक्तेः । तस्मादतएवान्यतरापेक्षमित्युक्तमित्येववक्तव्यं नतुमोक्षेसुप्तिरेवनास्तीतिज्ञापयितुमिति । अतएवोक्तंकर्मनिर्णये मोक्षेपिसुप्तिरस्तीत्याशंकानिवृत्त्यर्थमेवान्यतरपदमिति तत्कथमेतदितिचेत्सत्यं । मोक्षेसुप्तिर्नास्तीतिकृत्वाखलुतच्छंकानिवारणंकर्तव्यं अन्यथातदपिसूत्रस्यार्थांतरंस्यादितितन्निरासायव्यर्थपदप्रयोगानुपपत्तेः । तथाचमोक्षेसुप्तिरस्तीतिशंकानिवारणेनैवतत्रसुप्तिर्नास्तीतिज्ञापितमितिभावः । ननुसंबंधेषष्ठीमंगीकृत्यस्वाप्ययसंपत्त्योरपेक्षमित्येवकुतोनकृतं तावताप्युक्तशंकापरिहारात् अन्यतरपदप्रयोगःकिमर्थइतिचेत् न । अनेकार्थस्यतीर्णोहीतिवाक्यस्यैकार्थव्याख्यानेरुचिरेवव्याख्यातुःप्रमाणं नतुमुख्यामुख्यताविशेषोस्तीतिसूचनायान्यतरशब्दस्यसार्थक्यादितिभावः । अतएवसूत्रभाष्येसूत्रनिर्देशानुसारेणमोक्षेसुप्तौचेतिवक्तव्येमुख्यामुख्यतावि

भा० । उभयापेक्षमित्युक्तेमोक्षस्यसुषुप्तिरितिमंदस्याशंकास्यादतोमोक्षेसुप्तिरेवनास्तीतिज्ञापयितुमन्यतरापेक्षमित्युक्तं ।

शेषाभावज्ञापनायैवसुप्तौमोक्षेचेतिव्यत्यासेनोक्तिः । यत्रयस्यरुचिःसएवार्थोह्यस्यवाक्यस्यव्याख्येयइतिभावेनैववाशब्दस्यप्रयो गश्चेति । अतएवतत्त्वप्रकाशिकायां इदंवाक्यंसुप्तिमुक्तिविषयमितितीर्णोहीतिवाक्यस्योभयविषयत्वमुक्तं । एवकारव्यावर्त्य माह ॥ नत्विति ॥ नतुस्वाप्ययसंपत्त्योर्मध्येन्यतरएकएवार्थोविवक्षितोनतूभयमितिज्ञापयितुमन्यतरापेक्षमित्युक्तमित्यर्थः । कुतइत्यतआह ॥ ज्ञानइति ॥ ज्ञानेज्ञातव्यइत्यर्थः । यदिस्वाप्ययसंपत्त्योर्मध्येएकएवार्थोविवक्षितःस्यात्तदास्वाप्ययापेक्ष मित्येववासंपत्त्यपेक्षमित्येववाब्रूयात् नतुविकल्पवाचकान्यतरशब्दप्रयोगः । वस्तुनिविकल्पायोगात् । नचसूत्रकारस्याप्ययमे वार्थइतिनिश्चयाभावादेवंप्रयोगइतिवाच्यं । सूत्रकृतोज्ञानेविरुद्धानेकाकारकल्पनायोगात् सूत्रकृतःसंशयायोगादितियावत् । अन्यथासूत्रस्यासंदिग्धत्वव्याहतेरित्यर्थः । एवंतीर्णोहीतिवाक्यस्यसुप्तिमोक्षोभयविषयत्वेनेदंप्रकरणंसुप्तिमोक्षोभयविवक्षयैवप्र वृत्तमितिस्थितं । किंततइत्यतआह ॥ अतइति ॥ यतउक्तरीत्येदंप्रकरणंसुप्तिमोक्षोभयपरं यतश्चप्रमाणेनतथाव्याख्यातं अ तोस्मिन्प्रकरणेसुप्त्याद्यवस्थाश्चसर्वेलोकाश्चपृथिव्यंतरिक्षद्युरूपामोक्षाश्चप्रतिपाद्यतयाविवक्षिताइत्यर्थः । अप्रतीतेःसर्वावतइति पदमनूद्यव्याचष्टे ॥ आसमंतादिति ॥ आइत्यनुवादेनसमंतादितिव्याख्यानं सर्वावतइत्येतत् षष्ठ्यंतंलोकस्येत्यस्यविशेष णमितिव्याख्यानमसत् । सर्ववतइत्येववक्तव्यतयासर्वावतइत्ययोगात् मतुपोव्यर्थत्वाच्च । सर्वस्यलोकस्यैकदासुप्त्यभावाच्चेति भावेनसर्वावतइत्येतत् द्वितीयाबहुवचनमित्यंगीकृत्यतस्यतात्पर्यंवदन्अन्वयमाह ॥ सर्वज्ञानानीति ॥ सर्वजाग्रत्पदार्थवि

भा० । नत्वन्यतरएवार्थइति । ज्ञानेविकल्पायोगात् । अतोवस्थाश्चलोकाश्चसर्वेविवक्षिताः । सर्वावतःआसमंतात्सर्ववतःसर्वज्ञानान्युपादाय ।

षयज्ञानानीत्यर्थः । अनेनसर्वविषयत्वेनेषामस्तीतिसर्ववतइतिव्याख्यातं । स्वेनभासास्वेनज्योतिषेत्यत्रपुनरुक्तिपरिहारायभाज्यो तिःशब्दयोःअर्थभेदमाह ॥ बाह्यप्रकाशइति ॥ वर्चोरूपइत्यर्थः । नतत्रानंदामुदःप्रमुदइत्यत्रपुनरुक्तिपरिहारायानंदादि शब्दार्थमाह ॥ सुखमिति ॥ बुद्ध्याविविक्तस्योत्थमित्यस्यप्रकृष्टविषयादित्यत्रापिसंबंधः । शुक्रमादायपुनरेतिस्थानमि त्यस्यशुक्रंशुद्धंज्योतिष्मदिंद्रियादिमात्रारूपमुपादायपुनर्जागरितस्थानमेतीतिव्याख्यानमसत् । जीवस्यस्वयमेवेंद्रियादाना योगादितिभावेनशुक्रशब्दार्थमाह ॥ शुक्रमिति ॥ परपक्षेबाधकस्यस्वपक्षेतदभावस्यचसूचनायादायेत्यस्यानुवादः । जी वेशुक्रशब्दंनिर्वक्ति ॥ शोकेनेति ॥ हिरण्मयश्चैतन्यज्योतिःस्वभावइतिव्याख्यानमपदार्थवर्णनंप्रमाणविरुद्धंचेतिभावे नद्वेधाव्याचष्टे ॥ रत्येति ॥ रत्यानंदाविति क्रमेणरेफणकारार्थोक्तिः । स्वरूपतःकालतश्चप्राचुर्यमयडर्थइतिभावेनपूर्णनित्या वित्युक्तं । हीत्यस्यार्थोहिताविति निहितावित्यर्थः । स्वर्णेति हिरण्यमयएवहिरण्मयः । यकारलोपोनिर्वचनत्वात् । एकएवजाग्र त्स्वप्नेहलोकपरलोकादीन्हंतिगच्छंतीत्येकहंसइतिव्याख्यानंप्रमाणविरुद्धमितिभावेनव्याचष्टे ॥ प्रधानेति ॥ वायोरपिहंसरूपस द्भावात्प्रधानेत्युक्तं । नन्वीश्वरोजीवस्यस्वाप्नान्गजादीनंतरेवदर्शयति । तेषांवासनोपादानकत्वात् । यथोक्तं मनोगतांस्तुसं

---

भा० । वाह्यप्रकाशोभेत्युक्तोज्योतिरांतरउच्यते । सुखंस्वरूपभूतंयदानंदइतिकथ्यते । मुन्नामविषयोत्थंयत्प्रकृष्टविषयात्प्रमुदितिच । शुक्रंजीवमादाय । शोकेनरत्यायुक्तत्वाच्छुक्रोजीवउदाहृतइतिच । रत्यानंदौपूर्णनित्यौहितौतेनहिरण्मयः । स्वर्णवर्णतयावापिवासुदेवोहिरण्मयः । प्रधानहंसरूपत्वादेकहंसइतीरितइतिच ।

स्कारानंस्वेच्छयापरमेश्वरः। प्रदर्शयतिजीवायसस्वप्नइतिगीयते इति। तथाचवहिष्कुलायादमृतश्चरितत्वेतिवाक्यंतद्विरुद्धंस्यादित्यतआह ॥ अंशेनेति ॥ सामस्त्येनजीवस्यवहिर्नयनेशरीरस्यमृतकत्वापत्तिरित्यतउक्तं ॥ अंशेनेति ॥ जीवंदेवादिरूपं सर्वेषामंशव्यतिरेकाभावात् तदपिनसर्वदेत्युक्तं क्वचित्कदाचिदिति। तत्रनिदर्शनमाह ॥ फल्गुनमिति ॥ तर्हिंकागतिरुदाहृतप्रमाणस्येत्यतआह ॥ वासनारूपकानिति ॥ तथाचप्रायिकाभिप्रायंतद्वचनमितिभावः ॥ ८–११ ॥ किंततइत्यतआह ॥ अत इति ॥ अस्यदेवादिविशिष्टजीवकादाचित्कस्वाप्नवहिर्निर्गमनविषयत्वादित्यर्थः ॥ १२ ॥ स्वप्नांतमुच्चावचमीयमानमितिजीवलिंगसद्भावात्कथमेतत्प्रकरणंविष्णुपरमित्यतस्तद्व्याचष्टे ॥ उच्चेति ॥ रूपाणिदेवःकुरुतेवहूनीत्यस्यार्थोवहुरूपत्वमायातीति । उतेवस्त्रीभिःसहमोदमानइतीवशब्दात्स्त्रीभिर्मोदोमृषेतिप्रतीतिनिरासायवशब्दाभिप्रायमाह ॥ मोदरूपत्वतइति ॥ विडंवनमनुकरणं अनेनजक्षदुतेवेतीवशब्दस्याप्यभिप्रायउक्तः। नन्वस्यारामममाक्रीडनंस्वप्नपदार्थनिर्माणादिलक्षणमेवपश्यंतिजनाः। कश्चनतंनपश्यतीतिकथं। एवंविधकर्मकर्तृत्वेनमुक्तैर्दृश्यमानत्वादित्यतआह ॥ जीवस्येति ॥ एवंविधानिप्रमाणप्रसिद्धानिकर्माणि 521

---

भा० । अंशेनजीवमादायकचिदीशोवहिर्नयेत् । स्वप्नेपुफल्गुनंयद्वत्कृष्णःकैलासमानयत् । वासनारूपकान्प्रायस्त्वंतरेवप्रदर्शयेत् ॥ ८–११ ॥ अतोवहिःकुलायादित्यपिवाङ्नविरुध्यतइतिच ॥ १२ ॥ उच्चावचेपुरूपेपुप्रविशन्पुरुपोत्तमः । वहुरूपत्वमायातिस्वप्नेसजगतःप्रभुरितिच । मोदरूपत्वतोविष्णोस्त्रीभिर्मोदोविडंवनं ॥ १३ ॥ जीवस्यमृतिकालेचस्वप्नकालेचकेशवः । एवंविधानिकर्माणिकुर्वाणोपिनदृश्यते ।

कुर्वाणोपीत्युक्त्याऽऽराममित्यस्यार्थउक्तः । नदृश्यतेम्रियमाणादिभिः । तथाजागरितेसुप्ताविलस्यैवंविधानीतिपूर्वेणसंबंधः । भगवदज्ञानीजनस्तर्हिज्ञानिनावोधनीयइतिचेत्सत्यं । तथापिनसर्वइतिभावेन तंनायतंवोधयेदित्याहुरितिवाक्यंव्याचष्टे ॥ तथापीति ॥ अयतेभ्योज्ञानार्थप्रयत्नशून्येभ्यअयोग्येभ्यइतियावत् दुर्भिषज्यंहास्मैभवतियमेषनप्रतिपद्यतइतिवाक्यमन्वयक्रमेण व्याचष्टे ॥ यस्येति ॥ गोचरतांज्ञानविषयतां। अथोखल्वाहुर्जागरितदेशएवास्यैष इतिवाक्यंव्याचष्टे ॥ सुप्तिकालेपीति ॥ सुप्तिकालःस्वप्नसुषुप्तिकालः जीवस्याजागरणात्सकोपीतिविरोधस्फोरणायापिशब्दः। यानिह्येवजाग्रत्पश्यतितानिसुप्त इतिहेतुवाक्यंव्याचष्टे ॥ यानीति ॥ सुप्तेतिभावेक्तः । स्वप्नसुषुप्त्यवस्थायामित्यर्थः । तत्रहेतुमाह ॥ नित्येति ॥ ननुविष्णोःसर्वदाजीवंप्रतिस्वातंत्र्येणज्योतिष्ट्वादत्रसुप्तिकालइतिविशेषणंव्यर्थमित्यतआह ॥ नित्येति ॥ नित्यंसर्वदाजीवस्यविष्णवन्यस्वतंत्रप्रकाशशून्यत्वेपियदाजागरितेऽन्यदादित्यादिकंज्योतिर्भवेत् तदाश्रुतिप्रत्यक्षाभ्यांजीवस्यस्वतंत्रप्रकाशःकिंविष्णुरादित्यादिर्वेतिसंशयःस्यात् । विष्णुत्वकोव्यनुपस्थितावज्ञानंविष्णुःस्वातंत्र्येणप्रकाशकइत्यज्ञानं अन्यएवस्वातंत्र्येणप्रकाशकइतिभ्रमोवास्यात् ।अतोऽत्रायंपुरुषःस्वयंज्योतिर्भवतीति । वाक्येऽत्रेतिस्वप्नसुषुप्त्यवस्थाप्रदर्शकंविशेषणमुपात्तं । तदुपादानेचतदाज्योतिरंतराभावा

---

भा० । तथाजागरितेसुप्तौसुप्तैरेवतुदृश्यते । तथापिनांचतेभ्यस्तंज्ञानीब्रूयाज्जनार्दनं । यस्यगोचरतांविष्णुःकदाचिन्नप्रपद्यते । तस्यायतस्यपापत्यसेपजंनहिविद्यते । सुप्तिकालेप्ययंविष्णुःसदाजागरितात्मकः । यानिजागरितेपश्येत्तानिसुप्तेपिपश्यति । नित्यज्ञानस्वरूपत्वाद्भगवान्पुरुषोत्तमः । नित्यानन्यप्रकाशत्वेप्यन्यज्योतिर्यदाभवेत् । तदास्यात्संशयोऽज्ञानामित्यत्रेतिविशेषणमितिच ।

त्तत्कोटिकसंशयोवातत्स्वातंत्र्यभ्रमोवानेतिभावः । ननु जागरितदेशएवास्यैषइतिवाक्येअस्यजीवस्यएषःस्वप्नकालोजागरितदेशएवेतिजीवस्यस्वप्नावस्थायामपिजागरितत्वमुच्यतइतिकिंनस्यात् । सर्वेंद्रियोपरमलक्षणसुप्तौतदसंभवेपिस्वप्नावस्थायांतत्संभवादितिचेन्न । एवंवदताकिमीश्वरस्यजीवस्वप्नावस्थायांजागरितत्वमंगीक्रियते नवा । नचेत्प्रमाणविरोधः । आद्येत्वाह । ॥ जीवस्यापीति ॥ यदीश्वरवत्जीवस्यापिस्वप्नावस्थायांजागरितत्वमंगीक्रियते तदाएषस्वप्नकालोजागरितदेशएवेतिपूर्वेरस्येतिविशेषणंव्यर्थंस्यात् यदिस्वप्नकालःकिंचित्प्रतिजागरितोनस्यात्तदातद्व्यावर्तकत्वेनास्येत्यस्यसार्थक्यं जीवेश्वरावुभौप्रत्यपिस्वप्नकालस्यजागरणात्मकत्वेकिंव्यावृत्त्यर्थमस्येतिविशेषणंस्यात् तथाचवैयर्थ्यमेव।अस्मत्पक्षेतुजीवव्यावृत्त्यर्थंतदितिभावः। अतःऊर्ध्वंविमोक्षायब्रूहीत्युक्त्यापूर्वोक्तंमोक्षायनभवतीतिशंकांपरिहरति ॥ पूर्वोक्तमपीति ॥ तर्हिकिमर्थंविमोक्षायब्रूहीतिप्रार्थनमित्यतस्तद्व्याचष्टे ॥ अतऊर्ध्वमिति ॥ अन्यथाविशब्दवैयर्थ्यमितिभावः । मोक्षस्यान्यत्साधनंविमोक्षस्यान्यत्साधनमितिकुतःकश्चविशिष्टमोक्षइत्यतआह ॥ स्वयोग्येति ॥ यानिह्येवजाग्रत्पश्यतितानिसुप्त इतिवाक्येसुप्तशब्देनसुप्तिमात्रमुच्यतइतिप्रतीतिंनिवारयति ॥ स्वप्नेति ॥ जागरितदेशएवास्यैषइतिपूर्ववाक्येजीवस्यस्वप्नसुषुप्तिकालोपिअस्यजागरितदेशएवेत्युक्तं तत्राप्येषइतिसुप्तिकालमात्रग्रहणेस्वप्नावस्थायामीश्वरस्यजागरणाभावापत्तेः । तत्रहि यानिह्येवजाग्रत्पश्यतितानिसुप्त इतिवाक्येनहेतु

---

भा० । जीवस्यापिस्वप्नावस्थायांजागरितत्वेऽस्येतिविशेषणंव्यर्थं । पूर्वोक्तमपिमोक्षायैवभवति । अतऊर्ध्वंविशिष्टमोक्षायब्रूहि । स्वयोग्यभगवद्दृष्टेःसर्वैर्मुक्तिरवाप्यते । पुनर्ज्ञानांतराधिक्यात्सुखाधिक्येविमोक्षगमितिब्रह्मतर्के । स्वप्नसुषुप्त्युभयाभिप्रायेणतानिसुप्तइत्युक्तं ॥

रुच्यते । तत्रयदिसुप्तशब्देनसुप्तिमात्रंगृह्यते तदास्वप्नकालस्येश्वरजागरितदेशत्वंनोपपादितंस्यात् अतःस्वप्नसुषुप्त्युभयाभिप्रायेण तानिसुप्तइत्युक्तमित्यर्थः। नन्वेवंतर्हि सवाएषएतस्मिन्संप्रसादेरत्वेत्यत्राप्येतस्मिन्संप्रसादइत्यनेनस्वप्नसुप्त्योरुभयोरपिपरामर्शःकर्तव्यः पूर्वमुभयोःप्रकृतत्वात् नचासौयुक्तः तथात्वेएतस्मिन्संप्रसादेरत्वास्वप्नायैवाद्रवतीत्युक्त्यनुपपत्तेरित्यतआह॥तत्रेति॥ उभयोःप्रकृतत्वेपिबाधकवशादेकस्यैवपरामर्शोयुज्यतेइत्यत्रप्रमाणमाह ॥यत्रेति॥ उभयोःप्रकृतत्वेउभयपरामर्शेबाधकाभावेनयत्रोभयविवक्षास्यात्तत्रोभयोःपरामर्शःस्यात्। यथासवाअयंजायमानइत्यत्रपूर्वप्रकृतेशजीवोभयपरामर्शः। यत्रक्वचिदुभयपरामर्शेबाधकसद्भावेनैकस्यविवक्षास्यात्तदैकस्यापिपरामर्शोभवेत् नत्वेकविवक्षायांद्वयोःपरामर्शइत्यर्थः॥ १४॥स्वप्नांतंचबुद्धांतंचेत्यत्रांतशब्दस्यप्रकृतेनाशनिर्णयार्थत्वासंभवात्स्वप्नांतपदंव्याचष्टे॥स्वप्नाख्येति॥ उपलक्षणमेतत् बुद्धांतशब्दोप्येवंव्याख्येयः। अंतशब्दस्यस्थानवाचकत्वेऽभिधानमाह॥ अंतइति ॥ एतेनस्वप्नांतायैवेत्यस्यस्वप्नस्यांतोलयोयस्मिन्सस्वप्नांतःसंप्रसादइतिव्याख्यानमपहस्तितंभवति ।तथासतिबुद्धांतायैवजागरितस्थानायैवेतिस्वप्नांतेस्वप्नस्थानेइतिचत्वदुक्तेरेवायोगात् । स्वप्नांतंचबुद्धांतंचेत्यत्रस्वप्नांतशब्दस्यस्वप्नपरत्वांगीकाराच्च।ननुसुषुप्तिस्वप्नजाग्रद्रूपस्थानत्रयस्यपूर्वप्राप्यत्वेनोक्तत्वात्स्वप्नांतंबुद्धांतंचेत्यत्रद्वयोरेवग्रहणंकथमित्यतआह

---

भा० । तत्रसुषुप्तिमात्राभिप्रायेणसवाएषएतस्मिन्संप्रसादइत्याह । यत्रोभयविवक्षास्यात्परामर्शस्तदोभयोः । एकस्यापिभवेन्नैकविवक्षायांक्वचिद्द्वयोरितिशब्दनिर्णये ॥ १४ ॥ स्वप्नाख्यातंस्थानंस्वप्नांतं । अंतःस्थानंस्थलंवासःप्रदेशइतिचोच्यतइतिच ।

ए

॥स्वप्नांतमिति॥ नकेवलंतानिसुप्तइत्युभयाभिप्रायेणेत्यपिशब्दः। नकेवलंस्वप्नांतायैवेत्यत्रस्वप्नांतशब्दःस्वप्नसुषुप्त्युभयाभिप्रायेण किंत्वत्रापीतिवापिशब्दार्थः । सवाएषएतस्मिन्संप्रसादेरत्वेत्यादिखंडत्रयस्यजीवपरत्वप्रतीतिनिरासायतात्पर्यमाह ॥ शुभाशुभमिति ॥ अनेनदृष्ट्वैवपुण्यंचपापंचेत्येतदुक्तार्थं । स्वप्नइतिस्वप्नसुषुप्त्युभयाभिप्रायेण । चापिशब्दावितरेतरसमुच्चये । दृष्ट्वैवेत्येवकारव्यावृत्त्यर्थमुक्तं सयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवतीति तस्यार्थमाह ॥ असंस्पृष्टइति ॥ पुण्यफलभोक्तृत्वेनतत्संसर्गसत्वात्कथंतेनानन्वागतइत्यतआह ॥ दुःखैरिति ॥ जीवपक्षेनैतदुपपन्नमितिभावः । संप्रसादेरत्वास्वप्नायाद्रवति । स्वप्नेरत्वाबुद्धांतायाद्रवति बुद्धांतेरत्वास्वप्नांतायाऽद्रवतीत्युक्तेःतात्पर्यं ॥ पुनःपुनश्चरतीति ॥ यदिस्वप्नांतशब्दःस्वप्नसुषुप्त्युभयाभिप्रायेण तर्हिस्वप्नाद्यवस्थात्रयप्राप्त्योभेकूलेइतिदृष्टांतानानुगुण्यंस्यादित्याशंकांपरिहरन् तद्यथामहामत्स्य इतिखंडंव्याचष्टे ॥ स्वप्नेति ॥ ॥ १५–१८ ॥ तद्यथास्मिन्नाकाशेश्येनइतिखंडंव्याचष्टे ॥ यमिति ॥ यथाश्येनआकाशेविपरिपतनेनश्रांतस्सन्गृहंश्रमनिवारकंस्वनीडमभ्येति । तथाजीवोजागरितेस्वप्नेचभ्रमन्श्रांतःसुप्तोयं विष्णुमभ्येतीतिसंबंधः । यमितियच्छब्दस्यतमयमित्युत्तरत्र तच्छब्देनान्वयः । यत्रसुप्तइतिसुप्तशब्दार्थमाह ॥ स्वितीति ॥ आनंदःआनंदरूपः स्वित्युच्यतइतिसंबंधः । सुशब्दस्यसुखवा

---

भा० । स्वप्नांतंचबुद्धांतंचेत्यत्रापिस्वप्नांतशब्दःस्वप्नसुपुत्युभयाभिप्रायेण । शुभाशुभंतुदृष्ट्वैवस्वप्नेजागरितेपिच । असंस्पृष्टःसदादुःखैश्चरतीशःपुनःपुनः । स्वप्नसुत्यात्मकंकूलमेकंबुद्धात्मकंपरं । महामत्स्यइवासंगीचरत्येकोजनार्दनः ॥ १५–१८ ॥ यंविष्णुंश्येनवच्छ्रांतोजीवोजागरितेभ्रमन् । स्वप्नेचसुप्तावभ्येतिसंश्रांतःसद्गृहंयथा । स्वित्यानंदःपरोविष्णुस्तमाप्तःसुप्तउच्यते ।

चकत्वात् । यत्रसुप्तोनकंचनकामंकामयत इत्यादिवाक्यंव्याचष्टे ॥ संप्राप्येति ॥ नकंचनस्वप्नंपश्यतीत्यस्यार्थः नचेति । यत्रेत्य स्यार्थोसुषुप्ताविति चशब्दोपिशब्दार्थः । सुषुप्तावपितंसंप्राप्येत्यन्वयः । यत्रसुप्तोनकंचनकामंकामयतइत्यादिवाक्यंमुक्तिपरत्वेना पिव्याचष्टे ॥ किन्त्विति ॥ यत्रेत्यस्यार्थोमुक्ताविति सुप्तइत्यस्यार्थोजनार्दनंप्राप्तइति । कामयेन्नैवेत्यादिकमत्राप्यनुवर्तते । कैमुत्यस्फोरणायज्ञानात्प्राप्तइत्युक्तं । सुप्तौत्वज्ञानादेवेति ॥ १९ ॥ तावाअस्यैताहितानामनाड्य इतिवाक्यस्यहितशब्दार्थमाह ॥ निहितइति ॥ शुक्लस्येत्यादिवाक्यंव्याचष्टे ॥ नानावर्णइति ॥ शुक्लादिवर्णःनानारूपीवासुदेवादिरूपी । अत्रशुक्लोवासु देवो नीलोऽनिरुद्धः पिंगलःसंकर्षणः हरितःप्रद्युम्नः लोहितोनारायण इतिविवेकमुत्तरत्रवक्ष्यति । किंततइत्यतो लोहितस्य पूर्णा इत्यनंतरंवक्तव्यमाह ॥ तासामिति ॥ अथयत्रैनंघ्नंतीवेत्यादिवाक्यंव्याचष्टे ॥ ताएवेति ॥ हितानाड्यएवयदेवजाग्र द्भयंपश्यति तद्भयमत्रस्वप्नेऽविद्ययाअज्ञानेनमन्यतइत्येकवाक्यमितिप्रतीयते ॥ तदयुक्तं ॥ स्वप्नेजाग्रद्भयदर्शनासंभवात् स्वप्नदर्शनमात्रस्याज्ञानकार्यत्वेनविशिष्यभयमात्रग्रहणायोगाच्च । अज्ञानस्यापिजडत्वेनस्वप्नदर्शनंप्रतिस्वतंत्रकारणत्वायोगाच्चे तिभावेनतावत्यदेवजाग्रद्भयंपश्यतीत्येतद्व्याचष्टे ॥ जाग्रद्वदिति ॥ अनेनयदायत्रजाग्रदिवभयंपश्यतीतिव्याख्यातंभवति ।

---

भा० । संप्राप्यतमयंजीवःकामयेन्नैवकिंचन । नचस्वप्नसमभ्रांतिज्ञानंयातिकदाचन । सुषुप्तौचकिमुज्ञानान्मुक्तौप्राप्तोजनार्दनं ॥ १९ ॥ निहितोभगवान्यत्रहितानाड्यःप्रकीर्तिताः । नानावर्णोहरिस्तासुनानारूपीव्यवस्थितः । तासांमध्येसुषुम्नाचतत्रसुप्तिंत्रजत्ययं । ताएवकंठ देशस्थाजीवस्तत्रव्यवस्थितः । स्वप्नान्पश्यतिजाग्रद्वद्भयंचप्रतिपद्यते ।

१७ तदत्राविविचयामन्यतेइतिवाक्यंव्याचष्टे ॥ अइत्तीति ॥ तेनविष्णुकर्तृकज्ञानेन । अप्रतीतेर्जिनंतिविच्छाययतीतिपदद्वयमनूद्य
व्याचष्टे ॥ जिनंतीवेत्यादिना ॥ अथयत्रदेवइवराजेवाहमेवेदंसर्वोस्मीतिमन्यतइतिवाक्यंप्रकृतस्वप्नपरमित्यसत् । तथासतिप्र
करणविच्छेदकाथशब्दायोगात् । सोऽस्यपरमोलोकइतिपरमलोकत्वोक्त्याऽस्यवाक्यस्यमुक्तपरत्वावगमाच्च । यथोक्तं । परलो
कोयतोमुख्योमुक्तिरेवनचापरइति । ननुनेदंमुक्तपरमितिवक्तुंयुक्तं । मुक्तस्यसर्वात्मकत्वानुसंधानाभावेनअहमेवेदंसर्वोस्मीत्यस्या
योगात् । स्वप्नस्थस्यचतथाविधभ्रांतिसंभवेनतत्परत्वेतदुपपत्तेरित्यतस्तदनूद्यव्याचष्टे ॥ अहमेवेति ॥ ननुसर्वेषामपिमुक्तानां
स्वस्वयोग्यतानुसारेणपूर्णत्वादहमेवेत्यन्ययोगव्यवच्छेदःकथमित्यतआह ॥ विषयेति ॥ तथाचावस्थाविशेषेविषयभोग्यव्या
वृत्त्यर्थमेवकारइतिभावः । नन्विदंशब्दस्यविशेष्यनिघ्नत्वादयंसर्वोस्मीतिवास्यात् । इदंसर्वमस्मीतिवास्यात् । इदंसर्वइतिकथ
मित्यतआह ॥ इदमितीति ॥ नात्रेदमित्येतत्सर्वशब्दार्थपूर्णरूपधर्मिविशेषणं । येननपुंसकलिंगत्वानुपपत्तिः किंतुपूर्णगतपूर्ण
त्वरूपधर्मविशेषणमित्यर्थः । ननुशब्दार्थत्वाभिमतधर्मिगतधर्मविशेषणत्वेनेदंशब्दप्रयोगःक्वदृष्टइत्यतआह ॥ अजानतेति ॥
यथात्रेदंशब्दोमहिमत्वरूपधर्मविशेषणत्वाभिप्रायेणप्रयुक्तः अन्यथेमंमहिमानमितिप्रयोगापत्तेः । तथाऽत्रापीतिभावः । नन्व 527

भा० । अइत्यादिरयतेविष्णुरविद्यातन्निरीक्षणं । तेनस्वप्नानयंपश्येज्जीवोजागारितंतथेतिमहामीमांसायां । जिनंतीवताडयंतीव । विच्छा
ययतिभयेनविच्छायंकरोति । अहमेवेदंसर्वोस्मिस्वयोग्यतापेक्षयापूर्णोस्मि । विषयभोगानन्वितस्वरूपानंदेनेत्येवशब्दः । इदमितिपूर्णत्वविशेष
णं । अजानतामहिमानंतवेदमितिवत् ।

स्त्विदमितिपूर्णत्वविशेषणं तथापिकथमेतस्यस्वयोग्यतापेक्षयेत्यर्थोक्तिः । तस्यार्थस्यपूर्वमनुक्तत्वेनेदंशब्देनपरामर्शायोगादित्यतआह ॥ स्वपूर्णतामिति ॥ इदंशब्दस्यसमभिव्याहृतशब्दार्थधर्मिगतधर्मविशेषणत्वेप्रमाणमाह ॥ क्वचिदिति ॥ तस्यधर्मिणोभावःतद्भावस्तस्यशेषःतद्विशेषणंस्यादित्यर्थः । क्रियाशेषःक्रियाविशेषणं तद्यथातंडुलानिदंपचतीति । पदार्थशेषःपदार्थविशेषणं यथेदंनीलमिति । ननुकुतएवंव्याख्येयं यथाश्रुतएवार्थः किंनस्यादितिचेन्न । तथासतिदृष्टांतानानुगुण्यंस्यादित्याह ॥ नहीति ॥ ननुयथाराजाहमेवेदंसर्वोस्मीतिमन्यते । तथामुक्तोपीतिराजदृष्टांतेनैवपूर्तेःकिंदेवदृष्टांतेनेत्यतआह ॥ राज्ञइति ॥ मुक्तोविषयभोगानन्वितस्वरूपानंदेनपूर्णइत्युक्तार्थेनराजदृष्टांतः । तस्यविषयभोगेनैवपूर्तिमत्त्वात् देवश्चतत्पदयोग्यस्वरूपानंदेनपूर्णइतिदेवदृष्टांतग्रहणमित्यर्थः । तर्हिदेवदृष्टांतेनैवपूर्तेराजदृष्टांतोव्यर्थइत्यतआह ॥ प्रत्यक्षेति ॥ देवस्याप्रत्यक्षत्वादितिभावः। मनुष्याधिकारिकमपिशास्त्रंभवतीतितेषांपूर्णत्वस्यप्रत्यक्षतोदर्शनार्थंराजदृष्टांतः । अतोनव्यर्थइत्यर्थः। श्रुत्यर्थनिश्चायकंप्रमाणमप्याह ॥ स्वयोग्येति ॥ यथेतिशेषः। पूर्तेरितिसंबंधेषष्ठी। ईश्वरदत्तस्वातंत्र्यादित्यर्थः ॥ २० ॥ अतिच्छंदाइतिकथंविष्णुरूपस्यातिच्छंदस्त्वमुच्यते । तस्यगायत्र्यादिवत्च्छंदोरूपत्वाभावादित्यतस्तंशब्दंतत्रनिर्वक्ति ॥ छंदसामपीति ॥ साक

भा०। स्वपूर्णतामापरोक्ष्येणानुभूयेदंपूर्णोस्मीतिमन्यंते। कचित्तद्भावशेषःस्यात्क्रियाशेषःकचिद्भवेत्। कचित्पदार्थशेषःस्यादिदमादिस्त्रिधास्मृतइतिशब्दनिर्णये । नहिराजादेवोवासर्वजगद्भवति । राज्ञोभोगापेक्षयापूर्तिर्भवतीतिदेवदृष्टांतः । प्रत्यक्षदर्शनार्थंराजदृष्टांतः । स्वयोग्यपूर्तेःस्वातंत्र्याद्राज्ञोदेवगणस्यच । सर्वभावस्तथामोक्षेनतुसर्वस्वरूपतइतिब्रह्मतर्के ॥ २० ॥ छंदसामप्यवाच्यत्वादतिच्छंदाहरिःस्मृतः ।

त्येनेतिशेषः । प्राज्ञेनात्मनासंपरिष्वक्तइत्येतत्सुप्तमात्रपरमितिप्रतीतिनिरासायव्याचष्टे ॥ तेनेति ॥ तद्वाअस्यैतदतिच्छंदा अपहतपाप्माभयंरूपमितिवाक्यमन्वयंदर्शयन्व्याचष्टे ॥ विष्णोरिति ॥ नित्यंसर्वदेत्यु(त्य)भयविशेषणं । अभयंभयरहितं । यच्छन्दस्यतेनाश्लिष्टइतिपूर्वेणसंबंधः । तद्वाअस्यैतदाप्तकाममात्मकाममकामंरूपंशोकांतरमितिवाक्यंव्याचष्टे ॥ आप्तकामं चेति ॥ विष्णोरूपंयदितिअत्रानुवर्तते । आप्ताःकामाःकाम्याःयेनासावाप्तकामः । तत्रहेतुःपूर्णत्वादिति । आत्मैवकामःकाम्य तइत्यात्मकामः । तत्रहेतुःसुखत्वतइति । सुखस्वरूपत्वादित्यर्थः। शोकस्यांतोऽभावोयस्मिन्तच्छोकांतं तच्चतद्रंचेतिशोकांतरमि त्यर्थः । अकामशब्दार्थःस्पष्टत्वान्नोक्तः ॥ २१ ॥ अत्रपिताऽपिताभवतिमाताऽमातेत्येतद्विरोधपरिहारायव्याचष्टे ॥ तेनेति ॥ औपचारिकपुत्राणामेवायंनपिताकिमित्यतउक्तं ॥ दायादानामिति ॥ पूर्वंदायादानांस्वपुत्राणांपितातेनपरमात्मनाश्लिष्टःसु प्तोमुक्तश्चपितानैवभवति । पूर्वंमातातेनाश्लिष्टानमाता । तत्रहेतुस्तेषामिति। लोकाअलोकाइत्येतद्व्याचष्टे ॥लोकमान्यपीति॥ पूर्वमितिशेषः । अलोकमानात्लोकाभिमानाभावादित्यर्थः । मुक्तिसुप्त्योरपिदेवत्वस्यानपायात्कथंदेवाअदेवाइत्युक्तमित्यतस्त

---

भा० । तेनाश्लिष्टोह्ययंजीवःसुप्तोमुक्तोथवाभवेत् । विष्णोरूपंहियन्नित्यमभयंपापवर्जितं । आप्तकामंचपूर्णत्वादात्मकामंसुखत्वतः । शो कंविनासुरमणाच्छोकांतरमितीरितं ॥ २१ ॥ तेनाश्लिष्टःस्वपुत्राणांदायादानांनवैपिता । तेषांदुःखाद्दुःखित्वान्नमातालोकमान्यपि । अलो कमानान्नोलोकः

व्याचष्टे ॥ देवोपीति ॥ वेदाअवेदाइत्येतद्व्याचष्टे ॥ वेदमान्यपीति ॥ पूर्वमितिशेषः । वेदाभिमानाभावादित्यर्थः । अत्रस्ते
नोअस्तेनोभवतीत्यादिवाक्यचतुष्टयतात्पर्यमाह ॥ पापीति ॥ पूर्वंस्तैन्यादिनिमित्तकपापवानित्यर्थः । पापफलाप्ययात्पा
पफलभोगाभावादित्यर्थः । अश्रमणत्वतापसत्वयोःसुप्तिमुक्त्योरपिसत्वात्कथंश्रमणोऽश्रमणस्तापसोतापसइत्युक्तिरित्यतस्त
द्व्याचष्टे ॥ श्रमणश्चापीति ॥ पापीचेतिचशब्दान्वयः । यतिधर्मात्समुत्थितेस्तद्धिध्यतीतत्वादित्यर्थः । नन्वस्माद्ध्ये
वात्मनोयद्यत्कामयतेतत्तत्सृजतइतिमुक्तौपुण्यफलसत्वात्कथमनन्वागतंपुण्येनेत्युक्तमित्यतोऽनन्वागतंपापेनेत्येतद्व्याचष्टे ॥ अ
निष्टमिति ॥ अपिपदंकिमुपापमितिकैमुत्यद्योतकं । तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतीत्येतत्तात्पर्यमाह ॥ एवंविध
इति ॥ तीर्णसर्वशोकइत्यर्थः । अनेनतीर्णोहिसर्वान्शोकानित्यस्यार्थउक्तोभवति । हृदयस्येत्यस्यार्थोविष्णोरिति । संप्राप्तिमात्रत
इतिशेषोक्तिः । तदेत्यस्यतात्पर्यमुक्तइति ॥ २२ ॥ यद्वैतन्नपश्यतीत्यादिकंपरेणैवंव्याख्यातं सुप्त्यवस्थायामहंकारादितत्कार्य
विलयमात्रेणक्रियाकारकफलरूपद्वितीयजगदभावःसुप्तस्यात्मनोविधीयते तथाहि प्राक्हृद्यंतज्ज्योतिरिरितिज्योतिश्शब्देनसुप्त
स्यज्ञानसद्भावोभिहितः पुनरेवायमात्माप्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरमितिज्ञानाभावश्च तदुभयंविप्रतिषिद्ध
मित्याशंक्येदमुच्यते। सुप्तोयंनपश्यतीतियदुक्तंतद्वैतत्तथैव । नचविप्रतिषेधः यतःपश्यन्वैज्ञानवानेवतन्नपश्यतीत्युक्तं । कुतो

530

भा० । देवोपिस्वाधिकारतः । वर्पणादेर्व्युत्थितत्वान्नदेवोवेदमान्यपि । अवेदमानान्नोवेदःपापीपापफलाप्ययात् । अपापःश्रमणश्चा
पियतिधर्मात्समुत्थितेः । अयतिस्तापसश्चैवमनिष्टंपुण्यमप्यमुं । नान्वेत्येवंविधोमुक्तोविष्णोःसंप्राप्तिमात्रतः ॥२२॥

ज्ञानवत्त्वं नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते अविनाशित्वात् । कथं पश्यन्नेवनपश्यतीति । यतःस्वस्माद्विभक्तंपश्येत्तद्द्वितीयंतुनास्ति अतोविषयाभावान्नपश्यतीत्युच्यते निर्विषयस्वस्वरूपज्ञानस्थितत्वात्पश्यन्नित्यपि । अतोनपरस्परविरोधइति । तदसत् । प्रमाणविरोधादितिभावेनतावत्तद्वाक्यंप्रमाणेनव्याचष्टे ॥ यदिति ॥ ननुतद्द्वितीयमस्तिततोऽन्यदितिप्रतिज्ञावाक्यस्यार्थः ॥ तत्समस्मिति ॥ अनेनद्वितीयशब्दःसमार्थकोव्याख्यातः तत्रहेतुरुच्यते यद्वैतन्नपश्यतीति । तद्व्याचष्टे ॥ यत्तन्नविष्णुःपश्येतेति ॥ यद्यस्माद्विष्णुःतत्स्वसमं नपश्येत्तस्मात्तत्समंनान्यद्विष्यतइतिसंबंधः । ननुविष्णुनादृष्टत्वेपिविष्णुसमंकुतोनास्तीति चेत् विष्णुर्यन्नपश्यतितन्नास्त्येवेतिव्याप्तेरित्याह । यद्वैतन्नपश्यतीति तद्व्याचष्टे ॥यत्तन्नविष्णुःपश्येतेति॥ विष्णुर्यन्नपश्येत्तन्नास्त्येवेत्यर्थः । ननुयद्विष्णुर्नपश्यतितन्नास्त्येवेतिकथं नह्यस्मदाद्यदृष्टंधर्माधर्मादिकंनास्तीतिशक्यतेवक्तुमित्यतउक्तं॥ पश्यन्वाइति॥ तन्निगदव्याख्यानमितिभावेनानुवदति ॥ पश्यन्वैतन्नपश्यतीति ॥ सर्वज्ञएवसन्स्वसमंनपश्यतीत्यर्थः। ननुविष्णोस्सार्वज्ञंकिंभ्रांत्या नेत्याह ॥नहिद्रष्टुरिति॥ हियस्माद्द्रष्टुर्दृष्टेर्विपरिलोपोवैपरीत्यमयथार्थत्वंन तस्मान्नभ्रांत्यासार्वज्ञं। कुतोविपरिलोपाभावइत्यतउक्तं अविनाशित्वादिति । तद्व्याचष्टे ॥नित्येति॥ निर्दोषज्ञानत्वादबाध्यज्ञानत्वाच्चेत्यर्थः। एतदेवस्ववाक्येनविवृण्वन्यद्वैतंनपश्यतीत्याद्यंवाक्यंव्याचष्टे ॥ यत्किंचिदिति ॥ अनेनश्रुतौनञआवृत्तिः। वैशब्दोऽवधारणार्थकः । हृदयशब्दप्रकृतंब्रह्मान्तर्यामित्वेनसंबध्यतेइत्युक्तंभवति । ...दाहृतवचनेनआवृत्तेरप्रदर्शनात्पृथग्व्याख्यानारंभः। ननुभगवतानदृष्टंनास्त्येवेतिकथं नह्यस्म

---

भा० । यत्तन्नविष्णुःपश्येतपश्यन्वैतन्नपश्यति । नित्यज्ञानस्वरूपत्वात्तत्समंनान्यदिष्यतइतिच । यत्किंचिद्वस्तुभगवतानदृष्टंतन्नास्त्येव ।

दाद्यदृष्टंधर्माधर्मादिकंनास्तीत्याशंक्यपरिहारतयापश्यन्वाइतिवाक्यंव्याचष्टे ॥ **विद्यमानमिति** ॥ भगवानितिविभक्तिविपरिणा
मेनाऽनुवर्तते । अत्रापिवैशब्दोवधारणार्थइतिभावेनोक्तमेवेति । स्यादेवास्मदाद्यदृष्टमपिधर्माधर्मादिकं अस्मदादीनांविद्यमानस
र्वज्ञत्वाभावात् । भगवांस्तुविद्यमानंसर्वंपश्यत्येव सचेन्नपश्यति तदातन्नास्त्येवेतिभावः। यद्वाविष्णवन्यद्विष्णुसमंनास्ति । विष्णुना
ऽदृष्टत्वात्इत्यत्रअन्वयव्याप्तिप्रतिपादकतयायद्वैतन्नपश्यतीतिवाक्यंव्याख्यायव्यतिरेकव्याप्तिप्रतिपादकतया(पश्यन्वै)इत्येत
द्व्याचष्टे ॥**विद्यमानमिति**॥ व्यभिचारशंकानिरासायसर्वमित्युक्तं। ननुयथाअस्मदादीनांभ्रांतत्वेनास्मदादिदृष्टविरुद्धद्रष्टाऽस्मदा
द्यदृष्टद्रष्टाचभगवां स्तथाभगवद्दृष्टविरुद्धद्रष्टाभगवददृष्टद्रष्टाचयद्यन्यःस्यात्तदाकथंभगवान्विद्यमानंसर्वंपश्यतीतिनियमइत्याशं
कापरिहारायतावत् ननुतद्द्वितीयमस्तीतिवाक्यंप्रकारांतरेणव्याचष्टे ॥ **नहीति** ॥ तुशब्दोहेत्वर्थइतिभावेनहीत्युक्तं । श्रुतौद्विती
यमितिनपुंसकलिंगसद्भावेपिउदाहरिष्यमाणप्रमाणानुसारेणपुल्लिंगप्रयोगः । ननुब्रह्मादीनांसर्वेषामपिद्रष्टृत्वात्कथमेतत् । उक्तशं
कायांद्रष्टृमात्रनिषेधोनसंगतश्चेत्याशंकानिरासायततोन्यद्विभक्तंयत्पश्येदितिवाक्यंप्रवृत्तमितिभावेनविभक्तंपश्येदित्यंशस्यार्थमाह
॥**यइति**॥ सद्वितीयोद्रष्टानास्तीतिसंबंधः। ननुयोविभक्तत्वेनजगत्पश्यतिसद्वितीयोद्रष्टानास्तीतिकथं सर्वेषामपिविभक्तत्वेनजगद्द्र
ष्टृणांसत्वात् । असंगतंचैतत् । विभक्तत्वेनजगद्द्रष्टुरनाशंकितत्वात्इत्यतोविभक्तत्वेनजगत्पश्यतीत्युक्तमेवविवृणोति ॥ **तद्विरो**
**धेनेति**॥ भगवद्दृष्टविरोधेनेत्यर्थः । भ्रांतःसर्वोपिजनःशुक्तित्वेनेश्वरदृष्टामेवशुक्तिंरजतत्वेनजानातीतितद्विरोधेनपश्यत्येवेत्यतउ

भा० । विद्यमानंसर्वंपश्यत्येव । नहिद्वितीयोद्रष्टा । योविभक्तत्वेनजगत्पश्यति । तद्विरोधेनपश्यत्यभ्रांतः ।



Scanned by CamScanner

क्तमभ्रांतइति। ततोऽन्यदित्यंशंव्याचष्टे॥तद्दृष्टादिति॥अन्यद्वायःपश्यति सद्वितीयोद्रष्टानास्तीतिपूर्वेणसंबंधः। ननुतद्दृष्टादन्यच्छुक्तिरजतंभ्रांतःपश्यत्येव नचैवमसार्वज्ञप्रसंगः। विद्यमानाशेषार्थज्ञत्वमेवसार्वज्ञमित्यंगीकारादित्येतच्छंकानिरासायाभ्रांतपदमनुवर्तनीयं। ब्रह्मादीनांद्रष्टृत्वेपित्तद्दृष्टविरुद्धद्रष्टृत्वंतददृष्टद्रष्टृत्वंवानास्तीतिभावः। भगवद्दृष्टविरुद्धद्रष्टातददृष्टद्रष्टाचनास्तीत्यत्रप्रमाणमाह॥ **नान्यइति** ॥अतःपरमात्मनोऽन्योद्रष्टाभगवद्दृष्टविरुद्धद्रष्टातददृष्टद्रष्टाचनास्तीत्यर्थः। द्रष्टृमात्रनिषेधायोगादितिभावः।स्वकृतव्याख्यानदार्ढ्यायश्रुतिव्याख्यानरूपंप्रमाणमाह॥ **यदिति** ॥ प्रथमतच्छब्दःप्रसिद्ध्यर्थः। अनेनयद्वैतंनपश्यतीतिवाक्यंव्याख्यातं। नतुतत्द्वितीयमस्तीत्यस्यार्थोनह्यन्यदिति। ननुब्रह्मादीनांसत्वात्कथमेतदित्यतआह ॥ **यइति** ॥ अनेनततोन्यत्यत्पश्येदितिवाक्यंव्याख्यातं। तद्विरुद्धंचेतिशेषः। तेनविभक्तंयत्पश्येदितिवाक्यंव्याख्यातं। ननुब्रह्मादयएवतददृष्टद्रष्टारःतद्दृष्टविरुद्धद्रष्टारश्चकिंनस्युःइत्यतआह ॥**ब्रह्मादिरिति**॥ एवंयत्वैतदितिपदच्छेदमभ्युपेत्ययद्वैतंनपश्यतीत्यादिवाक्यंहृदयशब्दप्रकृतविष्णुसमनिषेधपरत्वेनव्याख्यातं। ननुकथमत्रविष्णुसमनिषेधःविष्णुरूपाणामेवतत्समत्वात्। नचतदन्यत्तत्समंनेत्युक्तमितिवाच्यं। शुक्लस्यनीलस्येत्यादिनाभगवद्रूपाणांविलक्षणरूपवत्त्वोक्त्यातद्वाअस्यैतदाप्तकाममात्मकाममकामंरूपमितिषष्ठ्यारूपरूपवतोश्चभेदस्यप्रतीतेरित्याशंकानिरासकतयापियत्द्वैतमितिपदच्छेदमभ्युपेत्यतदेवव्याचष्टे ॥ **यदिति** ॥उभयत्राप्युच्चारणस्यैकप्र 533

---

भा०। तद्दृष्टादन्यद्वा । नान्योतोस्तिद्रष्टेत्यादिश्रुतेः । यत्तद्दृष्टंभगवतातदेवास्तिनचापरं । नह्यन्योविद्यतेद्रष्टायःपश्येत्तददर्शितं । ब्रह्मादिरपियोद्रष्टापश्येत्तस्यप्रसादतः । तददृष्टंकुतःपश्येदतःकोवाविरोधतइतिच। यद्वतारादिकंद्वैतत्वेननपश्यतिनतुततोद्वितीयं।

कारत्वादुभयथापदच्छेदोनानुपपन्नः । यदित्यनुवादनेनावतारादिकमितिव्याख्यातं। आदिपदेनगुणादिग्रहणं । द्वैतत्वेनस्वतःप
रस्परंचभिन्नत्वेन तुशब्दएवार्थे। तदवतारादिकं। ततःस्वस्मात्परस्परंचेत्यर्थः। अनेनततोऽन्यदित्युत्तरवाक्यस्थंततइत्येतत्नतुतत्
द्वितीयमित्यत्रापिसंबध्यतइत्युक्तंभवति । द्वितीयंभिन्नंयत्द्वैतमितियच्छब्दस्यनतुतदितिव्यवहिततच्छब्दान्वयस्तुयत्तदोर्नित्य
साकांक्षत्वादाकांक्षायाश्चसन्निधानाद्बलीयस्त्वाद्युक्तइतिभावः। ननुभगवताभिन्नत्वेनाऽदृष्टत्वेपिकुतोनभिन्नं नह्यस्माभिःशुक्तिका
याभिन्नत्वेनरजतंनदृश्यतइत्येतावतातत्ततोनभिन्नं । मैवं । पश्यन्सर्वज्ञएवतत्अवतारादिकंभिन्नत्वेननपश्यतिवै । ननुयदिभग
वतोभ्रांत्यैवसार्वज्ञं तर्हितेनभिन्नत्वेनादृष्टमवतारादिकंततोभिन्नंनभवतीतिकथमित्यतःप्रवृत्तं नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽवि
नाशित्वादितिवाक्यमुपोद्धातसंगत्याव्याचष्टे ॥नित्येति॥ निर्दोषज्ञानत्वान्निर्बाधज्ञानत्वाच्चेत्यर्थः। यद्वायदवतारादिकंद्वैतत्वेनन
पश्यतीत्यस्यद्वैतत्वाभावत्वेनपश्यतीत्यर्थोविवक्षितः। यद्वक्ष्यतिअभेदेनस्वावतारान्हरिर्वेत्तीति। ननुविष्णुनाऽभेदेनदृष्टत्वेपिभेदा
भावःकुतः नहिशुक्तिकायाअभेदेनरजतंदृश्यतइत्येतावतातत्ततोनभिन्नमित्यतःप्राप्तंनहिद्रष्टुरितिवाक्यंव्याचष्टे ॥ नित्येति ॥ ननु
विष्णुर्यद्भिन्नत्वेनपश्यतितत्ततोऽन्यदस्त्येवेतिनियमश्चेत्तदाऽवतारादिकंभिन्नत्वेननपश्यतीतितद्भिन्नंनभवतीतिवक्तुंशक्यते त
देवकुतइत्यतःप्राप्तमस्तिततोन्यद्विभक्तंयत्पश्येदितिवाक्यंव्याचष्टे॥यद्विभक्तत्वेनेति ॥ किंविभक्तत्वेनपश्यति किंततोन्यदित्य



---

भा० । नित्यज्ञानत्वाद्भ्रमाभावात् । यद्विभक्तत्वेनविष्णुःपश्यतितत्ततोन्यदस्तिचेतिच ।

तउक्तमेवविवृणोति ॥ यस्मादिति ॥ यद्वाननुयथाऽवतारादिकंविष्णुनाभिन्नत्वेनादृष्टत्वान्नभिन्नं तथाजीवजडादिकंविश्वमपितेन भिन्नत्वेनादृष्टंचेद्भिन्नंनस्यादित्येतच्छंकानिरासकत्वेनास्तिततोन्यद्विभक्तंयत्पश्येदितिवाक्यंविश्वंविष्णुनाभिन्नंतत्वेनतेनदृष्टत्वा दित्यनुमानपरतयाव्याख्यातुंतत्रव्याप्तिप्रतिपादकतयास्तिततोन्यद्विभक्तंयत्पश्येदितिवाक्यमेवव्याचष्टे॥यद्विभक्तत्वेनेति॥च शब्दोवधारणार्थः।तेनव्यभिचाराभावमाह।इतिचार्थइतिशेषः। तेनपूर्वव्याख्यानसमुच्चयः।यद्भिन्नत्वेनविष्णुःपश्यतितत्ततोन्यद स्त्येवेतिकुतः। नहिचंद्रश्चंद्रात्भिन्नत्वेनाऽस्माभिर्दृश्यतइत्येतावताभिन्नइत्याशंकानिरासार्थं नहिद्रष्टुरितिवाक्यव्याख्यानरूपंनित्य ज्ञानत्वाद्भ्रमाभावादितिवाक्यमत्रापियोजनीयं। एवंव्याप्तिप्रतिपादकत्वेनास्तिततोन्यद्विभक्तंयत्पश्येदितिवाक्यंव्याख्यायअनुमा नप्रदर्शनपरत्वेनापितदेववाक्यंव्याचष्टे॥यस्मादिति॥श्रौतयच्छब्दार्थोयस्मादितियस्माद्धेतोरित्यर्थः। ततइत्यस्यार्थः तस्मादिति। स्वस्माद्भिन्नत्वेनेतिशेषः । यस्माद्विभक्तत्वेनैवपश्यति तस्मादन्यदितिवासंबंधः । भेदाभेदव्यवच्छेदायप्रथमैवकारः । नतुतद्वि तीयमस्तिततोन्यद्विभक्तंयत्पश्येदितिवाक्येयत्ततः स्वस्माद्विभक्तंपश्येत्तद्वितीयंतुनास्तीतिसुप्तौसकलजगदभावउच्यतइत्यपव्या ख्यानंदूषयति ॥ **नचेति** ॥ कुतोनेत्यतआह ॥ अन्यदिति ॥ यत्पश्येत्तद्वितीयंनास्तीत्येतावतापूर्णत्वादित्यर्थः । यत्ततःस्व स्मादन्यद्विभक्तंपश्येत्तद्वितीयंतुनास्तीतिव्याख्यानादनुवादपरत्वेननवैयर्थ्यमितिचेत् न । तथासतिविभक्तंयत्पश्येत्तन्नास्तीत्ये तावतापूर्णत्वेनशेषवैयर्थ्यादितिभावः। किंचनसुप्तौसकलजगदभावोवक्तुंयुक्तः देवदत्तस्यसुप्तावपियज्ञदत्तस्यजगत्प्रतीतेस्सत्वात्।

भा० । यस्माद्विष्णुर्विश्वंविभक्तत्वेनैवपश्यतितस्मात्तदन्यदस्त्येव । नचजगदभावोत्रोच्यते । अन्याद्विभक्तिमितिविशेषणवैयर्थ्यात् ।

स्ति-च

२-५

ननुदेवदत्तेसुप्तेदेवदत्तदेहादिकंजगद्देवदत्तंप्रतिनास्त्येव देवदत्तभ्रांतिकल्पितस्यतस्यतन्निवृत्तौनिवृत्तेरावश्यकत्वात् जाग्रतोयज्ञ
दत्तस्यतुभ्रांतेरनिवृत्तत्वेनतद्भ्रांतिकल्पितंजगत्तंप्रतिअस्त्येव । अतएवास्माभिर्दृष्टिसृष्टिर्जगतोंगीक्रियतइतिचेत् न । स्यादेतदेवं
यदिजगतोभ्रांतिकल्पितत्वमेवस्यान्नचतदस्ति प्रमाणाभावादित्याह ॥ नचेति ॥ नचास्मादात्मनः सर्वेप्राणाःसर्वेलोकाःसर्वेदे
वाःसर्वाणिभूतानिव्युच्चरंतीतिश्रुतिस्तत्रमानंअन्यथादृष्टिसृष्ट्यभावेकथंसुप्तोत्थिताज्जीवात्प्राणादिसृष्टिरुपपन्नास्यादितिवाच्यं अ
स्यवाक्यस्यप्रागेवभगवत्परत्वेनव्याख्यातत्वात् । अन्यथासर्वेलोकाइत्याद्युक्तिरनुपपन्नास्यात् । नहिदृष्टिसृष्टिपक्षेपिसुप्तोत्थित
स्यसर्वलोकादिसृष्टिरस्ति ॥ २३–३० ॥ किंचजगतोभ्रांतिकल्पितत्वेअसत्वमेवस्यात् । तत्रतस्यैवप्रयोजकत्वात् । किंततइत्यत
आह ॥ असत्वमिति ॥ ननुयत्रवान्यदिवस्यात्तत्रान्योन्यत्पश्येदित्युत्तरवाक्येयत्रजागरितेस्वप्नेवान्यदिवात्मनोवस्त्वंतरमिवा
विद्याप्रत्युपस्थापितंस्यात् । तत्रैवान्योन्यमिवात्मानंमन्यमानोऽन्यत्स्वस्माद्विभक्तमिवाविद्योत्थंवस्त्वंतरंपश्येत् । यत्रपुनःसावि
द्यासुषुप्तेवस्त्वंतरप्रत्युपस्थापिकाशांतातेनान्यत्वेनाविद्याप्रविभक्तवस्तुनोऽभावात्केनकंपश्येदित्युच्यते । अतःपूर्ववाक्यमपिसुषु
प्तौजगदभावपरत्वेनैवव्याख्येयमित्यतस्तात्पर्यमाह ॥ द्रष्टृंतरेति ॥ यत्रवेतिवाक्यस्यतात्पर्यंद्रष्टृंतरनिषेधेनेति । एकोद्रष्टेत्यस्य
तात्पर्यंतस्यैवसर्वद्रष्टृत्वमिति परव्याख्याननिरासायैवशब्दः चशब्दोस्यार्थस्यप्रकृतत्वानुसंधानार्थः अस्यवाक्यस्यपरोक्तएवार्थः

भा० । नचभ्रांतिकल्पितंजगदित्यत्रकिंचिन्मानं । असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरमित्यादिनिंदनाच्च ॥ २३–३० ॥ द्रष्टृंतरनिषेध
नतस्यैवसर्वद्रष्टृत्वमेवचयत्रवाअन्यदिवस्यादित्यादिनोपसंह्रियते ।

किंनस्यादित्यतआह॥ अन्यथेति॥ अस्यवाक्यस्यस्वोक्तार्थमनभ्युपगम्यपरोक्तार्थांगीकारेन्योन्यत्पश्येदित्यादिवाक्येद्वितीयान्य पदंव्यर्थंस्यात् तत्रान्यःपश्येदित्येतावतापूर्णत्वादित्यर्थः। ननुदर्शनादिविषयस्यदर्शनादिकर्त्रनन्यत्वशंकावारणायान्यदित्येतत्सार्थं कमित्यतआह॥नहीति॥ यदादर्शनादिविषयानन्यत्वशंकावारणायदर्शनादिकर्तुरन्यइतिविशेषणमुक्तंतदाविषयस्यतदनन्यत्वशं कैवनभवति नह्येकस्यान्यत्वेन्यस्यतदनन्यत्वंभवति येनैवंशंकास्यादित्यर्थः॥द्वितीयान्यशब्दवैयर्थ्यमुपपाद्योपसंहरति॥अतइति॥ यद्वायत्रान्यदिवस्यात्तत्रपश्येदित्येतावतापूर्णत्वेनअन्योन्यादितिपदद्वयंव्यर्थंस्यादित्यर्थः। ननुविषयापेक्षयाज्ञातुरनन्यत्वशंकावा रणायप्रथमान्यपदंसार्थकमित्यतआह॥नहीति॥ एकस्यविषयस्यान्यत्वेऽभिहितेअन्यस्यज्ञातुरन्यत्वंशंकार्हंनभवतीत्यर्थः। आर्थि कस्याप्यन्यत्वस्यशब्देनप्रतिपादनार्थंप्रथमान्यपदंसार्थकमितिचेन्न। तथापिद्वितीयान्यशब्दोव्यर्थएवेत्याह॥ अतइति॥ विषया न्यत्वस्यान्यदिवेत्यन्यशब्देनैवप्रतिपादितत्वादित्यर्थः। ननुयत्रवान्यदिवस्यात्तत्रान्यःपश्येदित्येवोक्तेयत्राविद्यकोभेदोनास्तितत्रा न्यआत्मानंपश्यति नजिघ्रतीत्यादिद्रष्टृत्वादिमात्रनिषेधःकृतःस्यात् सचायुक्तः आविद्यकभेदाभावदशायामपिअन्यद्रष्टृत्वाभावे पिआत्मनःस्वात्मद्रष्टृत्वाद्युपपत्तेः। अतआविद्यकभेदाभावदशायांस्वभिन्नकर्मकदर्शनादिनिषेधार्थमेवविषयवाचकद्वितीयान्यश ब्दःसार्थकइतिचेन्न। स्यादेवमात्मनःस्वदृश्यत्वादिकं यद्यात्मनोदृश्यत्वादिकमेवस्यात् नचतदस्तीत्याह॥ नचेति॥ दृश्यत्वादिक

भा०। अन्यथाऽन्योन्यत्पश्येदित्यादिकमनर्थकं। नह्येकस्यान्यत्वेऽन्यस्यानन्यत्वंभवति। अतोद्वितीयोन्यशब्दोव्यर्थएवस्यात्। नचत त्पक्षेदृश्यत्वादिक(रस्यत्वादिक)मात्मनोविद्यते।

मितिपाठेतुदृश्यत्वस्यकथंचिदुपपत्तावपिरस्यत्वादिकंसर्वथानुपपन्नमितिज्ञापनायक्रमोल्लंघनं। द्रष्टृंतरनिषेधेनेतियत्रवान्यदिवस्या
दित्यादिवाक्यतात्पर्यमुक्तं ततस्तस्याप्रतीतेःस्पष्टंतद्व्याष्टे ॥ तस्मादिति ॥ परव्याख्यानस्यायुक्तत्वादित्यर्थः। यत्रयदा किंचिद
पिअल्पमपीत्यर्थः। इवशब्दार्थः किंचिदिति वैशब्दार्थोपीति अन्यस्यभगवदन्यस्य तत्रैवतदैव अन्यशब्दस्यसाकांक्षत्वाद्भगवत
इतिभगवद्दृष्टादितिचोक्तं । एवंचान्यशब्दद्वयसप्यस्माकंसार्थकमितिभावः । प्रयोजकाभावेनप्रयोज्याभावंदर्शति ॥ तदेवेति॥
तदेवभगवदन्यस्यकिंचित्स्वातंत्र्यमेव स्वातंत्र्यंतुजडान्प्रतीत्युक्तेःजीवानामपीश्वरदत्तकिंचित्स्वातंत्र्यसत्वात्स्वतइत्युक्तं।अन्यदि
वेतीवशब्देनकिंचित्स्वातंत्र्यमुच्यतइत्युक्तंतदुपपादयितुंप्रतिजानीते ॥ अन्यदिति ॥ इवशब्दइवशब्दशिरस्कान्यशब्दइत्यर्थः।
तत्रलौकिकप्रयोगमाह ॥ राज्ञइति ॥ राज्ञोभृत्यःपृथगिवराजानमपेक्ष्याकिंचित्स्वतंत्रइत्यर्थः । इवशब्दस्याल्पार्थत्वेभिधानमाह
॥ उपमार्थइति ॥ अन्यशब्दस्यस्वातंत्र्यार्थत्वेपितदाह ॥ स्वरूपेति ॥ अन्यशब्दस्यस्वातंत्र्यार्थत्वेवैदिकप्रयोगमप्याह ॥ अ
नन्याइति ॥ योधाअपिकुंतीसुतादनन्याःतमपेक्ष्यस्वतंत्रानेत्यर्थः। इवशब्दस्याल्पार्थत्वेपिप्रयोगंदर्शयति ॥ दशरात्रैरिति॥

भा० । तस्माद्यत्रकिंचिदपिस्वातंत्र्यमन्यस्यभवतितत्रैवभगवतोन्यःपुरुषोभगवद्दृष्टादन्यत्पश्यतीत्यादियुज्यतेतदेवनास्तिस्वतः । अतोना
न्योन्यत्पश्येदित्यर्थः । अन्यदिवेतीवशब्दोल्पस्वातंत्र्यार्थे । राज्ञःपृथगिवभृत्यइतिवत् । उपमार्थेतथाल्पत्वेपीवशब्दःप्रयुज्यतइतिशब्दनिर्णये ।
स्वरूपभेदेस्वातंत्र्येविरोधेचविलक्षणे । अन्यशब्दश्चतुर्ष्वेपुप्रयोक्तव्योमनीपिभिरितिच । अनन्याःसर्वएवैतेयोधाःकुंतीसुतादपीतिप्रयोगाच्च । दश
रात्रैर्भुक्तमिवनसम्यक्स्वल्पभोजनादितिच ।

प्रयोगाच्चेत्यस्यानुकर्षणार्थश्चशब्दः। श्रुतेःस्वोक्तार्थेदार्ढ्यायश्रुत्यर्थनिश्चायकंप्रमाणमाह॥ **प्रकृतेरिति** ॥ **प्रकृतेर्लक्ष्म्याः पुरुषाणांब्रह्मादीनां** तत्रहेतुर्विष्णुनेति। ततःस्वातंत्र्याभावात्। ननुभगवदहष्टद्रष्टृभावेपितददृष्टंवस्तुकिंनस्यात्। **तथाचनतस्य** सार्वज्ञमित्यतआह। तदपिभगवद्दृष्टमपिकिंवाभवेदिति पदार्थमात्रस्यकस्यचित्प्रत्यक्षत्वावश्यंभावादत्रचतदभावादितिभावः। यद्वैतंनपश्यतीत्यादेर्द्वितीयंव्याख्यानंप्रमाणेनद्रढयति ॥ अभेदेनेति ॥ जीवाजीवमितिसमाहारद्वंद्वः। यद्यस्माद्धरिःस्वावतारान्स्वावतारादिकंस्वाभेदेनवेत्तिअतस्तदवतारादिकंसहरिरेवेत्यनेनयद्वैतंनपश्यति **नतुतत्द्वितीयमित्यस्याभिप्रायोक्तिः**। यस्माज्जीवाजीवंभेदतोवेत्ति तस्मात्तद्द्वयंजीवाजीवंतदन्यच्चेतिततोन्यद्विभक्तंयत्पश्येदित्यस्यार्थः। अभ्रमइतिनहीतिवाक्यार्थः। ननुयत्रवाअन्यदिवस्यादितिवाक्यस्योकरीत्याद्रष्टृंतरनिषेधपरत्वं नतुतत्द्वितीयमस्तीत्यस्यप्राचीनव्याख्यानेसंगतं। द्वितीयव्याख्यानेत्वसंगतमितिचेत् न। तदातस्यततोन्यद्विभक्तंयत्पश्येदित्युक्तभेदप्रपंचसत्यत्वमेवाभेदनिषेधेनोपसंहियतइत्येवंपरत्वांगीकारादित्याशयेनतत्प्रकारांतरेणव्याचष्टे ॥ अन्यदपीति ॥ अन्यदिवेत्यस्यार्थोऽन्यवदवस्थितमिति। तर्हिभेदोमिथ्यास्यादित्यतइवशब्दार्थउक्तः अन्यदपिस्वतोभिन्नमपिअस्वातन्त्र्येणनिमित्तेनान्यवदिति। यस्मिन्पक्षेन्यदेवनास्तिनतत्रान्यदर्श

---

भा० । प्रकृतेःपुरुषाणांचनाणुमात्रमपिक्वचित्। स्वातंत्र्यंविष्णुनासर्वेनियताःसर्वदैवहि । तददृष्टंततःकोहिपश्येत्किंवापितद्भवेदितिमहामीमांसायां। अभेदेनस्वावताराञ्जीवाजीवंतुभेदतः। यदभ्रमोहरिर्वेत्तिसतदन्यच्चतद्द्वयमितिच। अन्यदप्यस्वातंत्र्येणान्यवदवस्थितंयास्मिन्पक्षेस्ति तत्रैवान्यदर्शनादिव्यवहारोयुज्यते।

539

म 540

नादिव्यवहारोयुज्यतइतिवाक्यशेषः । नन्वयमन्यदर्शनादिव्यवहाराभावः किमिदानीमापाद्यते मोक्षेवा नाद्यः । व्यावहारिकभेदसद्भावेनतदुपपत्तेः । नांत्यः इष्टत्वादितिचेत्न । व्यावहारिकभेदस्यनिराकरिष्यमाणत्वात् । इष्टापत्तेश्चमैत्रेयीब्राह्मणेपरिहृतत्वात्परिहरिष्यमाणत्वाच्च । नन्वन्याभावेपितद्गोचरदर्शनादिव्यवहारादिकंकिंनस्यादितिचेन्न । तथासतिसप्तमरसादिदर्शनस्याप्यापातेनतेनानुभूयमानरसदर्शनेनेवसुखाद्यतिशयापातात् । नचैतदस्तीत्याह ॥ सप्तमेति ॥ इतिचार्थइतिशेषः । ननुसिद्धांतेऽनृतोप्यपरोक्षप्रतीतेरंगीकारात्कथमेतदितिचेन्न । अत्रप्रधानस्यैवाभावेनरसनेंद्रियजन्यसप्तमरसादिगोचरभ्रमस्याप्यसंभवात् । यथोक्तं अधिष्ठानंचसदृशंतथ्यवस्तुद्वयंविना । नभ्रांतिर्भवतिक्वापीति । अतएवतत्त्वविवेकटीकायां यदिनानकूर्मरोमादिकमनारोपितमितिकूर्मरोमादेरारोपविषयत्वाभावउक्तः । नन्वस्मिन्पक्षेयत्रवान्यदिवस्यात्तत्रान्यःपश्येत्इत्येतावतापूर्णत्वेनास्माकमिवभवतामपिद्वितीयोन्यशब्दोव्यर्थः । एकस्यान्यत्वेद्वितीयस्यानन्यत्वायोगादितिचेन्न । अस्मत्पक्षेहियत्रान्यदिवस्यात्तत्रैवान्यःपश्येत् । यत्रत्वन्यदेवनास्तितत्रान्योनपश्यतीत्यादिवाक्यार्थोनयुज्यते । अन्यस्यविषयस्याभावेपिभगवतःस्वरमणत्वेनस्वविषयदर्शनाघ्राणनादिव्यवहारस्यसत्त्वात् । अतोन्याभावेस्वभिन्नगोचरदर्शनादिव्यवहारोनयुज्यतइतिवक्तुंविषयवाचकमन्यदितिपदंसार्थकमितिभावेनाह ॥ सर्वेंद्रियेति ॥ स्वात्मन्यपीतिसंबंधः । यत्रवान्यदिवस्यादित्यस्यान्यदिववस्त्वंतरमिवाविद्याप्रत्युप

भा० ॥ सप्तमरसादिदर्शनाभावादितिच । सर्वेंद्रियोपभोगोपिविष्णोःस्वात्मनिविद्यते ।

स्थापितमितिव्याख्यानेबाधकमाह॥ यदीति॥ यदिभिन्नंजगदेवनस्यादाविद्यकंस्यादितियावत्। तदाविद्यानिवृत्तिरूपेमोक्षेप्यन्यानिभूतानीतिअन्येषांभूतानांसत्वोक्तिरयुक्तास्यादित्यर्थः । स्यादेतत् यदीदंवाक्यंमोक्षपरमेवस्यात् । तदेवनास्ति । अस्यवाक्यस्यसुषुप्तिपरत्वादित्यतआह ॥ मोक्षेति ॥ सुषुप्तिप्रकरणत्वसमुच्चयार्थश्चशब्दः । कुतइतिचेत् अत्रपिताऽपिताभवतीत्याद्येतत्प्रकरणोपक्रमवाक्यस्यसुषुप्तिमोक्षोभयविषयकत्वस्यसूत्रकृतानिर्णीतत्वादितिभावेनतत्सूत्रंपठति ॥ स्वाप्ययेति ॥ ३१ ॥ सलिलएकोद्रष्टाद्वैतोभवतीत्यस्यसलिलःसलिलवच्छुद्धोविजातीयभेदरहितः एकःसजातीयभेदशून्योतएवद्रष्टाद्वैतःस्वगतभेदशून्यइतिपरव्याख्यानमसत् । भेदप्रतिपादकेनततोन्यदितिपूर्ववाक्येनान्यानिभूतानीत्युत्तरवाक्येनचविरोधात् । तद्व्याख्यानरूपप्रमाणविरोधाच्चेतिभावेनतद्व्याचष्टे ॥ यदाहीति ॥ तस्यांसलिलरूपचेतनप्रकृतौ । ननुसलिलात्मप्रकृतेरेवसत्वात्कथमेकोऽद्वैतश्चेत्यतस्तत्पदद्वयंव्याचष्टे ॥ अविरोधादिति ॥ विरोधिशून्यत्वादित्यर्थः । प्रकृतेश्चनविरोधः । नापिसाम्यमितिभावः । एषजीवोब्रह्मलोकोज्योतीरूपंब्रह्मैवेतिव्याख्याननिरासायब्रह्मलोकशब्दार्थमाह ॥ बृहज्ज्ञानइति ॥ बृहत्सर्वविषयंज्ञानंयस्यासौतथोक्तः । एषास्यपरमागतिरित्यस्यार्थमाह ॥ सर्वगत्वादिति ॥ अस्येत्यनुवादेनविष्णोरितिव्याख्यानं एषास्यपर

---

भा० । यदिजगदेवनस्यात्तदाकथंमोक्षेप्यन्यानिभूतानिमात्राउपजीवंतीतियुज्यते । मोक्षप्रकरणंचैतत् । स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीतिभगवद्वचनं ॥ ३१ ॥ यदाहिसलिलत्वेनप्रकृतिर्व्याप्यतिष्ठति । तदातस्यांपरोविष्णुरेकोद्रष्टाव्यवस्थितः । अविरोधादद्वितीयएकोसौ

बृ० भा० ४६ समवर्जनात् । बृहज्ज्ञानोब्रह्मलोकःसदैवपुरुषोत्तमः । सर्वगत्वादस्यगतिःपराविष्णोस्सदैवहि ।

मासंपदित्येतद्व्याचष्टे ॥ पूर्णेति ॥ एषोस्यपरमोलोकइत्येतद्व्याचष्टे ॥ सार्वज्ञादिति ॥ लोकोज्ञानंएषोस्यपरमआनंदइतिवाक्यं व्याचष्टे ॥ आनंदइति ॥ विष्णोरितिवर्तते विष्णोरानंदश्चपरमोज्ञेयः । कुतः हियस्मात्सआनंदःपूर्णःसदोदितः । तत्रहेतुः स्वातंत्र्यादेवेति।एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिवाक्यंविष्णुस्वरूपभूतानंदैकदेशभोक्तृत्वमन्येषामुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ प्रतिबिंबरूपेति ॥ मात्रामित्यस्यार्थोविप्रुड्ढानिति। उक्तान्यथाप्रतीतिनिरासायप्रतिबिंबरूपेत्युक्तं।सयोमनुष्याणामित्यादेस्तात्पर्यं तारतम्येनेति।पूर्वंसहम्यंतत्वमंगीकृत्यसलिलपदंव्याख्यातं।प्रथमांतत्वमंगीकृत्यापिव्याचष्टे॥सलिलइति ॥ लीलयासहितःसलीलःइत्यर्थः । दीर्घलोपःछांदसइतिभावः ॥ ३२ ॥ सयोमनुष्याणांराद्धइतिप्रकरणंसंसारिपरमितिप्रतीतिनिरासायव्याचष्टे ॥ अन्येभ्यइति ॥ अन्येभ्योमनुष्योत्तमेभ्यः शतोद्रिक्तइत्यंतंमूलानुक्तं । अथयेशतंमनुष्याणामानंदाःसएकःपितॄणामानंदःइत्यस्यार्थमाह ॥पितॄणामिति॥ तेभ्यश्चक्रवर्तिभ्यःपितॄणामानंदःशतोद्रिक्तइतिसंबंधः। अनेनश्रुतौमनुष्यशब्दश्चक्रवर्तिपरइत्युक्तंभवति । तदुत्तरकक्ष्यमाह ॥ तेभ्योपीति॥ ऋषीणांविश्वामित्रब्रह्मपुत्रव्यतिरिक्तानां। ननुश्रुतौपितृभ्योगंधर्वाणांशताधिकत्वमुच्यते अत्रतुऋषीणां क्वचित्तुआजानदेवानां तत्कथमेतदितिचेन्न। गंधर्वाणांऋषीणामाजानदेवानांच

भा० । पूर्णैश्वर्यादस्यसंपत्परमासंप्रकीर्तिता । सार्वज्ञ्यात्परमोलोकोविष्णोरानंदएवच । स्वातंत्र्यात्परमोज्ञेयःसहिपूर्णःसदोदितः । प्रतिबिंबरूपविप्रुड्ढांस्तदानंदस्यचाखिलाः । मुक्ताब्रह्मादयोभुंतितारतम्येननित्यदा। सलीलःसलिलइतिवा ॥ ३२॥ अन्येभ्यस्तुविमुक्तेभ्यआनंदश्चक्रवर्तिनां । मुक्तानांहिशतोद्रिक्तःपितॄणांतेभ्यएवच । तेभ्योप्यृषीणांमुक्तानांकर्मदेवाभिधायिनां ।

साम्यात् । यथोक्तंपुरस्तात्। तुंवुरुप्रमुखायेचतथोर्वश्यादिकाअपि। विश्वामित्रब्रह्मपुत्रानृतेचाप्यृषयोखिलाः । कार्तवीर्यादिराज
भ्योदेवभृत्याःशतावराः।आजानदेवास्तेप्रोक्ताइति। अथयेशतंगंधर्वलोकआनंदाःसएकःकर्मदेवानामानंदःइत्यस्यार्थमाह॥ कर्म
देवेति॥ तेभ्यःऋषिभ्यः । अथयेशतंकर्मदेवानामानंदाःसएकआजानदेवानामानंदइत्यंशंव्याचष्टे॥ तेभ्यश्चेति॥ अथयेशतंआ
जानदेवानामानंदाःसएकःप्रजापतिलोकआनंदःइत्यस्यार्थमाह॥तेभ्यश्चेति॥ उमापतेर्वारुणीपतेरित्यर्थः । अथयेशतंप्रजापतिलो
कआनंदाः सएकोब्रह्मलोकआनंदइत्यस्यार्थमाह ॥ तस्मादिति ॥ श्रुतौप्रजापतिशब्देनगरुडोपिग्राह्यइतिभावेनोक्तं गरुडाद
पीति । अथैषएवपरमआनंदइतिवाक्यमेषएवेत्यनेनब्रह्मलोकशब्दप्रकृतचतुर्मुखपरामर्शइतिप्रतीतिनिरासायव्याचष्टे ॥ एषए
वेति ॥ विष्णोरप्रकृतत्वात्कथंतत्परामर्शइत्यत एतस्यैवानंदस्यान्यानिभूतानीतिवाक्येप्रकृतत्वात्परामर्शोपपत्तिरितिभावेनत
तइत्युक्तंहेतुंविवृणोति ॥ यस्येति ॥ एवंप्रमाणवचनेनेदंप्रकरणंमुक्तपरत्वेनव्याख्यातं । इदानीमत्रापिमुक्तज्ञापकानिदर्शयिष्य
न्सयोमनुष्याणामितिप्रथमवाक्येमुक्तज्ञापकमाह ॥ राद्धइति ॥ राधसाधसंसिद्धावितिपठ्यते । राधधातोश्चगत्यर्थाकर्मकश्लि
षशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेत्यकर्मकत्वात्कर्तरिक्तः । ततोराद्धइत्यस्यसंसिद्धइत्यर्थोवगम्यते । संसिद्धिश्चमुक्तिरेव ।
नित्यत्वेनदुःखासंभिन्नत्वेनचसमीचीनसिद्धित्वात् । नेतरा अनित्यत्वेनदुःखसंभिन्नत्वेनासमीचीनत्वात् । नचमुख्येसंभवत्यमु

भा० । तेभ्यश्चमुक्तदेवानांतेभ्यश्चोमापतेस्तथा । तस्माच्चब्रह्मणस्त्वेवंमुक्तस्यगरुडादपि ।एषएवततोविष्णुःपूर्णानंदःप्रकीर्तितः । यस्यब्रह्मा
पिमुक्तःसन्विष्णुमात्रंसमश्नुतइतिच । राद्धोमुक्तः ।

ख्यार्थौंगीकर्तुंयुक्तइतिभावः । ननुयदिराद्धोमुक्तस्तर्हिंसमृद्धइतिविशेषणंव्यर्थं । असमृद्धमुक्तस्यैवाभावेनाव्यावर्तकत्वादित्यत आह ॥ **मनुष्याणामिति** ॥ प्रयत्नाधिक्यात् ज्ञानोत्तरकृतराजसूयादिप्रयत्नाधिक्यात् । इत्यतःइतिहेतोः । असमृद्धमुक्तस्यापिसत्वान्नसमृद्धपदंव्यर्थमित्यर्थः। ननुज्ञानोत्तरानुष्ठितप्रयत्नाधिक्यान्मुक्तौप्राप्यमाधिक्यंनामनतावत्स्वरूपसुखस्यैवपुनराधिक्यं तस्यकॢप्तत्वेनानागंतुकत्वात् । नापिकॢप्तसुखस्यैवाभिव्यक्तिः ज्ञानेनावरणीभूताविद्यानिवृत्तावात्मस्वरूपसुखाभिव्यक्तेःसर्वसाधारण्यात् । नापिपृथगेवसुखंजायते तदनंगीकारात् । तत्कथमेतदितिचेत् मैवं । नाविद्यैवात्मस्वरूपस्यावरणं किंत्वीश्वरेच्छापि। तथाचज्ञानेनाविद्यायांनिवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखंचबहुतरंव्यज्यते नतुसर्वं । एवंचयोग्यतयासाम्येपियेन ज्ञानोत्तरंनिवृत्तकर्मानुष्ठानलक्षणंप्रयत्नाधिक्यंकृतं तेनतज्जन्येश्वरप्रसादद्वारायावत्स्वरूपाभिव्यक्तिलक्षणमाधिक्यंप्राप्तुंशक्यते। येनतुनतदनुष्ठितंतेननेति । एतदभिप्रायेणैवानंदवृद्धिह्रासप्रतिपादनंतत्रतत्रक्रियते । इदमपिदेवेषुनसंभवति देवानांयावत्स्वरूपाभिव्यक्तेःसत्वेनतत्रवृद्धिह्रासाभावादित्यतोमनुष्याणामित्युक्तं । मनुष्याणांचवृद्धिह्रासौवर्तेतेएव । यथोक्तं वृद्धिह्रासौविमुक्तिगौ नृणामिति यावत्स्वरूपानभिव्यक्तिलक्षणानंदह्रासंप्रतिविकर्मवत् भगवत्पूजात्मककर्माकरणमपिनिमित्तं । यथोक्तं कृष्णोपास्तिमकुर्वतः । ज्ञानिनोपियतोह्रासआनंदस्यभवेद्ध्रुवमिति । अयोग्यकान्महापदेविधातुरेषहिक्रतुः । समानयोग्यतागणात्करोतिमुक्तिगंवरमित्येतदपिचक्रवर्त्तिरूपमनुष्यपरंयोज्यं। तथाहिवाक्यशेषः । अतस्त्रिशंकुपुत्रकोनृपानतीत्यवर्ततइति। ननुसमृद्धप

भा० । मनुष्याणांयोग्यतयास्वसमेभ्यःप्रयत्नाधिक्यादाधिक्यंमुक्तौप्राप्तुंशक्यतइत्यतःसमृद्धइत्युक्तं ।

देनकथमेवंविधासमृद्धमुक्तव्यावृत्तिरित्यतःसमृद्धपदंव्याचष्टे ॥ यावदिति ॥ अन्यस्तुनैवंविधइत्यर्थः । नन्वन्येषामधिपतिरि
तिकथंमुक्तमनुष्यविशेषणं । मुक्तचक्रवर्तिनःसांसारिकान्याधिपतित्वायोगात् । नचयेसंसारावस्थायांचक्रवर्तिनियम्यास्तेषाम
पिमुक्तौतदाधिपत्यंसंभवतीतिवाच्यं । नियमाभावादित्यतआह ॥ स्वराड्इति ॥ पूर्वंस्वराड्मुक्तिसाधनज्ञानोपदेष्टृत्वात्तदुपदे
श्यानांतत्सहैवमोक्षात्मुक्तावपितेषामधिपतिरित्यर्थः । ननुसर्वैर्मानुष्यकैर्भोगैःसंपन्नतमइतिकथंमुक्तविशेषणं संसारगतमानुष्य
कभोगानांमुक्तावभावादित्यतस्तद्व्याचष्टे ॥ ज्ञानेति ॥ मानुष्यकैरित्यस्यार्थोमनुष्यत्वेचक्रवर्तित्वदशायांदानादिकंकृत्वातत्फलै
रिति । नकेवलंज्ञानफलैरित्यपेरर्थः । ननुमनुष्यत्वावस्थायांकृतदानादेःकाम्यत्वेस्वर्गादौनिष्कामत्वेचज्ञानजन्मन्येवोपक्षयइति
कथंतत्फलस्यमुक्तिगामित्वमित्यतउक्तं ज्ञानपूर्वकत्वेनेति । अपरोक्षज्ञानपूर्वकत्वेनेत्यर्थः । कृत्वेत्यनेनसंबंधः । अपरोक्षज्ञानोत्त
रकृतदानादिकर्मफलस्यमुक्तिगत्वंयुज्यतइत्यर्थः । अत्रश्रुतिमाह ॥ नहास्येति ॥ ननुस्रक्चंदनादिभोगसाधनैःसमृद्धोन्येषां
भृत्यादीनामधिपतिःसर्वैर्मनुष्यस्यावैर्भोगैः तत्करणैःसंपन्नतमइतिपरोक्तरीत्यासंसारिपरमेवेदंकिंनस्यादित्यतआह ॥ अन्यथेति॥
मुक्तपरत्वाभावइत्यर्थः । राद्धशब्दार्थसंसिद्धत्वस्यसंसारिण्यभावादसंभवाच्चराद्धइतिविशेषणंविरुद्धार्थमित्यर्थः । नचभोगक्षमा
वयवैराध्यात्मिकैःराद्धःसंसिद्धइतिव्याख्यायतइतिवाच्यं । तस्याप्यनित्यत्वेनराद्धशब्दमुख्यार्थत्वाभावात् । मुख्येसत्यमुख्य

भा० । यावत्साधयितुंशक्यतेतावत्साधनैःसंपूर्णत्वेनमुक्तइत्यर्थः । स्वराट्ज्ञानोपदेष्टृत्वान्मुक्तावपितेषामधिपतिः । ज्ञानपूर्वकत्वेनमनुष्य
त्वेदानादिकंकृत्वातत्फलैरपिभोगैर्मुक्तौसंपन्नतमः । नहास्यकर्मक्षीयतइतिश्रुतेः । अन्यथाराद्धइतिविशेषणंव्यर्थंभवति ।

ग्रहणायोगात् । उपलक्षणमेतत् । समृद्धइतिविशेषणंव्यर्थंभवतीत्यपिग्राह्यं मुक्तिंविनासम्यगृद्धेरभावेनसमृद्धपदस्यापिमुक्तमात्रवाचकत्वात् । ननुतस्येयंपृथिवीत्यादिपूर्वभाविव्यपेक्षयेत्यनुव्याख्यानेतस्येयंपृथिवीसर्वावित्तस्यपूर्णस्यादितितैत्तिरीयवाक्यस्यामुक्तपरत्वोक्त्यासमानन्यायतयान्येषामधिपतिरित्यादिवाक्यस्याप्यमुक्तपरत्वमभिप्रेतं । यथोक्तंसुधायां । अनेनैवन्यायेनान्येषामधिपतिरित्यादिकममुक्तविषयंप्रतिपत्तव्यमिति । तथाचतेनविरोधःस्यादितिचेन्न । अयमभिप्रायोभाष्यकारस्य नेदंवाक्यंसर्वथापरोक्तरीत्यासंसारिमात्रपरं तथात्वेराद्धत्वसमृद्धत्वयोरनुपपत्तेः किंतुमुक्तामुक्तपरंमुक्तमात्रपरंवा तत्रप्रथमपक्षमभ्युपेत्यानुव्याख्यानेराद्धसमृद्धशब्दयोःमुक्तपरत्वं राद्धःसंसिद्धइत्येवमुक्तएवावगम्यते इत्यनेनोक्त्वाऽन्येषामधिपतिरित्यादीनाममुक्तपरत्वमंगीकृतं अत्रतुद्वितीयपक्षमंगीकृत्यान्येषामधिपतिरित्यादिकमपिमुक्तपरत्वेनैवव्याख्यातं।एवंचराद्धःसमृद्धइत्येतन्मुक्तमात्रपरं अन्येषामधिपतिरित्यादिकंतुमुक्तामुक्तोभयपरं।तथाचोक्तंसुधायां।अन्येषामधिपतिरित्यादिकंतुमुक्तामुक्तसाधारणमितितस्मान्नकाप्यनुपपत्तिरिति । किंचैतद्वाक्यस्यसंसारिपरत्वेपरमआनंदइत्यानंदस्यपरमत्वविशेषणमयुक्तं। वैषयिकानंदस्यसांतत्वसदुःखत्वादिनापरमत्वाभावादितिभावेनाह ॥ सइति ॥ अस्त्वेवममुक्तानामपिस्वरूपानंदसद्भावेननानुपपत्तिरित्यतआह ॥ नहीति ॥ तथाचपरमआनंदइतिआविर्भूतस्वरूपानंदोविवक्षितइतिभावः । मास्त्वमुक्तस्यस्वरूपानंदाविर्भावः तथापिपरमानंदइ

भा० । समनुष्याणांपरमआनंदइतिस्वरूपानंदश्चात्रोच्यते । नह्यमुक्तानांस्वरूपानंदाविर्भावोस्ति ।

तिमुक्तज्ञापकंकुतइत्यतोमुक्तस्यस्वरूपानंदभोक्तृत्वेअन्येषांतदभावेचप्रमाणमाह ॥ भुज्यतइति ॥ अन्यैरमुक्तै स्ततोपरःस्व रूपसुखादन्य आभासोवैषयिकानंदोभुज्यते । एतत्प्रकरणस्यमुक्तपरत्वेद्वितीयवाक्यस्थमपिज्ञापकमाह ॥ जितलोकाइति ॥ जितलोकाःप्राप्तब्रह्मज्ञानाइत्यर्थः । ज्ञानसामान्यजयस्यचेतनमात्रसाधारणत्वेनावक्तव्यत्वात् । गंधर्वलोकआनंदइत्यस्यगंधर्व लोकेस्थितानामानंदइतिसंसारिपरत्वप्रतीतिनिरासायतदपिमुक्तज्ञापकंयथास्यात्तथाव्याचष्टे ॥ गंधर्वेति ॥ ब्रह्मेतियोग्यतयासं बंधः । अनेनप्रजापतिलोकइतिब्रह्मलोकइत्येतच्चव्याख्यातं । ननुजितलोकाइत्येतत्कथंमुक्तत्वज्ञापकं जीवन्मुक्त्यवस्थायामपि ब्रह्मज्ञानजयसद्भावात् । अतएवब्रह्मज्ञानेमुक्ताविति चकथंव्याख्यानमित्यतस्तदुपपादयति ॥ तदाहीति ॥ मुक्त्यवस्थाया मित्यर्थः । अन्यदातुतिरोभावादेःसंभवात् मुख्येसत्यमुख्यग्रहणायोगादितिभावः । लोकशब्देनात्रज्ञानमेवविवक्षितमितिकुतः प्रसिद्धलोकार्थत्वेबाधकाभावादित्यतआह ॥ एषइति ॥ आदिशब्दोनएषोस्यपरमोलोकइतिपूर्ववाक्यस्यएषब्रह्मलोकइत्युत्तर वाक्यस्यचग्रहणं । नचतत्रापिविवादःकर्तव्यः । ब्रह्मलोकइत्यस्यलोकनाल्लोकोज्योतीरूपंब्रह्मैवेति परमोलोकइत्यस्यलोकना ल्लोकःस्वयंज्योतिःस्वभावइति त्वयाव्याख्यातत्वात् । अथयेशतंकर्मदेवानामानंदाःसएकआजानदेवानामानंदोयश्चश्रोत्रियोऽ वृजिनोकामहतइतिवाक्यंपरैरेवंव्याख्यातं । येशतंकर्मदेवानामानंदाःसएकआजानदेवानामाजानतएवोत्पत्तितएवयेदेवास्तेआ

भा० । भुज्यतेस्वसुखंमुक्तैराभासोन्यैस्ततोपरइतिच । जितलोकाइत्यपिमुक्ताएवोच्यंते । गंधर्वलोकेगंधर्वाणांब्रह्मज्ञानेमुक्तावित्यर्थः । तदाहिब्रह्मज्ञानंसदोदितमवतिष्ठते । एषब्रह्मलोकःसम्राळित्यादिपुज्ञानस्यैवलोकशब्दोदितत्वात् ।

वचनस्य अर्थेन 'ये' इति

 

 



जानदेवास्तेषामानंदः । यश्चश्रोत्रियोऽधीतवेदः अवृजिनःपापरहितः अकामहतोनकामहतआजानदेवानंदावधिभूतपूर्वानंदेषु वितृष्णः एवंभूतस्याप्याजानदेवैःसमानआनंदःइत्यन्वाकृष्यतेचशब्दादिति । तदेतदसत् वाक्यभेदकल्पनाप्रसंगात् । आजानदेवानंदावधिभूतपूर्वानंदेष्वित्यस्याश्रुतस्यकल्प्यत्वात् । वितृष्णत्वरूपार्थस्याकामशब्देनैवलाभाद्धतशब्दवैयर्थ्याच्च । विरक्तानांसर्वत्रकामाभावात्तारतम्योक्त्यनुपपत्तेश्च । नचाजानदेवपदकामइतिविवक्षितमितिवाच्यं । अश्रुतकल्पनाप्रसंगात् पूर्वदूषितंचैतत्सविस्तरं । तस्माद्वचनव्यत्यासेनैकमेववाक्यमिदं । ततश्चश्रोत्रियत्वादिकंप्रकृताजानदेवादीनामेवविशेषणं । तर्हियश्चश्रोत्रियइत्यादिकंव्यर्थंकिमर्थमुच्यतइत्यतस्तदपिमुक्तज्ञापनार्थमेवेतिभावेनाह ॥ यश्चेति ॥ आजानदेवादीनामपीत्यपिशब्दोदेवोत्तमानामपीतिनियमेनानंदशतगुणोद्रेकसंभावनायां । अन्यदासंसारदशायां कदाचित्चित्तविक्षेपाभावदशायां भवति आनंदशतगुणोद्रेकइतिवर्तते कदाचित्प्रारब्धकर्मफलभोगदशायां श्रोत्रियत्वादिविशेषणविशिष्टानामाजानादीनामानंदशतगुणोद्रेकःकथ्यते श्रोत्रियत्वादिकंप्रोक्तवक्ष्यमाणन्यायेनमुक्तानामेवसंभवति नचामुक्तानां । तथाचमुक्तानामेवायंनियमोनान्येषामितिज्ञायतइतिभावः । ननुयेशतंकर्मदेवानामानंदाः सएकआजानदेवानामानंदः येचश्रोत्रियाःअवृजिनाअकामहतास्तेषामितिवाक्ययोजनायांचशब्दोनुपपन्नःस्यात् । चशब्दोह्ययंसमुच्चयस्यद्योतकः । देवदत्तोधनिकोयज्ञदत्त



---

भा० । यश्चश्रोत्रियइतिवचनंतेषामाजानदेवादीनामपिमुक्तानामेवायंनियमेनानंदशतगुणोद्रेकः । अन्यदातुकदाचिद्भवतिकदाचिद्व्याकुलतयानभवतीतिदर्शयितुं ।

श्चेतियथा । नचैकविषयतायामेवंयुज्यते । नहिभवतिवसिष्ठोब्रह्मिष्ठोरुंधतीपतिश्चेतिप्रयोगः । तस्माद्वाक्यभेदमंगीकृत्या
स्मदुक्तरीत्यैवव्याख्येयमित्यतआह ॥ चशब्दइति ॥ तथाचयेश्रोत्रियाःअवृजिनाअकामहताश्चेतिविशेषणसमुच्चायकत्वा
न्नदोषइतिभावः । ननुविभक्तिवचनव्यत्यासेनश्रोत्रियाणामवृजिनानामकामहतानांचाजानदेवानामितियोजनोपपत्तौयइति
विशेषणंव्यर्थं । नचयच्छब्दस्यबुद्धिस्थवाचकत्वान्मुक्तानांचात्रबुद्धिस्थत्वात्तत्स्वीकारार्थंतदितिवाच्यं । श्रोत्रियत्वादिवि
शेषणबलादेवतत्सिद्धेरित्यतआह ॥ मुक्तस्यैवेति ॥ एतेश्रोत्रियत्वादयोगुणाः मुक्तस्यैवभवंतिनान्यस्येतिवस्तुगतिप्रद
र्शनायेत्यर्थः । मुक्तस्यैवैतेगुणाभवंतीत्यत्रप्रमाणमाह ॥ सर्वमिति ॥ हियस्माच्छ्रोत्रियत्वंप्राप्तश्रुतिफलत्वं श्रुतिफलंच
मुक्तिस्तद्गतानंदातिशयश्च तत्सर्वंमुक्तैरेवप्राप्यं अतोमुक्तएवमुख्यतःश्रोत्रियः अन्योऽमुक्तः श्रोत्रियकः मुख्यतःप्राप्तश्रुतिफल
त्वाभावात् मुख्येसत्यमुख्यग्रहणायोगादित्यर्थः । यद्यपिश्रोत्रियशब्दःछंदोधिगतिनिमित्तोवगतः यथाह श्रोत्रियंछंदोधीतइ
ति । तथाप्यत्रपुरुषार्थप्रकरणत्वात् विशेषप्रमाणोक्तत्वाच्चायमेवार्थोग्राह्यः । अवृजिनत्वंचादुःखित्वं वृजिनंदुःखमित्युक्तेः
तच्चमुक्तस्यैवेत्यर्थः । कामैरहततातस्यैवेतिसंबंधः । तत्कुतइत्यतःकामहतशब्दार्थंतावदाह ॥ यइति ॥ उक्तमनुवदन्निमित्तांतर

भा० । चशब्दस्तुश्रोत्रियत्वावृजिनत्वाकामहतत्वादीनांगुणानांमुक्तौसमुच्चयार्थः । मुक्तस्यैवैतेगुणाभवंतीतिमुक्तस्वीकारार्थंयइतिविशेषणं ।
सर्वंश्रुतिफलंमुक्तैःप्राप्यंनान्येनकेनचित् । अतस्तुश्रोत्रियोमुक्तोह्यन्यःश्रोत्रियकोभवेत् । अदुःखत्वंचतस्यैवकामैरहततातथा । यःकामितंनप्राप्नो
तिसकामहतउच्यते ।

माह ॥ काम्याप्राप्तेरिति ॥ पापात्कामाच्चनिषिद्धकामाचेत्यर्थः । किंततइत्यतआह ॥ उभयस्येति ॥ एतेनयेकेचिदेकवाक्य
तामंगीकृत्यापि प्रकृतामुक्ताजानदेवविषयमेवयश्चश्रोत्रियइत्यादिवचनमितिव्याचक्षते तेपिनिरस्ताभवंति । उक्तरीत्यामुक्तेष्वश्रो
त्रियत्वादीनामसंभवात् । विषयवैराग्योपेतत्वादकामहतइतिव्याख्यानेहतशब्दवैयर्थ्याच्च । अश्रोत्रियत्वादिविशिष्टाजानदेवा
द्यभावेनव्यावर्त्याभावात् व्यर्थत्वाच्च । नेदंश्रोत्रियत्वादिकंविशेषणं किंत्वाजानदेवानांकर्मदेवेभ्यःशतगुणोद्रिक्तानंदवत्त्वेहेतुर
नेनोच्यतइतिचेन्न । सर्वत्रापिविद्यमानस्यश्रोत्रियत्वादेर्हेतुत्वायोगात् । नचकर्मदेवेभ्योप्यतिशयेनश्रोत्रियाअवृजिना
अकामहताश्चयइतिव्याख्यायतइतिवाच्यं । अश्रुतकल्पनाप्रसंगादिति । नन्वनुव्याख्याने अथयेशतंकर्मदेवानामानंदाः
सएकआजानदेवानामानंदोयश्चश्रोत्रियोवृजिनोकामहतइत्यत्रवाक्यभेदमंगीकृत्या द्यंवाक्यममुक्तपरंद्वितीयंमुक्तपरमिति
व्याख्यातं । यथोक्तं तस्मादमुक्तसुखगंतारतम्यंपृथक्पृथक् । उक्तंत्रायश्चेतिमुक्तानांतारतम्यंसुखेश्रुतिः । आहेतिपेशलमि
ति । तत्कथमत्रैकवाक्यमंगीकृत्यमुक्तमात्रपरंव्याख्यायतेइतिचेत् न । अयमभिप्रायोभाष्यकारस्य सर्वथाऽनुव्याख्यानो
क्तरीत्यावाक्यद्वयमेवेदंभिन्नविषयं । तथासतिमुक्तामुक्तयोरुभयोरपितारतम्योक्तिलाभात् । वाक्यभेदज्ञापकचशब्दसद्भा
वाच्च । उक्तंच । तच्चचशब्दादेवगम्यतइति वचनव्यत्यासादेरनाश्रयणीयत्वाच्च । एकवाक्यताश्रद्धायामप्यत्रोक्तरी
त्यामुक्तमात्रविषयमस्तुवचनव्यत्यासश्चशब्दोभिन्नक्रमश्चेत्यनुपपत्त्यल्पत्वात् । नतुपरोक्तप्रकारेणामुक्तमात्रविषयं तत्रोक्तरी

भा० । काम्याप्राप्तेश्चपापाच्चकामात्कामहतःस्मृतः । उभयस्याप्यभावेनमुक्तोऽकामहतोमतइतिच ।

पापात्



550

त्याअनुपपत्तिबाहुल्यात् । द्वितीयापव्याख्यानेवचनव्यत्यासादेःसाम्याच्चेति । आजानतएवोत्पत्तितएवयेदेवास्तेआजानदेवाइतिव्याख्यानमसत् । आगंतुकदेवत्वाभावेनव्यर्थत्वात् तस्मादनाख्यातादेवकुलेजाताएवाजानदेवाइत्युच्यंतइतिकश्चित् तदप्यसत् । कर्मदेवावराणांतेषांकर्मदेवोत्तमत्वोक्त्यसंभवादितिभावेनाजानदेवशब्दार्थमाह ॥ आजानेति ॥ जानाजातास्तेभ्यआसमीचीनावराआजानास्तेचतेदेवाश्चाजानदेवाइत्यर्थः । ननुयदियश्चश्रोत्रियइत्यादेःमुक्तज्ञापकत्वंतर्हिसएकःप्रजापतिलोकआनंदःसएकोब्रह्मलोकआनंदइतिवाक्यद्वयेयश्चश्रोत्रियइत्येतद्व्यर्थंस्यात् । गंधर्वलोकेगंधर्वाणांब्रह्मज्ञानेमुक्ताबित्युक्तरीत्याप्रजापतिलोकब्रह्मलोकपदाभ्यामेवप्रजापतिब्रह्मणोर्मुक्तत्वसिद्धेरित्याशंक्याह ॥ प्रजापतीति ॥ ब्रह्मलोकइत्युक्तेरेवमुक्तब्रह्मसिद्धावित्यपिग्राह्यं । अयंविशेषःश्रोत्रियत्वादिरूपः। एतेनश्रोत्रियत्वेनैवमुक्तत्वसिद्धेरन्यद्व्यर्थमित्यपिनिरस्तं । स्वरूपकथनायतदुपपत्तेः । ननुमुक्तस्यैवायंविशेषइतिकथं उपचरितश्रोत्रियत्वादेरमुक्तस्यापिसत्वात् । नचोक्तरीत्यानुपचरितश्रोत्रियत्वादिकंमुक्तस्यैवेतिवाच्यं तथाप्यनुपचरितश्रोत्रियत्वादिकमेवश्रुतौविवक्षितमित्यत्रज्ञापकाभावादितिचेत् न । मुख्येसत्यमुख्यग्रहणायोगस्यैवतज्ज्ञापकत्वात् । ज्ञापकांतरंचाह ॥ अनुपचरितेति ॥ यद्वानन्वेकत्रोक्तस्यैवसर्वत्रानुवर्तनेनमुक्तस्वरूपमेतादृशमितिज्ञातुंशक्यत्वात्किमर्थंयश्चश्रोत्रियइतिपुनःपुनर्वचनं । अन्यथासर्वत्रतदुक्तिप्रसंगादित्यतआह ॥ अनुपचरितेति ॥ अभ्यासोहि

---

भा० । आजानदेवाइंद्राद्याजातेभ्यस्तेवरायतइतिच । प्रजापतिलोकइत्युक्तेनैवमुक्तप्रजापतिसिद्धावपिमुक्तस्यैवप्रजापतेर्ब्रह्मणश्चायंविशेषइतिस्वरूपकथनार्थंयश्चश्रोत्रियइत्यादि । अनुपचरितश्रोत्रियादित्वमितिज्ञापयितुमभ्यासः ।

552

तात्पर्याधिक्यलिंगं। अधिकतात्पर्यविषयत्वादस्यार्थस्यानुपचरितत्वंसिध्यतीतिभावः । प्रयोजनांतरमाह ॥ सर्वेषामपीति ॥ कस्यचिन्मुक्तस्यैवमासीदितीतिहासरूपेणनोच्यते किंतुसर्वेषामप्येवमितिज्ञापनार्थमित्यर्थः। यथोक्तंपुरस्तात्। सर्वव्यक्तिष्वभिव्याप्त्यैतात्पर्याधिक्यवित्तये पुनर्वचनमुदिष्टमिति। प्रजापतिलोकेविराट्शरीरे ब्रह्मलोकेहिरण्यगर्भात्मनीतिव्याख्यानमसत्। विराट्शरीरकव्यतिरिक्तस्यहिरण्यगर्भस्याभावात् । नहिविराट्शरीरकत्वावस्थापन्नात्स्वस्मादेवहिरण्यगर्भत्वावस्थापन्नस्यशतगुणानंदवत्त्वंप्रामाणिकं प्रजापतिशब्दस्यैवविराट्शरीरवाचकत्वस्यब्रह्मशब्दस्यैवहिरण्यगर्भवाचकत्वस्यचोपपत्तौलोकशब्दवैयर्थ्याच्च । तस्मात्तेभ्यश्चोमापतेरित्युक्तरीत्याप्रजापतिशब्दउमापतिपरइत्येवकर्तव्यं। तदपिकथमित्यतःप्रजापतिशब्दमुमापतौनिर्वक्ति॥ प्रजा इति ॥ अथैषएवपरमआनंदएषब्रह्मलोकइत्यस्यएषएवततोविष्णुःपूर्णानंदइतिपरमात्मपरत्वेनव्याख्यानमसत् । तस्याप्रकृतत्वेनैषइतितत्परामर्शायोगात्। नचैतस्यैवानंदस्येत्यत्रसोपिप्रकृतइतिवाच्यं । सएकोब्रह्मलोकइतिपूर्ववाक्येब्रह्मलोकशब्दोक्तहिरण्यगर्भात्मनएवैषब्रह्मलोकइत्येतेनपरामर्शसंभवेसत्यदूरोक्तपरमात्मपरामर्शायोगादित्यतआह ॥ अथेति ॥ एषब्रह्मलोकइतिद्वितीयब्रह्मलोकशब्दस्यनपूर्वोक्तहिरण्यगर्भपरत्वंवक्तुंयुक्तं तथासतिप्रकरणविच्छेदकाथशब्दायोगात् एषब्रह्मलोकइतिविशेषणायोगाच्च । नहिएषहिरण्यगर्भोब्रह्मलोकोहिरण्यगर्भात्मेत्युपपन्नं । किंतुपरब्रह्मपरत्वमेव। तथासतितयोरुपपन्नत्वादित्यर्थः । यत्प्रजापतेरपि

भा० । सर्वेषामपिमुक्तानांनियमेनतत्स्तीतिज्ञापयितुंच । प्रजास्तुपशुशब्दोक्ताःपशुपस्तुप्रजापतिरितिच । अथशब्दादेषब्रह्मलोकइति विशेषणाच्चद्वितीयब्रह्मलोकशब्देनपरब्रह्मैवोच्यते ।

शतगुणानंदोब्रह्मा अथतस्मादेषएवपरमआनंदइत्यथशब्दोहेत्वर्थत्वेनोपपद्यतइतिचेन्न । अथयेशतंमनुष्याणामानंदाइत्यादाविवा त्राप्यथशब्दस्यप्रकरणविच्छेदार्थकत्वस्यावश्यकत्वात् । ननुयत्रानंदोत्कर्षतारतम्यंविश्रांतमेषब्रह्मलोकोहिरण्यगर्भात्मापरमानं दइतिव्याख्यानान्नैषब्रह्मलोकइत्यस्यवैयर्थ्यमित्यतआह ॥ अन्यथेति ॥ पूर्वेणएषएवेत्यनेनप्रकृतपरामर्शसिद्धेर्द्वितीयएषइति शब्दोऽनर्थकःस्यादित्यर्थः । नचयुष्मद्रीत्यावाक्यभेदमंगीकृत्यैषएवहिरण्यगर्भः परमआनंदएषहिरण्यगर्भोब्रह्मलोकःपूर्णज्ञा नइतिवाएषहिरण्यगर्भोब्रह्मलोकःज्योतीरूपब्रह्मस्वरूपइतिवाव्याख्यायतइतिवाच्यं । निरूपचरितपरमत्वस्यपूर्णत्वस्यचाविष्णो रन्यत्राभावात् हिरण्यगर्भात्मनोब्रह्मस्वरूपत्वस्यसर्वप्रमाणविरुद्धत्वाच्चेतिभावः । पुनःप्रयुक्तइतिशेषः । तेनसमानकर्तृता । परब्रह्मैवोच्यतइत्यत्रहेत्वंतरमाह ॥ तस्यैवेति ॥ सलिलएकोद्रष्टाद्वैतोभवतिएषब्रह्मलोकःसम्राडिति पूर्वंब्रह्मलोकशब्देनतस्यै वपरब्रह्मणएवश्रवणाच्चेत्यर्थः । यद्वाब्रह्मलोकशब्देनपूर्णज्ञानप्रतिपादकशब्देनेत्यर्थः । तथाचैषब्रह्मलोक एषोऽस्यपरमोलोक इत्युभयमादायाभ्यासोद्रष्टव्यः । यद्वा सलिलएकोद्रष्टाद्वैतोभवतिएषब्रह्मलोकइतिपूर्ववाक्यगतं विपापोविरजोविचिकि त्सोब्राह्मणोभवतिएषब्रह्मलोकःसम्राडित्युत्तरब्राह्मणस्थवाक्यगतंचब्रह्मलोकशब्दमादायाभ्यासः । ननु तेयेशतंमानुषाआनं दाःसएकोमनुष्यगंधर्वाणामानंदःतेयेशतंमनुष्यगंधर्वाणामानंदाःसएकोदेवगंधर्वाणामानंदःतेयेशतंदेवगंधर्वाणामानंदाः सएकः पितॄणांचिरलोकलोकानामानंदइतितैत्तिरीयश्रुतौ क्षितिपामनुष्यगंधर्वादेवाश्चपितरश्चिराइतिश्रुत्यंतरेचमनुष्यपदवाच्यचक्रवर्ति 553

6/8/22



भा० । अन्यथैषएवपरमआनंदइत्युक्त्वापुनरेषइतिशब्दोनर्थकःस्यात् । तस्यैवब्रह्मलोकशब्देनपूर्वमभ्यासाच्च ।

भ्योमनुष्यगंधर्वाणांतेभ्योदेवगंधर्वाणांतेभ्यःपितॄणांशतगुणानंदत्वमुक्तं । क्वचित्तुचक्रवर्तिभ्यएवदेवगंधर्वाणांशतगुणानंदत्वमुक्तं । अत्रतुचक्रवर्तिभ्यएवपितॄणांशतगुणानंदत्वमुच्यते । अतोविरोधइत्यतस्तंपरिहरति ॥ **नचेति** ॥ कुतइत्यतःशतशब्दार्थंतावदाह ॥ **शतशब्दस्येति** ॥ तथापिविरोधपरिहारःकथमित्यतआह ॥ **अतइति** ॥ तथाचयत्रदेवगंधर्वाणामेवचक्रवर्तिभ्यःशतगुणानंदत्वमुच्यते तत्रशतशब्दोऽयुतार्थः अत्रतुदशलक्षार्थकइतिनविरोधइतिभावः । एतेनैतदपिनिरस्तं श्रुत्यंतरे इंद्रादिभ्यःपार्वत्यादीनांततोरुद्रस्यततःसरस्वत्याःततोब्रह्मणःशतगुणानंदवत्त्वोक्तेःकथमत्रेंद्राद्याजानदेवेभ्यःप्रजापतेस्तस्माद्ब्रह्मणःशतगुणानंदत्वमुच्यतइति । येशतमाजानदेवानामानंदाइत्यत्रयेशतंप्रजापतेरानंदाइत्यत्रचशतशब्दस्यायुतवाचित्वात् । ननुतैत्तिरीयादिश्रुतौपितॄणांगंधर्वापेक्षयाआधिक्यमुक्तं अत्रतुपित्रपेक्षयागंधर्वाणामतोविरोधात्कथमेतदुक्तमित्यतआह ॥ **उत्तमेति** ॥ तुंबुरुप्रमुखाणांगंधर्वाणांआजानदेवतासमत्वेनपितृभ्यस्तेषामाधिक्यंयुज्यतइत्यर्थः । यथोक्तं तुंबुरुप्रमुखायेचेत्यादि । नन्वत्राजानदेवानांकर्मदेवोत्तमत्वमुच्यते तैत्तिरीयादिश्रुतौतुकर्मदेवावरत्वमित्यतोविरोधइत्यतआह ॥ **आजानदेवेभ्यइति** ॥ तैत्तिरीयादिश्रुतौहिआजानजानांदेवानामितिपाठः अत्रत्वाजानदेवानामित्येव । तथाचात्रोक्तानांजातेभ्योवरा

---

भा० । नचतैत्तिरीयादिश्रुतिविरोधः । शतशब्दस्यायुतेदशलक्षादावपिसमत्वात् । अतश्चक्रवर्तिभ्योमनुष्यगंधर्वाःशताधिकाः । देवगंधर्वाअयुताधिकाः । पितरोदशलक्षाधिकाइत्यविरोधः । उत्तमगंधर्वापेक्षयापितृभ्योगंधर्वाणामाधिक्यंचयुज्यते । आजानदेवेभ्योजाताआजानजाइत्यतस्तत्राप्यविरोधः ।

णांआजानदेवानामिंद्रादीनांकर्मदेवोत्तमत्वेपितत्रोक्तानामाजानदेवेभ्यइंद्रादिभ्योजातानामनाख्यातानांकर्मदेवावरत्वंयुज्यतइ तिनविरोधइतिभावः । ननुयत्रवाक्यआजानजाइत्येवकर्मदेवानामुपरिपाठस्तद्वाक्यस्यतैत्तिरीयादिश्रुतिविरोधःस्यादेव । त त्राजानजानांकर्मदेवावरत्वेनोक्तत्वादित्यतआह ॥ यत्रेति ॥ स्यादयंविरोधः यदितैत्तिरीयादिश्रुतौआजानजशब्दोक्ताइं द्रादिदेवेभ्योजाताअनाख्यातादेवाएवात्रोच्येरन् नचैवं । किंनाम आजानेभ्योजातेभ्योवरेभ्योब्रह्मादिभ्योजाताइंद्राद्या एवाजानजशब्देनोच्यंते । तेषांचकर्मदेवोत्तमत्वंसंभवतीतिनविरोधइतिभावः । ननुतैत्तिरीयादिश्रुतौदेवेभ्यइंद्रस्येंद्राद्बृह स्पतेस्तस्माच्चप्रजापतेःशतगुणानंदत्वमुक्तं अत्रतुआजानशब्दवाच्येभ्योदेवेभ्यएवप्रजापतेःशतगुणानंदत्वमतोविरोधइत्यतआ ह ॥ इंद्रेति ॥ तैत्तिरीयवाक्यस्यविशेषवचनत्वादस्यचसामान्यवचनत्वात्तत्रोक्तविशेषोत्राप्यंगीकार्यएवेत्यर्थः । विशेषवच नोक्तमपिसामान्यवचनेकुतोग्राह्यमितिचेत् विशेषवचनस्यसामान्यवचनापेक्षयाबलवत्त्वात् । प्रबलानुसारेणदुर्बलस्यनेयत्वा दितिभावेनविशेषवचनस्यसामान्यवचनाद्बलवत्त्वेप्रमाणमाह ॥ सामान्येति ॥ वैशेषिकात्तत्तदाश्रमोचितधर्मात्जपो पदेशादिरूपात्सामान्यधर्मःसर्ववर्णसाधारणधर्मोविष्णुभक्त्यादिरूपोयथाबलवांस्तथासामान्यवचनात्विशेषवचनंबलवदितिसं बंधः । ननुतैत्तिरीयश्रुतौइंद्रावरस्यबृहस्पतेरिंद्रोत्तमत्वमुच्यते तत्कथंतत्रोक्तोविशेषोंगीकार्यइत्याशंकांपरिहरन्अशेषमुक्तता

भा० । यत्राजानजाइत्युपरिपाठस्तत्राजानेभ्योब्रह्मादिभ्योजाताइतिभवति । इंद्रबृहस्पत्यादीनांविशेषस्तुविशेषवचनत्वादत्राप्यंगीकर्तव्य एव । सामान्यधर्मोबलवान्धर्माद्वैशेषिकाद्यथा । बलवद्विशेषवचनंसामान्यवचनात्तथेतिच ।

रतन्यप्रतिपादकप्रमाणमाह ॥ नृपाइति ॥ देवाःदेवगंधर्वाः देवैराजानजैः सहितगंधर्वाइतिकेषांचिद्गंधर्वाणामाजानज समस्तोक्त्योत्तमगंधर्वापेक्षयेत्युक्तमपिप्रमापितं इंद्रइत्यनुवादेनबृहस्पतिरितिव्याख्यातं । तथाबृहस्पतिरित्यनुवादेनप्रधानें द्रइतिव्याख्यातं प्रधानेंद्रशब्देनयज्ञनामकेंद्रप्रतीतिनिरासायपुरंदरइत्याह । ननुजनकेनातऊर्ध्वंविमोक्षायब्रूहीत्येकवारंपृष्टे पिविशिष्टमोक्षसाधनंयाज्ञवल्क्योवक्ष्यत्येवकिमर्थंपुनःपुनःप्रक्रमात्तथाप्रश्नइत्यतस्तदभिप्रायमाह ॥ अतीति ॥ किंततःप्रकृ तेइत्यतआह ॥ एकामिति ॥ महांतंप्रतिकथंपुनःपुनःप्रश्नकरणमित्यतआह ॥ अत्रेति ॥ याज्ञवल्क्यदत्तादितिशेषः । अत्रहयाज्ञवल्क्योबिभयांचकारेत्युक्तंयाज्ञवल्क्यस्यपुनःपुनःप्रश्नकरणनिमित्तकंभयंस्वस्यतत्परिहारासामर्थ्यादितिप्रतीयतेतांपरि हर्तुंभयनिमित्तमाह ॥ रहस्यमिति ॥ राज्ञःसुमेधयाभीतइतिसंबंधः । सर्वेभ्योमांतेभ्यःउदरौत्सीदितितेभ्यइतिकस्यपराम र्शः । अव्यधानेनकस्याप्यप्रकृतत्वादित्यतःपूर्वाध्यायेप्रश्नकर्तृत्वेनप्रकृताश्वालदिपरामर्शइतिभावेनाह ॥ तेभ्यइति ॥

---

भा० । नृपामनुष्यगंधर्वादेवाश्चपितरस्तथा । दैवैःसहितगंधर्वात्रऋपयोदेवतास्तथा । इंद्रोबृहस्पतिश्चैवप्रधानेंद्रःपुरंदरः । रुद्रोब्रह्मेतिक्र मशोमुक्ताःशतगुणोत्तराइतिच । अतिप्रयत्नतोयावत्प्राप्तुंशक्यंविमुक्तिगं । सुखाद्यंतस्यसंप्राप्त्यैज्ञानश्रेण्यःक्रमात्स्मृताः । एकांश्रेणींप्रविज्ञायतदुत्कृ ष्टांचतद्वरां । क्रमेणैवविजिज्ञासुर्जनकःपृच्छतिस्मह । पुनःपुनर्विमोक्षायब्रूहीत्यद्भावरात्पुरेतिच । रहस्यमस्यायोग्यंचयदिमामेपपृच्छति । दत्तो मयावरोस्येतिवक्तव्यंमेभविष्यति । इतिभीतोभवद्राज्ञोयाज्ञवल्क्यःसुमेधयेतिब्रह्मांडे । तेभ्यआश्वलादिभ्यः ॥ ३३ ॥

॥ ३३ ॥ ननु सर्वाएषएतस्मिन्निति पूर्वोक्तमेवपुनःकिमर्थमुच्यतइत्यतस्तत्रप्रमाणमुदाहृत्यपुनर्वचनकृत्यमाह ॥ सर्वदेति ॥ एवंनियमविज्ञप्तिरपिकिमर्थेत्यतउक्तं ॥ जीवेति ॥ परिवृत्तिंपरिवर्तनं ॥ ३४ ॥ तद्यथाऽनःसु समाहितमुत्सर्जद्यायादित्यत्रो त्सर्जनक्रियायाःसकर्मत्वादत्रकर्मानुक्तेस्तद्दर्शयति ॥ ग्रामादिकमिति ॥ अनेनउत्सर्जत्नानाविधंशब्दंकुर्वदितिव्याख्यानमप दार्थतयानिरस्तं प्रमाणविरुद्धत्वाच्चतन्नयुक्तमितिभावेनसमग्रवाक्यव्याख्यानरूपंप्रमाणमाह ॥ यथेति ॥ सुसमाहितमित्यस्यार्थः पुमधिष्ठितमिति ॥ ३५ ॥ सयत्राणिमानंन्येतीत्यस्यसोयंदेहअणिमानंकार्श्यंयदान्येतिगच्छतितदोर्ध्वोच्छ्वासीभवतीतिव्याख्या ननिरासायाणिमशब्दार्थमाह ॥ अणिमानमिति ॥ अणिमशब्दस्यभगवद्वाचकत्वेश्रुतिमाह ॥ सइति ॥ मरणकालेजीवो भगवंतंगच्छतीतिवाक्यार्थेसमाख्यामप्याह ॥ तेजइति ॥ तेजःश्रीः परस्यांदेवतायांसंपद्यतेश्रिया(सह)भगवंतंप्राप्नोतीत्यर्थः । यद्वासयएषोणिमेत्यत्रपुरुषंसोम्योपतापिनंज्ञातयःपर्युपासतइतिपूर्वोक्तजीवपरामर्शएवकिंनस्यादितिचेन्न । तेजःपरस्यांदेवताया मित्यव्यवहितपूर्ववाक्यप्रकृतपरदेवतापरामर्शस्यैवग्राह्यत्वादितिभावेनाह ॥ तेजइति ॥ उपतपतेत्यस्यपुरुषपरत्वेन्वयासंभवा

---

भा० । सर्वदाजीवमादायनियमाद्विष्णुरेवहि । जाग्रदादिपुसंयातिनान्यथातुकथंचन । एवंनियमविज्ञप्त्यैजीवास्वातंत्र्यवित्तये । परिवृत्तिमवस्थासुसाभ्यासावक्तिहिश्रुतिरितिनिर्णये । अतस्तात्पर्यार्थंपुनर्वचनं ॥ ३४ ॥ ग्रामादिकमुत्सर्जद्यायात् । यथाग्रामंपरित्यज्ययात्यनःपुमधिष्ठितं । एवंदेहंपरित्यज्यविष्णुनाधिष्ठितःपुमानितिच ॥ ३५ ॥ अणिमानंभगवंतं । सयएषोणिमातेजःपरस्यांदेवतायामितिहिश्रुतिः ।

त्तदनूद्यव्याचष्टे ॥ उपतपतेति ॥ उपतापयतीत्युपतपन्निति उपतपतेत्यनेन रोगादिकमुच्यत इत्यर्थः । तद्यथाम्रंऔदुंबरंवापिप्पलं वेतिदृष्टांतत्रयाभिधानंकिमर्थमित्यतस्तदभिप्रायमाह ॥ आम्रमिति ॥ प्राणायैवेत्यस्यशरीरांतरग्रहणायेतिव्याख्याननिरासायतदनूद्यपुनःप्रतिन्यायंप्रतियोन्याऽऽद्रवतिप्राणायैवेतिवाक्यव्याख्यानरूपप्रमाणमेवाह॥ प्राणायैवेति ॥ वायुमेवार्चिरादिमार्गगतं मुख्यवायुमेव । ननुवायुंप्रतीदानीमेवाद्रवणाच्छ्रुतौपुनःप्राणायैवाद्रवतीतिकथमुक्तमित्यतआह ॥ तदनुज्ञयैवेति ॥ यतोवाय्वनुज्ञयैवजीवस्यज्ञानित्वंजातं । अतोर्चिरादिमार्गस्थवायुंप्रत्यागमनंपुनरागमनमित्यर्थः । तदेवविवृणोति ॥ सर्वेपीति ॥ सर्वेजायंतेज्ञानिनश्चभवंतीतिशेषः । ज्ञानिनोऽखिलाइत्यस्योत्तरत्रापिसंबंधः ॥३६॥ एवंविदंसंसारिणंसर्वाणिभूतानिशरीरारंभकाणिप्रतिकल्पंतेप्रतीक्षंतेस्वात्मनिदेहाकारेणपरिणतेसतितत्राऽऽत्माभिव्यक्तिमाकांक्षंते । कथं इदंब्रह्माभिन्नंभोक्तृकर्तृचायातीदमागच्छतीतिव्याख्यानमसदितिभावेनेदंब्रह्मायातीदमागच्छतीतिवाक्यंव्याचष्टे ॥ इदमिति ॥ एवंसत्ययमायात्ययमागच्छतीतिदृष्टांतवा

भा० । उपतपतारोगादिना । आम्रंवाल्येपिपततिपरिणामेह्युदुंवरं । सम्यक्पाकेयथाश्वत्थंफलंजीवमृतिस्तथा । कलावाम्रोपमाजीवास्त्रेतास्वौदुंवरोपमाः । कृतेश्वत्थसमाश्चैवयांतिब्रह्मवशाःसदेतिपाद्मे । प्राणायैव वायुमेवाद्रवत्येपजीवोमोक्षायतत्वविन् । तदनुज्ञयैवज्ञानित्वसतस्तंपुनराव्रजेत् । सर्वेपिवायुमासाद्यजायस्वज्ञानमाप्नुहि । इतितस्यवरादेवजायंतेज्ञानिनोखिलाः । पुनस्तंप्राप्यमुक्तिंचप्राप्नुयुस्तदनुज्ञयेतिप्रवृत्ते ॥ ३६ ॥ इदंमुक्तजीवस्वरूपमायाति । अतोनेनसदेहंपरंब्रह्मायातीतिपरब्रह्मणःपूजार्थंप्रतिकल्पंते ।

क्यानानुगुण्यंस्यादित्यतस्तदपियथावद्याचष्टे ॥ यथेति ॥ परोक्तएवार्थःकिंनस्यादितिचेत् अचेतनानांशरीरारंभकभूतानामु कप्रकारप्रतीक्षासंभवात् । बाधकांतरमाह ॥ अन्यथेति ॥ अयमायातीत्ययमागच्छतीतिदृष्टांतवाक्येपिद्विरुक्तिर्व्यर्थास्यादि त्यपिग्राह्यं । नन्वादरार्थवीप्सात्वोपपत्तेर्नद्विरुक्तिवैयर्थ्यमित्यतआह ॥ वीप्सात्वेति ॥ इदंब्रह्मायातीत्येकप्रकारेणशब्दा भ्यासःस्यादित्यपिद्रष्टव्यं । आदरार्थवीप्सात्वेएकप्रकारएवशब्दानामभ्यासोभवेदित्यत्रप्रमाणमाह ॥ एकेति ॥ तुशब्द एवार्थः । आदिपदेनपदग्रहणं । अपितस्यैकार्थप्रतिपादकतयाप्रतीयमानत्वेपीत्यर्थः । वाक्येवीप्सापदेचैकप्रकारशब्दाना मभ्यासत्वादरार्थकइतिसंबंधः । प्रातिस्विकार्थेस्थितेभ्यासेपितथावातथैवभवेत् । यथाऽन्नमयादिषुपंचसुवर्तमानोब्रह्मशब्दः । आदरार्थमिदंपुनर्वचनमित्यंगीकारेआगमविरोधमभिधायलौकिकप्रयोगोपितथानास्तीत्याह ॥ नचेति ॥ अंतरितप्रयोगस्तु द्विरूपोदृष्टः यथाकदाचिन्मैत्रआयात्विति अन्यदात्वागच्छत्विति अतोऽनंतरितइत्याह । नन्विदंमुक्तजीवस्वरूपमिति व्याख्यानमयुक्तं । सर्वेषांभूतानांमुक्तजीवस्वरूपदर्शनाभावात् । नचसर्वाणिभूतानीतिसर्वभूतशब्दोदेवपरः तथासतिदे 559

भा० । यथाराज्ञोध्वजादिकंदृष्ट्वायंध्वजआगच्छतितस्माद्राजायातीतिपूजांप्रतिकल्पंतेतद्वत् । अन्यथेदंब्रह्मायातीदमागच्छंतीतिद्विरुक्ति र्व्यर्थास्यात् । वीप्सात्वेत्वयमायातीत्येकप्रकारेणशब्दाभ्यासःस्यात् । एकप्रकारशब्दानामभ्यासस्त्वादरार्थकः । स्वरवर्णादिमात्रंवाप्यन्यथाचे त्तदापरः । अर्थःस्यादेषनियमोवाक्येवीप्सापदेतथा । प्रातिस्विकार्थेपिभवेदभ्यासेवातथास्थितइतिशब्दनिर्णये । नचकुत्रचिदादरार्थेद्विरूपप्रयोगो दृष्टोनंतरितः ।

वानाममुक्तजीवसहागतहरिदर्शनस्यापिसत्वेनेदंमुक्तजीवस्वरूपमितिमुक्तग्रहणायोगादित्यतआह ॥ **यदेति** ॥ स्वकृतव्या
ख्यानदार्ढ्याय तद्यथाराजानमायांतमित्यादिश्रुतिव्याख्यानरूपंप्रमाणमाह ॥ **यथेति** ॥ सयत्रायमणिमानंन्येतीत्युक्ताणि
मशब्दस्यकार्श्यार्थत्वेबाधकंसूचयन्भगवदर्थत्वंयुक्त्याद्रढयति ॥ **तस्मादिति** ॥ सर्वगतस्यब्रह्मणःकथमणिमत्वमितिशं
कानिरासायजीवगतमित्युक्तं । यस्मादुक्तप्रकारेणेदंब्रह्मयातीत्युत्तरवाक्येजीवगतंब्रह्मैवोच्यते तस्मात्सयत्राणिमानमितिपू
र्ववाक्येप्यणिमशब्देनजीवगतब्रह्मैवोच्यते अन्यथोत्तरवाक्येइदंब्रह्मेतिप्रकृतपरामर्शकेदंशब्दानुपपत्तेरितिभावः। ननुदह्यमानगे
हांतर्गतस्यदाहवज्जीवस्योपतापादिकेसतितदंतर्गतब्रह्मणोपिस्यादित्यतआह ॥ **जीवेति** ॥ अग्निस्तंभनवतोदाहाभाववत्सामर्थ्य
वैशेष्येणजीवगतस्यापिब्रह्मणोजीवोपतापादिकंनैवभवतीत्यर्थः । तद्यथाराजानंप्रयियासंतमित्यादिवाक्यंमरणकालेगच्छंतंजीव
मनुवागादिप्राणाःसमायांतीतिप्रतीतिनिरासायतत्प्रमाणेनव्याचष्टे ॥ **जीवमिति** ॥ गच्छंतंविष्णुमित्यन्वयः ॥ ३७ ॥ उग्राः
क्रूरकर्माणःप्रत्येनसःपापिष्ठशासकाग्रामण्योग्रामनेतारइत्यन्यथाप्रतीतिनिरासायोग्रादिशब्दार्थमाह ॥ **उग्रास्त्विति** ॥ श्रेणयः

---

भा० । यदामुक्तोव्रजत्यूर्ध्वंतदातत्सहितोहरिः । नियमादृश्यतेदेवैरमुक्तैर्नियमोनतु । यथाध्वजादिकंदृष्ट्वापूजांराज्ञःप्रकुर्वते । एवंविमुक्तिगं
दृष्ट्वाविष्णोःपूजांप्रकुर्वतइतितत्त्वनिर्णये । तस्मादणिमानंन्येतीत्यादिनाजीवगतंब्रह्मैवोच्यते । जीवोपतापादितुनैव । जीवमादायगच्छंतमनुयांति
दिवौकसः । प्राणाभिमानिनोविष्णुंनृपंपरिजनायथेतिच ॥ ३७ ॥ उग्रास्तुश्रेणयःप्रोक्तायोधाःप्रत्येनसःस्मृताः ।

प्रधानाः। ननुतद्यथाराजानमायांतमुग्राइत्यादिनोग्रादीनांराजागमनेतत्पूजाकल्पकत्वमुक्तं इदानींतेषांराज्ञासहगमनमुच्यतेअतो विरोधइत्यतआह ॥ तेसर्वइति ॥ द्वैविध्यमेवदर्शयति ॥ राज्ञेति ॥ किमुग्रादयःपरस्परंसमाः नेत्याह ॥ तेसर्वइति ॥ ननुज नपदस्थोग्रादिस्थानीयाःराजसहस्थितोग्रादिस्थानीयाश्चदेवाएव अतोदृष्टांतानानुगुण्यमित्यतोदेवानामपिद्वैविध्यमाह ॥ अनुयांतीति ॥ ३८॥ ततश्चायंखंडार्थः॥ जनकंवैदेहंप्रतियाज्ञवल्क्योजगाम। किमर्थं एनेनानेनजनकेनराज्ञासंवदिष्येसंवादंकरिष्येइति संवादकामुकतयावैदेहंप्रत्येवगमनेनिमित्तमाह ॥ अथहेति ॥ जनकोवैदेहश्चयाज्ञवल्क्यश्चेत्येतावग्निहोत्रेअग्निहोत्रविषयेयद्यदा समुदातेसंवादंकृतवंतौ तदाराज्ञोऽग्निहोत्रविषयमतिविशदंज्ञानमुपलभ्यसंतुष्टोहयाज्ञवल्क्यस्तस्मैराज्ञेवरंददौ। सराजा कामप्रश्नमेवेच्छाप्रश्नमेव वरंवव्रे। नत्वैश्वर्यादिकं हेत्याश्चर्ये। तंराज्ञायाचितंकामप्रश्नवरमस्मैराज्ञेददौ याज्ञवल्क्यः। हेतियाज्ञवल्क्यस्यकामप्रश्नपरिहारसामर्थ्यप्रसिद्धमितिसूचयति। यद्यस्मादेवंपूर्वंजनकायकामप्रश्नवरंददौयाज्ञवक्योऽथहतस्मादेवजनकंप्रतिसंवादकामुकोजगामेत्यर्थः। यद्यपितवपूर्वंकामप्रश्नवरोमयादत्तस्त्वत्पृष्टंचवक्तुमिदानीमागतोस्मित्वयायथेष्टंप्रष्टव्यमितियाज्ञवल्क्यवच

भा०। ग्रामण्यस्तुचमूपालास्तेसर्वेद्विविधामताः। राज्ञासहस्थिताश्चैवतथाजनपदेस्थिताः। तेसर्वेपिनियंतव्याःश्रेणीभिर्द्विविधैःसदेतिराजनीतौ। अनुयांतिशरीरस्थाअभियांतिस्वलोकगाः। मुक्तमादायगच्छंतंविष्णुंसर्वेदिवौकसइत्यध्यात्मे ॥ ३८ ॥ इतिज्योतिर्ब्राह्मणं ॥ ३ ॥

उप०। जनकꣳहवैदेहंयाज्ञवल्क्योजगामसमेनेनवदिष्यइत्यथहयज्जनकश्चवैदेहोयाज्ञवल्क्यश्चाग्निहोत्रेसमूदाते। तस्मैहयाज्ञवल्क्योवरंददौसहकामप्रश्नमेववव्रेतꣳहास्मैददौतꣳहसम्राडेवपूर्वःपप्रच्छ ॥ १ ॥

नानंतरमेवराज्ञाप्रश्नःकर्तव्यस्तथापिऔत्सुक्यात्सम्राडेवपूर्वःपूर्वंपप्रच्छ ॥ १ ॥ किमिति याज्ञवल्क्य अयंपुरुषःसंसारी किंज्योतिः यस्यासौकिंज्योतिरिरिति । अस्यपुरुषस्यप्रवृत्त्यादिव्यापारेस्वयमसमर्थत्वेनाकिंचित्ज्योतिरपेक्षितं तत्किमित्यर्थः । एवंपृष्टोयाज्ञवल्क्योहेसम्राडयंपुरुषःआदित्यएवज्योतिर्यस्यासावादित्यज्योतिरित्युवाच हेत्यादित्यज्योतिष्ट्वंजीवस्यप्रसिद्धमित्याहआदित्यज्योतिष्ट्वमेवोपपादयति॥ आदित्येनैवेति॥यस्मादयंपुरुष आदित्येनैवज्योतिषाऽऽस्तेतिष्ठति उपविशतिवा पल्ययतेग्रामादिकंप्रतिगच्छति तत्रकर्मकुरुते विपल्येतिपुनःप्रत्यावर्तते तस्मादयमादित्यज्योतिरित्यर्थः। दिवाबाह्यज्योतिष्वादित्यस्यप्राधान्यापेक्षयैवशब्दो नतुज्योतिरंतराभावाभिप्रायेण दिवापिवागादीनांसत्वात् । एवंयाज्ञवल्क्योक्तंराजांगीकृतवानित्याह ॥ एवमेवेति ॥ हेयाज्ञवल्क्यैतत्त्वयोक्तमेवमेव ॥२॥ तथापिआदित्यास्तमयेपिपुंप्रवृत्तिदर्शनादादित्येस्तमितेसत्ययंपुरुषःकिंज्योतिरेव आदित्यस्यास्तमयात्पुंप्रवृत्तिहेतुभूतंज्योतिःकिमेवस्यादित्यर्थः । अस्यपुरुषस्य आदित्यास्तमयादिकाले चंद्रमाएवज्योतिर्भवति । तदेवोपपादयति॥ चंद्रमसैवेति ॥ रात्रौबाह्यज्योतिःषुचंद्रस्यप्राधान्यापेक्षयाऽवधारणं ॥ ३ ॥ आदित्यचंद्रमसोरुभयोरप्यस्तमयेपिकृष्णपक्षरात्रौ

---

उप० । याज्ञवल्क्यकिंज्योतिरयंपुरुपइत्यादित्यज्योतिःसम्राडितिहोवाचादित्येनैवायंज्योतिषाऽऽस्ते पल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमितआदित्येयाज्ञवल्क्यकिंज्योतिरेवायंपुरुषइतिचंद्रमाएवास्यज्योतिर्भवतीतिचंद्रमसैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेकिंज्योतिरेवायंपुरुषइत्यग्निरेवास्यज्योतिर्भवतीत्यग्निनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

पुंप्रवृत्तिदर्शनात्तद्धेतुभूतंज्योतिःपृच्छति ॥ अस्तमितइति ॥४॥ आदित्यचंद्राग्नीनामभावेप्यंधकारेपुंप्रवृत्तिदर्शनात्पृच्छति ॥ अस्तमितआदित्यइति ॥ वागेवेत्यनेनशब्दोगृह्यतेनेंद्रियं शब्दस्यज्योतिष्ट्वमप्रसिद्धंकथमुच्यतइत्यतःतदनुभवारूढंकरोति ॥ तस्मादिति ॥ हेसम्राट् तस्माद्धैतस्मादेववाचोपिज्योतिष्ट्वदेव यत्रयदादित्यचंद्राद्यभावकाले स्वःस्वकीयोपि पाणिर्हस्तो नविनिर्ज्ञायतेविस्पष्टंनदृश्यते अथतदाबाह्यज्योतिषोऽभावेनप्रवृत्तिनिरोधेयत्रयस्मिन्प्रदेशे वाक्शब्दः उच्चरति तत्रतंप्रदेशंप्रति उपन्येत्येवोपगच्छत्येव अन्यथातन्नस्यादित्यर्थः ॥५॥ आदित्यचंद्राग्निवाचामभावेपिसुप्त्यादौप्रवृत्तिदर्शनात्तत्रकिंज्योतिरितिपृच्छति ॥ अस्तमितइति॥आत्माभगवानेवास्यज्योतिः॥६॥जीवदेहेंद्रियादिविवेकेनात्मनोप्रसिद्धेःपृच्छति ॥कतमइति॥ जीवदेहेंद्रियादिभ्योविवेकेनात्मानमाह ॥योयमिति ॥योविज्ञानमयोविज्ञानपूर्णः प्राणेषुइंद्रियेष्वंतःहृद्यंतश्चवर्तमानःज्योतिर्जीवस्यबुद्ध्यादिद्योत

उप० । अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौकिंज्योतिरेवायंपुरुषइतिवागेवास्यज्योतिर्भवतीतिवाचैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीतितस्माद्वैसम्राडपियत्रस्वःपाणिर्नविनिर्ज्ञायतेऽथयत्रवागुच्चरत्युपैवतत्रन्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥ अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौशांतायांवाचिकिंज्योतिरेवायंपुरुषइत्यात्मैवास्यज्योतिर्भवतीत्यात्मनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीति ॥ ६ ॥ कतमआत्मेतियोयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषःससमानःसन्नुभौलोकावनुसंचरतिध्यायतीवलेलायतीवसहिस्वप्नोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणि ॥ ७ ॥

नेनप्रवृत्तिहेतुःपुरुषःपूर्णषड्गुणःअयमेवात्मेत्यर्थः। तस्यमहिमानमाह ॥ सइति ॥ सआत्मा समानःसन्अविकारात्सदैकप्रकारः
सन् उभौलोकौभूलोकद्युलोकौजाग्रत्सुषुप्तीवा जीवमादायानुसंचरति ध्यायतीव इवशब्दोल्पार्थः । जीवमल्पंध्यापयतिलेलायती
वजीवमल्पंग्राहयति। तस्यैवमहिमांतरमाह ॥ सइति ॥ सआत्मा स्वप्नोभूत्वास्वापकोभूत्वा जीवस्यस्वप्नमानयन् मृत्योरूपाणिव
हुपापैकहेतुत्वान्मृत्युरूपात्मकमिमंलोकंजाग्रदाख्यं अतिक्रामतितारयति हिप्रसिद्धं । यद्वासआत्मा स्वप्नोभूत्वाअंतरिक्षलोकां
तर्गतोभूत्वा मृत्योरूपाणिवहुमृत्युरूपात्मकंवहुपापहेतुभूतंचेमंलोकंभूराख्यं अतिक्रामतिजीवमंतरिक्षगंकुर्वन्तारयति ॥ ७ ॥
महिमांतरमाह ॥ सवाइति ॥ सजीवंप्रतिज्योतिष्ट्वेनोक्तः अयंसमानःसन्नित्यादिनोक्तः पुरुषो जायमानोवै। तस्यैवव्याख्यानं
शरीरमभिसंपद्यमानइति जीवगतशरीराभिसंपत्तिनियामकःसन् पाप्मभिःसंसृज्यते जीवेनपापंकारयित्वातेषांफलदानायतानि
गृह्णातीत्यर्थः।सआत्मा म्रियमाणःनमरणमात्रमत्रविवक्षितं किंतूत्क्रामन् ऊर्ध्वंगच्छन्मुक्तिंगच्छन् जीवगतोत्क्रमणनियामकस्सन्
पाप्मनोविजहातिजीवकृतपापफलंनददातीत्यर्थः। यद्वाजीववैलक्षण्येनभगवज्ज्ञानार्थंजीवस्वरूपमाह ॥ सवाइति ॥ सआदि
त्यादिज्योतिष्ट्वेनोक्तः अयंआत्मज्योतिष्ट्वेनोक्तः पुरुषःसंसारीजीवः जायमानः नघटादिवत्स्वरूपतः किंतुशरीरमभिसंपद्य
मानःसन्पाप्मभिःसंसृज्यतेसंवद्धोभवति । सजीवोम्रियमाणः तस्यैवव्याख्यानमुत्क्रामन्मुक्तिंगच्छन्सन्पाप्मनोविजहाती

उप० । सवाऽयंपुरुषोजायमानःशरीरमभिसंपद्यमानःपाप्मभिःसंसृज्यतेसउत्क्रामन्म्रियमाणःपाप्मनोविजहाति ॥ ८ ॥

त्यर्थः ॥ ८ ॥ तस्यात्मनःस्थितिस्थानमाह ॥ तस्यवाइति ॥ तस्यैतस्यपुरुषस्यपूर्णषड्गुणस्य द्वेएवस्थानेभवतः । किंते इदंचपर
लोकस्थानंचभूलोकःस्वर्गलोकश्चजाग्रत्सुषुप्तिश्चेतिवा । नन्वंतरिक्षलोकस्यस्वप्नावस्थायावातृतीयस्थानस्यविद्यमानत्वात्कथंद्वेएव
स्थानेइत्युक्तमित्यतआह ॥ संध्यमिति ॥ तृतीयंस्वप्नस्थानंस्वप्नावस्थाख्यंस्थानमंतरिक्षलोकाख्यंवास्थानं संध्यंसंधौभवंजाग्र
त्सुषुप्तिसंधौभूद्युलोकसंधौवाभवंअतोनपृथगुक्तमित्यर्थः । तस्मिन्संध्येस्थानेस्वप्नस्थानेऽतरिक्षलोकेवातिष्ठन्नेतेउभेस्थानेपश्यति ।
केतेउभेस्थाने इदंचपरलोकस्थानंचभूलोकःस्वर्गलोकश्चजाग्रत्सुषुप्तिश्च नकेवलंस्वप्नावस्थायांतिष्ठन्जाग्रत्सुषुप्ती अंतरिक्षलोके
तिष्ठन्द्युपृथिवीलोकौपश्यति किंत्वित्यतआह ॥ अथेति ॥ अथजाग्रत्सुषुप्त्यवस्थादर्शनानंतरं अयंपुरुषःपरमात्मा परलोकस्था
नेसुषुप्त्याख्येजाग्रत्स्थानाद्गंतव्ये यथाक्रमःयन्मार्गःभवति तमाक्रमंमार्गं स्वप्नाख्यमाक्रम्यतत्रस्थित्वोभया॰न् तस्यैवविवरणंपा
प्मनआनंदांश्च जाग्रदवस्थायांजीवेनानुभूयमानानिपापफलानिदुःखानि सुप्तावनुभूयमानानानंदांश्चपश्यतीत्यर्थः । तथापरलोके
स्थानेस्वर्गाख्येपृथिवीलोकाद्गंतव्येसति अयंपुरुषोयन्मार्गः तमाक्रमंमार्गमंतरिक्षाख्यमाक्रम्योभयान्पाप्मनआनंदांश्चपृथिव्यांअ
नुभूयमानपापफलानिदुःखानिस्वर्गेनुभूयमानानंदांश्चपश्यतीत्यर्थः । नन्वात्मैवास्यज्योतिर्भवतीत्युक्तंजीवस्यात्मज्योतिष्ट्वंकदा
आदित्यचंद्राग्निवाचामभावकालेइतिचेत् साप्यवस्थाकेत्याशंकांपरिहरन्नाह ॥ सयत्रेत्यादिना ॥ सआत्मा यत्रयदा प्र

उ० । तस्यवाएतस्यपुरुषस्यद्वेएवस्थानेभवतइदंचपरलोकस्थानंचसंध्यंतृतीयंस्वप्नस्थानंतस्मिन्संध्येस्थानेतिष्ठन्नेतेउभेस्थाने । पश्यतीदंचपर
लोकस्थानंचाथयथाक्रमोयंपरलोकस्थानेभवतितमाक्रममाक्रम्योभयान्पाप्मनआनंदांश्चपश्यतिसयत्रप्रस्वपिति

स्वपितिजीवंप्रस्वापयति । कथंप्रस्वापयतीत्यतआह ॥ अस्येति ॥ अस्यलोकस्यजनस्य सर्वावतःसर्वविषयज्ञानानि मात्रामिंद्रियशक्तिंचोपादाय स्वयंविहृत्यजीवंबाह्यव्यापाररहितंकृत्वा स्वयमेवनिर्मायस्वाप्नपदार्थान्रथादीनुत्पाद्य स्वेनस्वकीयेनस्वरूपभूतेनवाभासावाह्यप्रकाशेन स्वेनज्योतिषाआंतरप्रकाशेनप्रस्विपिति जीवंप्रस्वापयति । अत्रास्मिन्स्वापकालेअयंपुरुषःपरमात्मा स्वयमेवविशेषतोज्योतिर्भवतीत्यर्थः । तथासआत्मा यत्रप्रस्वपितिजीवमंतरिक्षलोकंस्वर्गलोकंवाप्रापयतिस्वप्नसुप्तिशब्दयोरंतरिक्षस्वर्गवाचकत्वेनस्वप्नसुषुप्त्युभयसाधारणस्वापशब्दस्यतदुभयलोकसाधारणस्यसत्वात् । कथं । अस्यलोकस्यजनस्य सर्वज्ञानानींद्रियाभिमानिदेवांश्चोपादाय स्वयंविहत्यजीवंभूलोकस्थव्यापाररहितंकृत्वा स्वयंनिर्मायांतरिक्षेस्वर्गेवातत्रकर्मानुसारेणभोगसाधनरथादीनुत्पाद्य स्वेनभासास्वेनज्योतिषाप्रस्वपिति अंतरिक्षलोकंस्वर्गलोकंवाप्रापयति। अत्रांतरिक्षादिप्राप्तिकाले अयंपुरुषःस्वयमेवज्योतिर्भवतीत्यर्थः ॥ ९ ॥ ननुस्वप्नेंतरिक्षेस्वर्गेवायदिरथाद्याःपूर्वमेवस्थितास्तदाकथमेतस्यतदुत्पादकत्वमित्यतआह ॥ नतत्रेति ॥ तत्रस्वप्नावस्थायां अंतरिक्षेस्वर्गेवा रथाःप्रसिद्धाः नभवंतिपूर्वंनस्थिताः रथयोगाःरथैर्युज्यंत इतिरथयोगाअश्वादयो नभवंति पुरानस्थिताः पंथानोमार्गाः पूर्वंनस्थिताः किंतुअथतदैव सआत्मा तत्तत्कर्मानुसारेण रथान्रथयोगान्पथःसृजते आनंदाःस्वरूपभूतसुखानि मुदःअप्रकृष्टविषयोत्थसुखानि प्रमुदःप्रकृष्टविषयोत्थसुखानि वेशांताःवेश्यागृहाः

उ० । अस्यलोकस्यसर्वावतोमात्रामुपादायस्वयंविह(हृ)त्यस्वयंनिर्मायस्वेनभासास्वेनज्योतिषाप्रस्वपित्यत्रायंपुरुषःस्वयंज्योतिर्भवति ॥ ९ ॥ नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजतेनतत्रानंदामुदःप्रमुदोभवंत्यथानंदान्मुदःप्रमुदःसृजतेनतत्रवेशांताः

पुष्करिण्यःसरांसि स्रवंत्योनद्यः नकेवलमेतावत् किंतुसपरमात्मा सर्वस्यकर्ता हिप्रमाणप्रसिद्धं ॥ १० ॥ तस्यवाएतस्यपुरुषस्ये त्यादिकंसंसारमोक्षपरतयापियोज्यं । परलोकशब्दस्यमोक्षएवमुख्यत्वात् तथाहि तस्यैतस्यपुरुपस्यद्वेइवस्थानेभवतः केते इदंच संसारावस्थारूपंपरलोकस्थानंमोक्षाख्यंचेति जीवन्मुक्त्यवस्थायाःपृथक्सत्वात्कथंद्वेएवेत्युक्तमित्यतआह ॥ संध्यमिति ॥ तृतीयंस्वप्नस्थानंजीवन्मुक्त्याख्यं संध्यंसंसारमोक्षयोःसंधौभवमतोनपृथगुक्तंतस्मिन्त्संध्येस्थानेजीवन्मुक्ताख्येतिष्ठन्नेतेउभेस्थानेपश्यति । केते इदंचपरलोकस्थानंच । अथसंसारमुक्तिदर्शनानंतरं अयंपुरुषोजीवःपरलोकस्थानेमोक्षेगंतव्येयथाक्रमोयन्मार्गोभवति तमाक्रमंमार्गंजीवन्मुक्त्याख्यं आक्रम्योभयान् तस्यैवविवरणं संसारेनुभूयमानपापफलानिदुःखानिमोक्षेनुभूयमानानंदाश्चपश्यति सपरमात्मा यत्रयदा प्रस्वपितिप्रस्वापयति स्वापंमोक्षंप्रापयति कथं अस्यलोकस्यमुच्यमानस्य सर्वावतःवृत्तिरूपसर्वज्ञानानि मात्रामिंद्रियाभिमानिदेवांश्चोपादाय स्वयंवि(ह)हृत्यसांसारिकव्यापाररहितंकृत्वा स्वयंनिर्मायमुक्तौभोगसाधनरथादीन्उत्पाद्य स्वेनभासास्वेनज्योतिषाप्रस्वपितिमोक्षंप्रापयति । अत्रास्मिन्मोक्षकाले अयंपुरुषःपरमात्मा अस्यजीवस्य स्वयमेव विशेषतोज्योतिरित्यर्थः । ननुभोगसाधनरथादीनांमुक्तौपूर्वमेवसत्वेकथंतदुत्पादनमित्यतआह ॥ नतत्रेति ॥ नतत्रमोक्षेपूर्वं रथाद्याःस्थिताः किंत्वपरोक्षज्ञानोत्तरकृततत्तत्कर्मानुसारेणतदैवरथादीन्सृजतइत्यर्थः ॥ १० ॥ तत्तत्रपूर्वोक्तार्थे एतेवक्ष्यमाणाः

---

उ० । पुष्करिण्यःस्रवंत्योभवंत्यथवेशांतान्पुष्करिण्यःस्रवंत्यःसृजतेसहिकर्ता ॥ १० ॥

श्लोकामंत्राभवंति प्रमाणत्वेनेतिशेषः। तान्मंत्रानुदाहरति ॥ स्वप्नेनेति ॥ हिरण्मयःहिरण्यवर्णः एकहंसःप्रधानहंसरूपः पुरुषः पूर्णषड्गुणः परमात्मा स्वप्नेनसुषुप्त्यास्वर्गेणमोक्षेणवा शारीरंजीवं अभिप्रहत्यसंयोज्य स्वयमसुप्तःसुप्तिशून्यः स्वकर्मनिर्मित स्वर्गशून्योवंधध्वंसरूपमुक्तिशून्योवा सुप्तान्सुप्त्यवस्थागतान्स्वर्गगतान्मोक्षगतान्वाशारीरान्जीवानभिचाकशीतिपश्यति। एवं सुप्त्यवस्थादिप्रदर्शनानंतरं शुक्रंशोकेनरत्यायुक्तं शारीरंजीवमादाय पुनःस्थानंजाग्रदाख्यंभूलोकाख्यंसृष्टिस्थानंवा एतीत्यर्थः। नकेवलंशरीरएवस्वप्नप्रदर्शकोभगवानित्याह॥प्राणेनेति॥ अमृतःपुरुषःस्वप्नेजीवमादाय कुलायाच्छरीराद्बहिश्चरित्वा तानभिचाकशीतीतिवा शुक्रमादायपुनःकुलायरूपंस्थानमेतीतिवासंबंधः। ननुस्वप्नेजीवमादाययदिबहिर्गच्छतीश्वर स्तर्हितस्यशरीरस्यावस्थानंकथंस्यादित्यतआह ॥ प्राणेनेति ॥ प्राणेनजीवस्यांशेनमुख्यप्राणेनवा अवरंकर्मनिर्मिततयानिकृष्टंकुलायंरक्षन् अंशेनजीवमादायबहिर्गमनेप्यंशांतरस्यात्रसद्भावान्नकाप्यनुपपत्तिरित्यर्थः। सोमृतोहिरण्मयएकहंसःपुरुषोयत्रकामंकामोविषयस्तत्र ईयतेज्ञायते विषयेष्वस्वातंत्र्यात्तज्ज्ञापकोन्योस्तीत्यनुमीयतइत्यर्थः ॥ १२ ॥ तस्यैवमहिमांतरमाह ॥ स्वप्नांतइति ॥ देवः स्वप्नांतेस्वप्नाख्यस्थाने उच्चावचमीयमानः वासनारूपेषुउच्चावचेषुगजपिपीलिकादिषुप्रविश न्स्वस्यवहूनिरूपाणिकुरुते उतशब्दश्च

उ० । तदेतेश्लोकाभवंति । स्वप्नेनशारीरमभिप्रहत्यसुप्तःसुप्तानभिचाकशीति । शुक्रमादायपुनरेतिस्थानंहिरण्मयःपुरुषएकहंसः ॥११॥ प्राणेनरक्षन्नवरंकुलायंबहिष्कुलायादमृतश्चरित्वा । सईयतेऽमृतोयत्रकामंहिरण्मयःपुरुषएकहंसः ॥ १२ ॥ स्वप्नांतउच्चावचमीयमानोरूपाणिदेवःकुरुतेवहूनि ।

शब्दार्थः स्त्रीभिश्चेतनप्रकृतिरूपाभिःसहमोदमानइवच मोदरूपस्यस्त्रीभिर्मोदोविडंबनमितीवशब्दः जीवस्यभयानिपश्यन्नपि जक्षदिवहसदिवच हसनक्रियायानित्यत्वादिवशब्दः उतशब्दश्चशब्दार्थः ॥ ७ ॥ १३ ॥ ७ ॥ **ननुसुषुप्तिस्वप्नजाग्रदवस्थाप्रेरकः** किंसुप्तादिभिःप्रदृश्यतेनवेतिजिज्ञासायामाह ॥ **आराममिति** ॥ अस्यात्मनः आराममंआक्रीडनं तन्निर्मितस्वाप्नपदार्थादिकमेव पश्यंति नतुतमात्मानंकश्चनपश्यति भगवदज्ञानीकिंज्ञानिनाबोधनीयोनेत्याह ॥ **तमिति** ॥ तंभगवंतं अयतंप्रयत्नशून्यमयोग्यंप्रति नबोधयेदित्याहुर्विद्वांसः कुतोयंनबोधनीयइत्यतआह ॥ **दुर्भिषज्यमिति** ॥ एषआत्मा यंनप्रतिपद्यतेयस्यज्ञानविषयो नभवतीतियावत् अस्मैअस्य दुर्भिषज्यंभवतिप्रतीकारोनविद्यतइतियावत् हेतिप्रसिद्धिमाह जीववत्परमात्मनोपिसुप्तत्वेऽसुप्तःसुप्तानभिचाकशीतीत्युक्तमयुक्तमित्यतआह॥ **अथोइति** ॥ अथोशब्दोपिशब्दार्थः। एषोपिजीवस्यस्वप्नसुषुप्तिकालोप्यस्यपरमात्मनोजागरितदेशएवेत्याहुर्विद्वांसइत्यर्थः । तत्रहेतुमाह ॥ **यानिहीति** ॥ हियस्मात् जाग्रत्जागरिते यानिपश्यति तानिसुप्तेस्वप्नसुषुप्तिकालेपिपश्यति इतितस्मात् स्वप्नसुषुप्तिकालोजागरितात्मकइत्यर्थः। तत्रापिकोहेतुरित्यतःस्वतःसार्वज्ञमेवेतिभावेनाह॥ **अत्रेति** ॥ अत्रस्वप्नसुषुप्त्यवस्थायां अयंपुरुषःपरमात्मा स्वयंज्योतिर्भवतीत्यर्थः।एवंश्रुत्वाराजागुरुदक्षिणांप्रतिजज्ञइत्याह ॥ **सोह**



---

उ० । उतेवस्त्रीभिःसहमोदमानोजक्षदुतेवापिभयानिपश्यन् ॥ १३ ॥ आराममस्यपश्यंतिनतंपश्यतिकश्चनेति । तंनायतंबोधयेदित्याहुर्दुर्भिषज्यंहास्मैभवतियमेषनप्रतिपद्यतेऽथोखल्वाहुर्जागरितदेशएवास्यैषइतियानिह्येवजाग्रत्पश्यतितानिसुप्तइत्यत्रायंपुरुषःस्वयंज्योतिर्भवतिसोहं

मिति ॥ हेयाज्ञवल्क्यभगवतेपूज्यायते सत्वदुपदिष्टोहं सहस्रंहस्तिवृषभसहस्रंददामि । अतऊर्ध्वमतःपरंविमोक्षायविशिष्टमोक्षायब्रूहीत्याह ॥ ७ ॥ १४ ॥ ७ राज्ञाएवंपृष्टोयाज्ञवल्क्योभगवतःसुप्त्याद्यवस्थाप्रेरकत्वंस्पष्टमाह ॥ **सवाइति** ॥ सएषपरमात्मैव एतस्मिन्संप्रसादेसम्यक्प्रसीदतिजीवोस्मिन्निति संप्रसादःसुप्तिःतस्मिन् रत्वारमणंकृत्वा **पुण्यंचपापंचदृष्ट्वैवचरति चरित्वाचप्रतिन्यायंप्रतिकालं प्रतियोनिप्रतिजीवं** पुनःस्वप्नायैवजीवस्यस्वप्नावाप्तयेएवाद्रवति । दृष्ट्वैवेत्येवकारव्यवच्छेद्यमाह ॥ **सइति** ॥ स परमात्मा तत्रसुप्तौ यत्किंचित्पापंपश्यति तेनपापफलेनदुःखेन अनन्वागतःअसंस्पृष्टोभवति कुतइत्यतआह ॥ **असंगइति** ॥ हियस्मादयंपुरुषःअसंगस्तत्कर्तृपापफलसंसर्गशून्यःइतितस्मात्तेनानन्वागतइत्यर्थः । उक्तमंगीकृत्यपुनर्गुरुदक्षिणांप्रतिजज्ञेइत्याह ॥ **एवमिति** ॥ एवमुत्तरत्रापिव्याख्येयं ॥ १५ ॥ बुद्धांतायैवबुद्धाख्यस्थानायजाग्रत्स्थानायेत्यर्थः ॥ ७ ॥ १६ ॥ ७ ॥ **स्वप्नां**

उ० । भगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायब्रूहीति ॥ १४ ॥ सवाएषएतस्मिन्संप्रसादेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नायैव सयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्य सोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति ॥ १५ ॥ सवाएषएतस्मिन्स्वप्नेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैव सयत्तत्रयत्किंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्यसोहंभगवतेसहस्रंददाम्यतऊर्ध्वंमोक्षायैवब्रूहीति ॥ १६ ॥

तायैवस्वप्नाख्यस्थानायैव ॥ ७ ॥ अत्रस्वप्नशब्दःसुषुप्तिपरः ॥ १७ ॥ स्वप्नसुप्तिजाग्रदवस्थाप्रेरकत्वंदृष्टांतेनोपपादयति ॥ तद्य थेति ॥ तत्निदर्शनं यथा महामत्स्यःनद्याउभेकूलेअभिसंचरति केते पूर्वंचापरंच एवमेवायंपुरुषः एतावंतौस्थाने अनुसंचरति कौतौ स्वप्नांतंचस्वप्नसुप्त्यात्मकमेकं बुद्धात्मकंजाग्रदाख्यंचेति ॥ १८ ॥ नन्ववस्थात्रयविशिष्टेसंसारेभ्रमतोजीवस्यश्रमपरि हारःकदाभविष्यतीतिचेत् मोक्षएव तदाविष्णुंप्राप्तत्वात् । ननुमोक्षेविष्णुंप्राप्तत्वेपिश्रमाभावःकुतइतिचेत् । प्रतिदिनमज्ञानादे वसुप्तौविष्णुंप्राप्तस्यनश्रमः किमुज्ञानान्मुक्तौविष्णुप्राप्तस्येतिभावेनसुप्तौविष्णुंप्राप्तस्यश्रमाभावंसदृष्टांतमुपपादयति ॥ तद्य थेति ॥ तत्वक्ष्यमाणंनिदर्शनंयथा श्येनोवासुपर्णोवास्मिन्नाकाशे विपरिपत्यइतस्ततःप(र्यट)रिपतनंकृत्वा श्रांतःपक्षौसं(ह) हृत्यसंकोच्य सल्लयायैवश्रमपरिहारकस्वनीडायैवध्रियतेगच्छति एवमेवायंपुरुषो जागरितेस्वप्नेचभ्रमन्श्रांतः तत्परिहारायैतस्मा अंतायधावति। कस्मै यत्रयस्यामवस्थायां सुप्तआनंदरूपंविष्णुंप्राप्तोजीवो नकंचनकामंकाम्यं कामयते नकंचनस्वप्नंपश्यतिनच स्वप्नसदृशभ्रांतिज्ञानमाप्नोति एतस्माअंतायसुप्त्याख्यस्थानायेतिसंबंधः ॥ १९ ॥ स्वप्नदर्शनस्यानिष्टरूपत्वे नकंचनस्वप्नंपश्य 571

---

उ० । सवाएषएतस्मिन्बुद्धांतेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नांतायैव ॥ १७ ॥ तद्यथामहामत्स्यउभे कूलेअनुसंचरतिपूर्वंचापरंचैवमेवायंपुरुषएतावुभावंतावनुसंचरतिस्वप्नांतंचबुद्धांतंच ॥ १८ ॥ तद्यथास्मिन्नाकाशेश्येनोवासुपर्णोवाविपरिपत्य श्रांतःसंहत्यपक्षौसल्लयायैवध्रियतएवमेवायंपुरुषएतस्माअंतायधावतियत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यति ॥ १९ ॥

तीतिवक्तव्यं तदेवकुतइत्यतःप्रकृतसुप्तिस्वप्नस्वरूपंनिरूपयितुमाह ॥ ताबाइति ॥ अस्यपुरुषस्य ताःप्रसिद्धाः एताःवक्ष्यमाणा हितानामनाड्यो यथाकेशस्सहस्रधाभिन्नस्तावताणिम्नासूक्ष्मपरिमाणेनतिष्ठंति तासांहितनामत्वंकुतइत्यतोनानारूपेणभगवतातत्रनिहितत्वादितिभावेनाह ॥ शुक्लस्येति ॥ शुक्लस्यशुक्लरूपेणभगवता पूर्णाःव्याप्ताः तासांमध्येसुषुम्नाच तत्रसुप्तिंव्रजत्ययमितिवक्तव्यं । अथयत्रयासुकंठदेशस्थितासुनाडीषुस्थितोजीवः एनंस्वप्नदृष्टमात्मानंअन्येचोराःघ्नंतीवपश्यति कदाचिज्जिनंतीवताडयंतीवपश्यति एवंस्वात्मानंहस्तीवपश्यति अन्यःकश्चनैनंविच्छाययतिभयेनविच्छायंकरोतीवपश्यति स्वयंगर्तंजीर्णकूपादिकंपततीवपश्यति जाग्रदिवभयंचपश्यति अत्रवाह्यार्थवैलक्षण्यादिवशब्दः पश्यतीत्युक्त्याप्राप्तंस्वाप्नार्थदर्शनेजीवस्यस्वातंत्र्यंनिवारयति ॥ यदेवेति ॥ यदायस्यामवस्थायां जीवोयदेवस्वाप्नंभयादिकंजाग्रत्जाग्रद्वस्तुवत्पश्यति तद्वस्तुअत्राऽविद्याअःपरमात्मातद्विद्यातन्निरीक्षणंतेनविष्णुकर्तृकज्ञानेनैवमन्यतेपश्यति नतुस्वातंत्र्येण सुप्तौमोक्षेचनकंचनकामंकामयतइत्युक्तंतर्हिकथंतिष्ठतीत्यपेक्षायामाह ॥ यत्रेति ॥ यत्रमोक्षेसुप्तौवा देवइवराजेवाहमेवेदंसर्वोस्मिस्वयोग्यतयापूर्णोस्मीतिमन्यते सोस्यपरमात्मनः परमोलोकआश्रयः ॥ २० ॥ पूर्णत्वमस्यकुतोऽभूदित्यतआह ॥ तद्वाइति ॥ अस्यभगवतःतत्प्रसिद्धमेतत्रूप 572

उ० । तावाअस्यैताहितानामनाड्योयथाकेशःसहस्रधाभिन्नस्तावताणिम्नातिष्ठंति शुक्लस्यनीलस्यपिंगलस्यहरितस्यलोहितस्यपूर्णाअथयत्रैनंघ्नंतीवजिनंतीवहस्तीवविच्छाययतिगर्तमिवपततियदेवजाग्रद्भयंपश्यतितदत्राविद्ययामन्यतेऽथयत्रदेवइवराजेवाहमेवेदꣳसर्वोस्मीतिमन्यते सोस्यपरमोलोकः ॥ २० ॥ तद्वाअस्यैतदतिच्छंदा

मतिच्छंदाअतिक्रांतानिच्छंदांसियेनासावतिच्छंदाः छंदसामवाच्यं अपहतपाप्मापापवर्जितमभयंभयरहितं भगवद्रूपस्यैवंविध त्वेपिकिमा(मेवंविधंचेत्किमा)यातंप्रकृतइत्यतोभगवत्प्राप्त्यापूर्णत्वमस्येतिसदृष्टांतमाह ॥ तद्यथेति ॥ तत्निदर्शनंयथा । प्रिय यामनोहरणसमर्थयास्त्रिया संपरिष्वक्तः कामुको बाह्यंघटादिकं किंचनकिमपि नवेद आंतरंदुःखादिकंचनवेद स्त्रीपरिष्वंगेणै वपूर्णोभवति एवमेवायंपुरुषोजीवः प्राज्ञेनसर्वज्ञेनात्मना संपरिष्वक्तःसुप्तोमुक्तोवा नबाह्यंकिंचनवेदनांतरं प्राज्ञात्मसं(परिष्वंगे) श्लेषेणैवपूर्णोभवतीत्यर्थः । भगवत्प्राप्तस्यमहिमांतरंवक्तुंप्रकृतभगवत्स्वरूपमाह ॥ तद्वाइति ॥ अस्यात्मन स्तत्प्रसिद्धमेतत् 573

रूपं आप्तकामंआप्ताएवनत्वाप्तव्याःकामायेनतदाऽऽप्तकामं पूर्णसुखरूपत्वादात्मैवकाम्यतइत्यात्मकामं अकामंविषयकामनारहि तं शोकांतरंशोकस्यांतोभावोयस्मिन्तच्छोकांतं रमतइतिरंशोकांतंचतद्रंचेतिशोकांतरं ॥२१॥ इदानीमेतादृग्भगवद्रूपंप्राप्तस्यमहि मानमाह ॥ अत्रेति॥ तेनाप्तकामादिगुणेनभगवतासंपरिष्वक्तोजीवःपूर्वस्वपुत्राणांपिताऽत्रसुप्तौमुक्तौवाअपिताभवति पूर्वस्वपु त्राणांमाताऽत्रामाताभवति तेषांदुःखेनस्वस्यदुःखाभावात् पूर्वलोकालोकाभिमानिनोत्रालोकाःतदालोकाभिमानाभावात् पूर्वदे वाअपिअत्रादेवाः वर्षणादिरूपस्वाधिकाराभावात् पूर्ववेदावेदाभिमानिनोप्यत्रावेदाः वेदाभिमानाभावात् पूर्वस्तेनस्तस्क

उ० । अपहतपाप्माऽभयꣳरूपꣳतद्यथाप्रिययास्त्रियासंपरिष्वक्तोनवाह्यंकिंचनवेदनांतरमेवमेवायंपुरुषःप्राज्ञेनात्मनासंपरिष्वक्तोनवाह्यंकिं चनवेदनांतरंतद्वाअस्यैतदाप्तकाममात्मकाममकामंरूपंशोकांतरं ॥ २१ ॥ अत्रपिताऽपिताभवतिमातामातालोकाअलोकादेवाअदेवावेदाअवेदा अत्रस्तेनोऽस्तेनोभवति

रोत्रास्तेनोभवति पूर्वंभ्रूणहात्राभ्रूणहाभवति पूर्वंचंडालोत्राचंडालोभवति पूर्वंपौल्कसोत्रापौल्कसोभवति स्तैन्यादिपापफलस्याप्य
पायात् पूर्वंश्रमणोयतिःअत्राश्रमणःयतिधर्मात्समुत्थितेः अतएवपूर्वंतापसोतापसः पुण्येनानिष्टेनानन्वागतंपापेनानन्वागतं हृद्य
यनाद्धृदयस्यविष्णोःसंप्राप्तिमात्रतस्तदासुप्तौमुक्तौवासर्वांच्छोकान्तीर्णोभवति । यद्वातदासर्वान्शोकान्तीर्णःहृदयस्यशेषभूतो
भवतीत्यर्थः ॥ २२ ॥ एवमवस्थाप्रेरकोभगवानित्युक्तं देशकालांतरयोरन्योप्यवस्थाप्रेरकःकिमित्याशंकापरिहारायभगवतःस
माभ्यधिकराहित्यरूपमहिमानमाह ॥ यद्वाइत्यादिना ॥ नतुतद्वितीयमस्तिततोन्यदितिप्रतिज्ञावाक्यंततोन्यत्विष्णोरन्यत्
तत्द्वितीयंतत्समंनैवास्तीत्यर्थः । तत्रहेतुः यद्वैतंनपश्यतीति ब्रह्मयद्यस्मात् तत्स्वसमंवस्तु नपश्यति तत्तस्मान्नतुतत्द्विती
यमस्तीतिसंबंधः । ननुभगवदद्दष्टत्वेपिभगवत्समंकुतोनास्तीतिचेत् यत्किंचिद्वस्तुभगवतानद्दष्टंतन्नास्त्येवेतिव्याप्तेरित्यप्याह । य
द्वैतन्नपश्यतीति वैशब्दोवधारणार्थः । नञःआवृत्तिः पूर्वप्रकृतब्रह्मयद्वस्तुनपश्यतितन्नास्त्येवेतिव्याप्तेर्भगवदद्दष्टंभगवत्समंना
स्त्येवेत्यर्थः । ननुयद्भगवतानद्दष्टंतन्नास्त्येवेतिकथं नह्यस्मदाद्यद्दष्टंवस्तुनास्तीतिवक्तुंशक्यतेइत्यतोभवेदेवास्मदाद्यद्दष्टंवस्तु अस्म
दादीनामसर्वज्ञत्वात् भगवांस्तुविद्यमानंसर्वंपश्यन्वै सचेन्नपश्यतितदानास्त्येवेत्याह ॥ **पश्यन्वाइति** ॥ ननुविष्णोःसार्वज्ञंकिं
भ्रांत्यानेत्याह ॥ **नहीति** ॥ हियस्मात्द्रष्टुर्भगवतो दृष्टेर्विपरिलोपोऽयथार्थत्वंन तस्मान्नभ्रांत्यासार्वज्ञं तत्रहेतुमाह ॥ **अविनाशि**

---

उ० । भ्रूणहाऽभ्रूणहाचांडालोचांडालःपौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोतापसोनन्वागतंपुण्येनानन्वागतंपापेनतीर्णोहितदासर्वा
च्छोकान्हृदयस्यभवति ॥ २२ ॥ यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतिनहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वात्

574

त्वादिति ॥ निर्दोषत्वादवाधाच्चेत्यर्थः । ननुयथास्मदादीनांभ्रांतत्वेनास्मदादिदृष्टविरुद्धद्रष्टाअस्मदाद्यदृष्टद्रष्टाचभगवांस्तथा भगवद्दृष्टविरुद्धद्रष्टाभगवद्दृष्टादन्यवस्तुद्रष्टाचयद्यन्यःस्यात्तदाकथंभगवान्सर्वज्ञःस्यादितिचेत् स्यादेतदेवं यदिभगवद्दृष्टादन्यवस्तुद्रष्टाभगवद्दृष्टविरुद्धद्रष्टाचकश्चित्स्यात् नचासावस्तीत्याह ॥ ननुतद्द्वितीयमस्तिततोऽन्यद्विभक्तंयत्पश्येदिति ॥ तुशब्दोहिशब्दार्थश्च ततोन्यत्भगवद्दृष्टादन्यत् ततोविभक्तंभगवद्दृष्टाद्विरुद्धंवस्तु यत्पश्येत् तत्द्वितीयंभगवद्व्यतिरिक्तंद्रष्टृनैवास्तिहियस्मात्तस्माद्विद्यमानंसर्वंपश्यन्नैवइत्यर्थः ॥ २३ ॥ ननुचक्षुषास्वसमानवस्तुदर्शनाभावेपींद्रियांतरेणस्यादित्यतआह ॥ यद्वैतन्नजिघ्रतीत्यादि ॥ योजनातुपूर्ववदेव घ्रातेःघ्राणसंबंधिज्ञानस्य ॥२४॥ रसयतेःरासनज्ञानस्य ॥ २५ ॥ वक्तेर्वागिंद्रियव्यापारस्य विपरिलोपोसत्यत्वं ॥ २६ ॥ श्रुतेःश्रोत्रज्ञानस्य ॥ २७ ॥ मतेर्मानसज्ञानस्य ॥ २८ ॥ स्पृष्टेःस्पार्शनज्ञानस्य ॥ २९ ॥

---

उ० । ननुतद्द्वितीयमस्तिततोन्यद्विभक्तंयत्पश्येत् ॥ २३ ॥ यद्वैतन्नजिघ्रतिजिघ्रन्वैतन्नजिघ्रतिनहिघ्रातुर्घ्रातेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयज्जिघ्रेत् ॥ २४ ॥ यद्वैतन्नरसयतेरसयन्वैतन्नरसयतेनहिरसयितूरसयतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्रसयेत् ॥ २५ ॥ यद्वैतन्नवदतिवदन्वै तन्नवदतिनाहिवक्तुर्वक्तेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्वदेत् ॥ २६ ॥ यद्वैतन्नशृणोतिशृण्वन्वैतन्नशृणोतिनहिश्रोतुःश्रुतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयच्छृणुयात् ॥ २७ ॥ यद्वैतन्नमनुतेमन्वानोवैतन्नमनुतेनहिमंतुर्मतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयन्मन्वीत ॥ २८ ॥ यद्वैतन्नस्पृशतिस्पृशन्वैतन्नस्पृशतिनहिस्प्रष्टुःस्पृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयत्स्पृशेत् ॥ २९ ॥

विज्ञातेःअंतःकरणप्रभेदबुद्धिरूपेंद्रियसंबंधिज्ञानस्य ॥ ३० ॥ नतुतद्द्वितीयमस्तीतियद्भगवद्दृष्टान्यद्रष्टानास्तीतिउक्तंतदुपसंहर
ति ॥ यत्रवाअन्यदिवस्यादिद्वयादिना ॥ यत्रयदाअन्यद्भगवद्व्यतिरिक्तं अन्यदिववैअल्पस्वातंत्र्योपेतमपिभवेत् । तत्रवात
दैव अन्योभगवद्व्यतिरिक्तःपुरुषः अन्यद्भगवद्दृष्टाद्भिन्नं पश्यतीत्यादियुज्यते तदेवनास्ति । अतोनान्योन्यत्पश्येदित्यर्थः ॥३१॥
एवंद्रष्ट्रंतरनिषेधमुपसंहृत्यतस्यैवसर्वद्रष्टृत्वमित्युक्तमुपसंहरति ॥सलिलइति॥ सलिलेप्रकृतिरूपे एकःसमवर्जितःअद्वैतःअद्विती
योविरोधिद्वितीयशून्यःद्रष्टाविष्णुर्भवतितिष्ठति।लीलासहितःसलीलःसलीलएवसलिलःइतिवा । विष्णोरेवद्रष्टृत्वंनान्यस्येतिकुत
इत्यतआह॥एषइति ॥ हेसम्राट् एषआत्मा ब्रह्मपूर्णलोकोज्ञानंयस्यासौब्रह्मलोक इतिहैनंजनकमनुशशासयाज्ञवल्क्यइत्यर्थः ।
यद्वाशुक्लस्यनीलस्येत्यादिनानाडीनांपरस्परविलक्षणरूपवद्भिर्भगवद्रूपैर्व्याप्तत्वमुक्तंतेनभगवद्रूपाणांभेदःप्राप्तः तथातद्वाअस्यैतदा
प्तकाममित्यत्रषष्ठ्यारूपरूपिभेदश्च तन्निराकर्तुमाह ॥ यद्वैतमिति ॥ हृदयशब्दप्रकृतंब्रह्म यद्यस्मात् तत्शुक्लादिकंरूपं द्वैतं
स्वतःपरस्परंचभिन्नं नपश्यति तत्तस्मात् तत्द्वितीयं नास्तिनभवति भगवताभिन्नत्वेनादृष्टत्वेपिकुतोनभिन्नं नह्यस्माभिःशुक्ति

---

उ० । यद्वैतन्नविजानातिविजानन्वैतन्नविजानातिनहिविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंय
द्विजानीयात्॥ ३० ॥ यत्रवाअन्यदिवस्यात्तत्रान्योन्यत्पश्येदन्योन्यज्जिघ्रेदन्योन्यद्रसयेदन्योन्यद्वदेदन्योन्यच्छृणुयादन्योन्यन्मन्वीतान्योन्यत्स्पृ
शेदन्योन्यद्विजानीयात् ॥ ३१ ॥ सलिलएकोद्रष्टाऽद्वैतोभवत्येषब्रह्मलोकःसम्राडितिहैनमनुशशासयाज्ञवल्क्यएषास्यपरमागतिरेषास्यपरमासंप
देषोस्यपरमो

कायाभिन्नत्वेनरजतंनदृश्यतइत्येतावतातत्ततोनभिन्नमित्यतआह ॥ पश्यन्निति ॥ पश्यन्सर्वज्ञएवसन् तच्छुक्तादिकंभिन्नत्वे ननपश्यतिवै एवंतर्हिंजीवजडात्मकंविश्वमपिकिंततोनभिन्नंनेत्याह ॥ ततोन्यत्विभक्तंयत्पश्येदिति ॥ यद्यस्माद्भगवान् यज्जीवादिकं स्वतोविभक्तंभिन्नंपश्येत् तस्मात्ततोन्यदेव भगवताभेदेनदृष्टत्वेपिकुतोभिन्नं नहिचंद्रश्चंद्राद्भिन्नत्वेनास्माभिर्दृश्य तइत्येतावताभिन्नइत्यतआह ॥ नहीति ॥ द्रष्टुःपरमेश्वरस्य दृष्टेर्ज्ञानस्य विपरिलोपोवैपरीत्यमयथार्थत्वं नविद्यते। कुतः अवि नाशित्वान्निर्दोषत्वादबाधाच्चेत्यर्थः। ततोऽन्यद्विभक्तंयत्पश्येदितियद्भेदसत्यत्वमुक्तं तदिदानीमभेदनिषेधेनोपसंहरति ॥ य त्रवेति ॥ यत्रयस्मिन्पक्षेन्यदिवस्वतोभिन्नमप्यस्वातंत्र्येणनिमित्तेनान्यदिवस्थितंस्यादस्ति तत्रैवपक्षेऽन्यःपुरुषोऽन्यद्घटादि कंपश्येदित्यादियुज्यते । यत्रतुपक्षेतदेवनास्तिनतत्रान्यदर्शनादिव्यवहारोयुज्यतइत्यर्थः । स्वगतभेदशून्यस्यैवभगवतोमहि मांतरमाह ॥ सलिलइति ॥ व्याख्यानंपूर्ववत्। तस्यैवमहिमांतरमाह ॥ एषेति ॥ अस्यविष्णोरेषागतिः परमासार्वत्रिक त्वात्। अस्यैषासंप त्परमानिरतिशयपूर्णत्वात्। अस्यैषलोकोज्ञानं परमः सर्वविषयकत्वात्। अस्यैषआनंदःपरमः पूर्णत्वात्। ननुब्रह्मरुद्राद्यानंदस्यापिपूर्णत्वेनपरमत्वात्कथमेषोस्यपरमआनंदःइत्युक्तमित्यतआह ॥ एतस्यैवेति ॥ अन्यानिभूतानिब्रह्मा दीनिमुक्तान्यपि एतस्यविष्णोरेवानंदस्य मात्रांप्रतिबिंबरूपविप्रुट्कमुपजीवंतिअश्नंतीत्यर्थः ॥ ३२ ॥ ननुब्रह्मादयःकिंपरमात्मा



उप० । लोकएषोस्यपरमआनंदएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति ॥ ३२ ॥

नंदप्रतिबिंबभूतंविप्रुडानंदंसाम्येनैवाश्नंतिउततारतम्येनेतिजिज्ञासायांतारतम्येनैवेत्याह ॥ सइत्यादिना ॥ सप्रसिद्धोयोमनुष्याणांचक्रवर्तिनांमध्ये राद्धःसंसिद्धोमुक्तः समृद्धोयावत्साधनैःसाधयितुंशक्यतेतावत्संपूर्णत्वेनमुक्तः स्वराष्ट्रेज्ञानोपदेष्टृत्वादन्येषामधिपति र्मानुष्यकैर्मनुष्यत्वदशायांज्ञानोत्तरकृतदानादिफलभूतैःसर्वैर्भोगैःसंपन्नतमोभवति समनुष्याणांपरमआनंदःआविर्भूतस्वरूपानंदः। आनंदतद्वतोरभेदात्समनुष्याणांमध्येपरमानंदीत्यर्थः । यद्वासइतितदीयानंदपरामर्शः तदुत्तरकक्ष्यमाह ॥ अथेति ॥ येमनुष्याणांशतमानंदाः सएकोजितोलोकोब्रह्मज्ञानंयैस्तेजितलोकामुक्तास्तेषां पितृणामानंदः। अत्रशतशब्दोदशलक्षपरः मनुष्येभ्योमनुष्यगंधर्वाणांतेभ्योदेवगंधर्वाणांतेभ्यःपितृणांशतगुणानंदवत्त्वस्यान्यत्रोक्तत्वात्। अथजितलोकानांपितृणांये शतमानंदाः सएको गंधर्वलोकेगंधर्वाणांब्रह्मज्ञानेमुक्तौ मुक्तानांगंधर्वाणामानंदइत्यर्थः । उत्तमगंधर्वापेक्षयैवैतत् । अथयेशतं गंधर्वलोकआनंदाः सएकःकर्मदेवानांमुक्तानामानंदः । केकर्मदेवाइत्यतआह ॥ यइति ॥ अथयेशतंकर्मदेवानामानंदाः सएक

---

उप० । सयोहवैमनुष्याणाꣳराद्धःसमृद्धोभवत्यन्येषामधिपतिःसर्वैर्मानुष्यकैर्भोगैःसंपन्नतमःसमनुष्याणांपरमआनंदोऽथयेशतंमनुष्याणामानंदाःसएकःपितॄणांजितलोकानामानंदोऽथयेशतंपितॄणांजितलोकानामानंदाःसएकोगंधर्वलोकआनंदोऽथयेशतंगंधर्वलोकआनंदाःसएकःकर्मदेवानामानंदोयेकर्मणादेवत्वमभिसंपद्यंतेऽथयेशतंकर्मदेवानामानंदाःसएकआजानदेवानामानंदोयश्चश्रोत्रियोऽवृजिनोऽकामहतोऽथयेशतमाजानदेवानामानंदाःसएकःप्रजापतिलोकआनंदो


578

आजानदेवानांजातेभ्योवराणामिंद्रादीनामानंदः। तेषांमुक्तत्वज्ञापकमाह ॥ **यश्चेति** ॥ वचनव्यत्यासः येश्रोत्रियाःश्रुतिफलं प्राप्ताः अवृजिनादुःखरहिताः अकामहताःकामैरहताश्चतेषामाजानदेवानामितिसंबंधः। एवमुत्तरत्रापि । अथयेशतमाजानदेवानामानंदाः सएकःप्रजापतीनांपशुपतीनांरुद्राणांशेषाणामितियावत् । लोकेब्रह्मज्ञानेमुक्तौ आनंदः । येश्रोत्रियाअवृजिनाअकामहताश्चतेषांप्रजापतीनामितिसंबंधः । अथयेशतंप्रजापतिलोकआनंदाः सएकोब्रह्मलोकेब्रह्मणांलोकेब्रह्मज्ञानेमुक्तावानंदः । येश्रोत्रियाअवृजिनाअकामहताश्चतेषांब्रह्मणामित्यन्वयः । हेसम्राट्एवंतारतम्येस्थितानिब्रह्मादीनिमुक्तानिएतस्यानंदस्यमात्रामेवोपजीवंतियस्मात् अथतस्मादेषएवपरमात्मापरमआनंदःनिरतिशयपूर्णानंदः एषब्रह्मलोकःपूर्णज्ञानइतिहोवाचयाज्ञवल्क्यः । राजाह ॥ **सोहमिति** ॥ अत्रैवंराज्ञापृष्टेसति याज्ञवल्क्योविभयांचकारभीतवान् । भयनिमित्तमाह ॥ **मेधावीति** ॥ मेधावीप्रज्ञावान्राजा सर्वेभ्यःप्रश्नकर्तृभ्यस्तेभ्यआश्वलादिभ्यो मामुदरौत्सीत्उत्कृष्टतयावरोधंकृतवानिति ॥ ३३ ॥ विमोक्षायब्रूहीत्युक्तोयाज्ञवल्क्यआह ॥ **सवाइति** ॥ पूर्वस्यैवपुनर्वचनमभ्यासार्थं ॥ ३४ ॥ एवंसुप्त्यादिनियामकोभगवानित्युक्तं इदानींमरण

579

---

उप० । यश्चश्रोत्रियोऽवृजिनोऽकामहतोऽथयेप्रजापतिलोकआनंदाःसएकोब्रह्मलोकआनंदोयश्चश्रोत्रियोऽवृजिनोकामहतोऽथैषएवपरमआनंदएषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीत्यत्रहयाज्ञवल्क्योविभयांचकारमेधावीराजासर्वेभ्योमांतेभ्यउदरौत्सीदिति ॥ ३३ ॥ सवाएषएतस्मिन्स्वप्नांतेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैव ॥ ३४ ॥

नियामकोपिसएवेत्याह ॥ **तद्यथेति** ॥ तत्निदर्शनंयथा सुसमाहितंपुमधिष्ठितं अनःग्रामादिकं उत्सर्जद्यायात्गच्छेत् एवमेवायं शारीरःशरीराभिमानी आत्माजीवो यत्रयदा ऊर्ध्वोच्छ्वासीभवति एतत्एतस्मिन्काले प्राज्ञेनात्मनापरमात्मना अन्वारूढोदेहं उत्सर्जत्परित्यजन्याति ॥ ३५ ॥ नकेवलंसाधारणमरणएवभगवतान्वारूढोजीवः किंतुमोक्षरूपमरणेपीत्याह ॥ **सइति** ॥ सो यंजीवः यत्रयदा अणिमानंभगवंतं न्येतिनिर्गच्छति भगवत्प्राप्तिरूपंमोक्षंगंतुमिच्छतीतियावत्। तदाप्राज्ञेनात्मनापरमात्मनान्वा रूढोदेहंउत्सर्जदितिपूर्वेणसंबंधः। भगवंतंकदान्येतीत्यतआह ॥ **जरयेति** ॥ जरयावोपतपताउपतापयतीत्युपतपन्रोगादि स्तेनवा अणिमानंनिगच्छति। ननुसर्वेपिजरयैवाणिमानंनिगच्छंतिअतःकथमुपतपतावेतिपक्षांतरोक्तिरित्यतोनायंनियमइतिसदृ ष्टांतमाह ॥ **तद्यथेति** ॥ तत्निदर्शनंयथा आम्रंवाफलंबाल्येऔदुंबरंफलंपरिणामे पिप्पलंअश्वत्थफलंवासम्यक्पाके बंधनात्प्रमु च्यतेपतति एवमेवायंपुरुषः कलौबाल्ये त्रेतादौमध्यमेवयसि कृतेचरमेवयसि येभ्योंऽगेभ्यःशरीरावयवेभ्यःशरीरादितियावत् सं प्रमुच्यप्रतिन्यायंप्रतियोनि प्राणायैववायवेएव पुनराद्रवति पूर्वमेकदावायुंप्राप्यजायस्वज्ञानमाप्नुहीतितद्द्वारादेवोत्पद्यज्ञानंसंपा द्यपुनःप्राणंप्राप्नोतिततोभगवंतंप्राप्नोतीत्यर्थः ॥ ३६ ॥ सजीवोयदाभगवंतंप्रतिगच्छति तदाविशेषमाह ॥ **तद्यथेति** ॥ तत्निद

---

उप० । तद्यथाऽनःसुसमाहितमुत्सर्जद्यायादेवमेवायंशारीरआत्माप्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्यातियत्रैतदूर्ध्वोच्छ्वासीभवति ॥ ३५ ॥ सयत्रायमणिमानंन्येतिजरयावोपतपतावाऽणिमानंनिगच्छति तद्यथाम्रंवोदुंबरंवापिप्पलंवाबंधनात्प्रमुच्यतएवमेवायंपुरुषएभ्योंगेभ्यःसंप्रमुच्य पुनःप्रतिन्यायंप्रतियोन्याद्रवतिप्राणायैव ॥ ३६ ॥

र्शनंयथा अयंतमागच्छंतंराजानंदृष्ट्वाउग्राःश्रेणयः प्रत्येनसोयोधाः सूताश्चग्रामण्यश्चभूपालाश्चेतिसूतग्रामण्योजनपदस्थाः अन्नैः पानैरावसथैरावासस्थानैः पूजांप्रतिकल्पंतेकल्पयंति । कथंदूरादागच्छतोराज्ञोदर्शनंचतेषामित्यतआह ॥ अयमिति ॥ अयं ध्वजआगच्छति तस्मादयंराजाप्यायातीतिज्ञात्वाप्रतिकल्पंतइतिसंबंधः । एवमेवंविदंपूर्वोक्तप्रकारेणभगवदपरोक्षज्ञानिनमायांतं दृष्ट्वा सर्वाणिभूतानिअर्चिरादिदैवतानि पूजांप्रतिकल्पंते । ननुज्ञानिन्यागतेदेवैःकिमितिपूजाकल्पनीया उग्रादिवत्तेषांतद्भृत्य त्वाभावादित्यतआह ॥ इदमिति ॥ इदंमुक्तजीवस्वरूपमागच्छति अतःअनेनसहइदंपरंब्रह्मायातीतितत्पूजार्थंप्रतिकल्पंतइत्यर्थः ॥ ३७ ॥ मुक्तंजीवमादायभगवानेकएवगच्छतिकिं नेतिभावेनाह ॥ तदिति ॥ तन्निदर्शनंयथा राजानंप्रयियासंतंगच्छंतं राज्ञासहस्थिताउग्राःप्रत्येनसः सूतग्रामण्योऽभिसमायांति एवमेवेममात्मानंमुक्तमादायगच्छंतंपरमात्मानंअंतकालेमोक्षकाले सर्वेप्राणाः शरीरस्थाःवागादींद्रियदेवाः अभितःसमायांति । अंतकालमेवाह ॥ यत्रेति ॥ ३८ ॥ ज्योतिर्ब्राह्मणं ॥ ३ ॥छ॥ (तद्यथान)इत्यादिनानिरूपितमंत्यमरणप्रकारमेवविविच्यदर्शयति ॥ सयत्रेत्यादिना ॥ सयत्रायमात्माबल्यंन्येत्यत्राबल्यम

---

उ० । तद्यथाराजानमायांतमुग्राःप्रत्येनसःसूतग्रामण्योन्नैःपानैरावसथैःप्रतिकल्पंतेऽयमायात्ययमागच्छतीत्येवꣳहैवंविदꣳसर्वाणिभूतानि प्रतिकल्पंतइदंब्रह्मायातीदमागच्छतीति ॥ ३७ ॥ तद्यथाराजानंप्रयियासंतमुग्राःप्रत्येनसःसूतग्रामण्योभिसमायंत्येवमेवेममात्मानमंतकालेसर्वेप्रा णाअभिसमायंतियत्रैतदूर्ध्वोच्छ्वासीभवति ॥ ३८ ॥ इतिज्योतिर्ब्राह्मणं ॥ ३ ॥

भा० । सर्वेषांबलकारित्वाद्बल्योविष्णुःप्रकीर्तितः ।

बलभावंदौर्बल्यमितिव्याख्यानमसत् प्रमाणविरुद्धत्वादितिभावेनप्रमाणेनबल्यशब्दार्थमाह ॥ सर्वेषामिति ॥ बलसंबंधीबल्यः संबंधश्चतत्कारित्वमित्यभिप्रेत्यबलकारित्वादित्युक्तंसंकोचेकारणाभावात्सर्वेषामिति । नन्वेवंसआत्माबल्यंन्येत्यसंमोहमिवन्येतीत्यनुपपन्नं जीवस्यविष्णुप्राप्तेरेवमरणरूपत्वेनतदनंतरंसंमोहप्राप्त्यसंभवात् । दौर्बल्यप्राप्त्यनंतरंसंमोहप्राप्तेश्चसंभावितत्वादित्याशंकांपरिहरन् सयत्रायमित्यादिप्राणाअभिसमायंतीत्यंतंवाक्यंव्याचष्टे ॥ तंयदेति ॥ यत्रेत्यस्यार्थोयदेति न्येत्येतस्यार्थः प्राप्येति श्रौतात्मशब्दस्यविष्णुपरत्वेसंमोहप्राप्त्यादेरसंभवादाह ॥ जीवात्मेति ॥ उक्तशंकापरिहारायमृतेःपूर्वमितिशेषोक्तिः । न्येतीत्यस्यार्थोयातीति एनमित्यस्यार्थोविष्णुमिति अथेत्यस्यार्थस्तदेति एतेप्राणाइत्यस्यार्थोदेवाइति सएतास्तेजोमात्राइत्युत्तरत्रानुवादादाह ॥ तेजःस्वरूपिणइति ॥ सएतास्तेजोमात्राःसमभ्याददानोहृदयमेवान्ववक्रामतीतिवाक्यंव्याचष्टे ॥ तानादायेति ॥ सयत्रैवचाक्षुषइत्युत्तरत्रानुवादाच्चक्षुःस्थानादित्युक्तं । अथारूपज्ञोभवतीत्युक्तरूपाज्ञत्वंप्रकृतचाक्षुषपुरुषस्यविष्णोरुच्यतइतिप्रतीतिंपरिहरन्अथारूपज्ञोभवतीत्येतद्व्याचष्टे ॥ तदेति ॥ अनेनतदाकस्यापिज्ञानाभावेनारूपज्ञइतिविशिष्योक्तिःकथमितिशंकापरिहृता । रूपशब्दस्योपलक्षकत्वांगीकारात् । ब्रह्मसमाश्रितइत्युक्त्याजीवस्याप्रकृतत्वशंकानिरस्ता । बल्यंन्येत्ये

भा० । तंयदाप्राप्यजीवात्मामृतेःपूर्वंविमुग्धतां । यातिविष्णुंतदादेवायांतितेजःस्वरूपिणः । तानादायहरिश्चक्षुस्थानाद्धृदयमाव्रजेत् । तदानकिंचिज्ज्ञानातिजीवोत्रब्रह्मसमाश्रितइतिच ।

तिब्रह्मसमाश्रितत्वेनप्रकृतत्वात् । ननुअथैनमेतेप्राणाइत्यत्रैनमितिपूर्वप्रकृतजीवपरामर्शप्रतीतेःकथंविष्णुमितिव्याख्यानमित्य तआह ॥ एनमिति ॥ जीवपरत्वेप्राणानांतदभिगमनंनस्यादितिबाधकसूचनायाभिसमायंतीत्यनुवादः । सचाक्षुषःपुरुषोजीवोय त्रयदापराङ्वहिःपर्यावर्तते तदाअरूपज्ञोभवतीतिप्रतीतिनिरासायकिंचिदध्याहारेणतद्व्याचष्टे ॥ पराङ्स्थितइति ॥ वहि र्व्यापारंकुर्वन्स्थितइत्यर्थः । प्रत्यक्अंतर्हृदयस्थानं । अन्यथायथाश्रुतार्थांगीकारेउक्तानुवादरूपत्वानुपपत्तेः । चाक्षुषोभगवानि त्युक्त्याभगवतश्चक्षुस्थत्वमुक्तंतत्रप्रमाणमाह ॥ इंधइति ॥ १ ॥ एकीभवतिनपश्यतीत्याहुरित्यादिवाक्यमप्रतिपत्तिविप्रतिप त्तिनिरासायव्याख्यातुंकिंचित्प्रमेयमाह ॥ हृदयइति ॥ ननुजीवस्यहृदयस्थत्वेसर्वदेहगतस्पर्शादिज्ञानंचक्षुरादिनारूपादिज्ञा नंचकथंस्यादित्यतआह ॥ विशेषेणेति ॥ किंततइत्यतआह ॥ चक्षुरादिष्विति ॥ तयोर्जीवेशयोः रूपाणिजाग्रत्कालेच क्षुरादिषुबहूनिसंति अतःसर्वगतःस्पर्शादिज्ञानोपपत्तिः । जीवपक्षेरूपाणीत्यस्यप्रकाशगुणेनविशेषसंनिधानंविवक्षितं । यथोक्तमै तरेयभाष्ये जागरितेप्यक्ष्यादिषुविशेषसन्निहितंभवतिदीपप्रकाशवदिति । इदानींतद्वाक्यंव्याचष्टे ॥ तान्येवेति ॥ तानिचक्षु रादिषुस्थितानिजीवरूपाणिविष्णुरूपाणिच हृदयस्थेनजीवरूपेणविष्णुरूपेणच इत्याहुरित्यस्यार्थःइतिविदुःप्राज्ञाइति । ननुदे

583

भा० । एनंवल्यमभिसमायांति । पराङ्स्थितश्चाक्षुषोभगवान्प्रत्यक्पर्यावर्तते । इंधोहवैनामैषयोयंदक्षिणेक्षन्पुरुषइत्यादिश्रुतेः ॥ १ ॥ हृदयेसंस्थितोजीवोविशेषेणहरिस्तथा । चक्षुरादिषुरूपाणिजाग्रत्कालेतयोःसदा । बहूनिसंतितान्येवयदैकीभावमाप्नुयुः । हृदयस्थेनरूपेणतदाजीवो

क्षो रु

हांतःसूर्यादितेजसोभावात्केनहृदयाग्रद्योतनमित्याशंकांपरिहरन् तस्येहैतस्येति वाक्यंव्याचष्टे ॥ तदेति ॥ स्वतेजसास्वरूप भूततेजसा । तेनप्रद्योतेनैषआत्मानिष्क्रामतीतिवाक्यंजीवपरत्वनिरासायव्याचष्टे ॥ तेनेति ॥ तमुत्क्रामंतंप्राणोनूत्क्रामतीत्य स्यार्थमाह ॥ प्राणइति ॥ प्राणमनूत्क्रामंतमित्यादेरर्थमाह ॥ प्राणमन्यइति ॥ अन्येदेवाःप्राणमनुव्रजेयुः । अत्रविशेषस्तु अन्येषांम्रियमाणानांप्राणाभागतएवतु। देवतास्वेकतांयांतिभागतोनुव्रजंतितं। ज्ञानिनांमुच्यमानानांनैवयांतिस्मदेवताः। तेनैवस हसंयांतिततोनूत्क्रमणाश्रुतिरितिवचनादवगंतव्यः । तंविद्याकर्मणीसमन्वारभेतेपूर्वप्राज्ञाचेत्यस्यार्थमाह ॥ विद्येति ॥ विद्या कर्मयोग्यताशब्दैःप्रसिद्धविद्यादिकमेवोच्यतइतिप्रतीतिनिरासायतेषांशब्दानांविवक्षितमर्थंप्रमाणेनाह ॥ कर्मेति ॥ नकेवलंत्र ह्मैवज्ञानाभिमानीविष्णुमनुगच्छति किंतुवायुरपितर्हितस्यप्राणोनूत्क्रमतीत्यनुगमनस्याभिहितत्वात्पुनरुक्तिरित्याशंकांपरिहरति ॥वायुरिति॥प्राणात्मकश्चेतिद्विधैवेतिसंबंधः।ननुहृदयाग्रप्रद्योतनप्रकाशितद्वारेणगच्छन्ज्ञानीमूर्ध्नएवगच्छतीतिप्रतीयते निर्भि द्यमूर्धन्व्यसृजेत्परंगत इतिवचनात्। अतश्चक्षुषोवामूर्ध्नोवान्येभ्योवाशरीरदेशेभ्यइत्युक्तिःकथमित्यतआह ॥ देवलोकइति ॥ यद्देवलोकइत्यर्थः। तद्देवताद्वारेणतद्देवताभिमतचक्षुरादिद्वारेण। ब्रह्मणश्चतुर्मुखस्य लोकंगच्छन्नपि तथैवमूर्ध्नएवोत्क्रामेत् तर्ह्यन

भा० । नकिंचन । जानातीतिविदुःप्राज्ञास्तदाविष्णोःस्वतेजसा । द्योततेहृदयाग्रंचतेनद्वारेणकेशवः । निष्क्रामेज्जीवमादायप्राणएन मनुव्रजेत् । प्राणमन्येतथादेवाविद्याकर्मचयोग्यतेतिमहामीमांसायां । कर्माभिमानीगरुडोत्रब्रह्माज्ञानाभिमानवान् । पूर्वप्रज्ञायोग्यतास्याद्रमातद भिमानिनी। एतेपिविष्णुंगच्छंतमनुयांतिसदैवहि ।वायुर्ज्ञानात्मकश्चैवप्राणात्मकइतिद्विधा । अनुयातिहृषीकेशंसर्वैर्देवैःसमन्वितइतिच । देवलोके

योःकोविशेषइत्यतआह॥ **सुषुम्नायाऽविभेदतइति**॥विष्णुलोकंगच्छन्सुषुम्नयामूर्धानंगत्वोत्क्रामेत् ब्रह्मलोकंगच्छंस्तुसुषुम्नाग्रभेदेनमूर्धानंगत्वोत्क्रामतीतितयोर्विशेषइत्यर्थः।सविज्ञानोभवतीत्यस्यसपरमात्माविज्ञानोभवतीत्यर्थप्रतीतिनिरासायतदनूद्यव्याचष्टे॥ **सविज्ञानइति** ॥ नन्वेवंसविज्ञानमेवान्ववक्रामतीत्यस्यजीवसहितंभगवंतमन्वक्रामतीत्यर्थःस्यात् नचासौयुक्तः। जीवसहितभगवंतंप्रतिगंतुरभावादित्यतस्तद्वाक्यंयथावद्व्याचष्टे॥**सइति**॥ ननुजीवःपूर्वमेवभगवंतंप्राप्तोस्त्येव। वल्यंन्येतीत्युक्तत्वात् तथाचसभगवान्जीवमन्ववक्रामतीतिकथमुच्यतइत्यतस्तदभिप्रायमाह॥**जीवमिति**॥ भगवान्जीवमारुह्यगच्छतीत्यत्रप्रमाणमाह॥**प्राज्ञेनेति**॥नन्वत्रविज्ञानशब्दोजीवपरःकुतइतिचेत् योविज्ञानेतिष्ठन्नित्यंतर्यामिब्राह्मणेकाण्वशाखिनांविज्ञानशब्दस्यजीवाभिप्रायेणपाठात् नचतत्रापिविज्ञानशब्दोजीवपरइतिकुतइतिवाच्यं। यआत्मनितिष्ठन्नित्यंतर्यामिब्राह्मणेमाध्यंदिनशाखिनांआत्मशब्दस्यजीवाभिप्रायेणपाठात्। तत्समाख्ययात्रापिविज्ञानशब्दस्यजीवपरत्वोपपत्तेरितिभावेनाह॥ **यइति** ॥ उभयोःकाण्वमाध्यंदिनशाखिनोर्विज्ञानात्मशब्दयोः जीवाभिप्रायेणपाठइत्यत्रनियामकंसूत्रंपठति॥ **शारीरश्चेति** ॥ नचस्मार्तमितिपूर्वसूत्रान्नञोनुकर्षणार्थश्चशब्दः। शारीरोजीवश्चनांतर्यामी कुतःयतःउभयेपिकाण्वमाध्यंदिनाश्च योविज्ञानेतिष्ठन्नितियआत्मनितिष्ठन्निति

---

भा०। चिरंरत्वायस्तुमुक्तिंव्रजिष्यति। सतुतद्देवताद्वारेणोत्क्रामतिनसंशयः। विष्णोर्लोकंपरंगच्छन्नुत्क्रामेन्मूर्ध्नएवतु। तथैवब्रह्मणोलोकंसुषुम्नायाविभेदतइत्यध्यात्मे। सविज्ञानोभवतिजीवेनसहितोभवति। सविज्ञानंजीवमेवान्ववक्रामति। जीवमारुह्यगच्छति भगवान्। प्राज्ञेनात्मनान्वारूढइतित्युक्तं। योविज्ञानेतिष्ठन्यआत्मनितिष्ठन्नित्युभयोर्जीवाभिप्रायेणहिपाठः। शारीरश्चोभयेपिहिभेदेनैनमधीयतइतिभगवद्वचनं।

585

एनंजीवमंतर्यामिणोभेदेनाधीयतइतिभगवद्वचनेनविज्ञानात्मशब्दयोर्जीवपरत्वोक्तेस्तयोर्जीवाभिप्रायेणपाठइतिसिद्धमित्यर्थः । विज्ञानशब्दस्यजीववाचित्वेस्पष्टंचप्रमाणमाह ॥ विज्ञानात्मेति ॥ तदेतदक्षरंवेदतेयस्तुसोम्यससर्वज्ञःसर्वमेवाविवेशेतिवाक्यशेषः । विज्ञानात्माविज्ञानस्वरूपोजीवः प्राणाश्चक्षुरादयः भूतानिपृथिव्यादीनि सर्वैर्देवैरभिमानिभिःसूर्याद्यैःसह यत्रयस्मिन्नक्षरे ( सम्अजस्रं )संप्रतिष्ठति तदेतदक्षरंवेदतेविजानातियःपुरुषः ससर्वज्ञःसर्वंपरब्रह्माविवेशैवध्रुवमाविशत्येवेत्यर्थः। नचात्रविज्ञानात्मशब्दोब्रह्मपरः यत्रसंप्रतिष्ठंतीत्युक्तिविरोधात् किंचषट्प्रश्नोपनिषदिपूर्वोक्तार्थेह्ययंमंत्रउदाह्रियते पूर्वोक्तश्चार्थोजीवस्यविज्ञानरूपत्वं सुषुप्तौकस्यसुखंभवतीतिपृष्टेशरीरेसुखंभवतीत्युक्तत्वात् शरीरशब्दस्यज्ञानात्मकत्वेनभगवत्साद्दश्ययुक्तजीवपरत्वात् । यथोक्तं साद्दश्याद्देहवज्जीवोविष्णोस्तस्यसुखंभवेदिति । ननुतेनप्रद्योतेनैषआत्माजीवोनिष्क्रामतीत्येवार्थःकिंनस्यात् । बाधकाभावात्। अतःकिंविष्णुपरतयाव्याख्यानेनेत्यतस्तत्रबाधकमाह॥ एषइति ॥यद्यत्रात्मशब्दोजीवपर स्तर्ह्युत्तरत्रापि अयमात्मेदंशरीरंनिहत्येत्यत्र सवाअयमात्माब्रह्मेत्यत्रचात्मशब्दोजीवपरइत्यंगीकारापातेनइदंशरीरंनिहत्येत्यादिकमपिजीवकर्तृकमित्यंगीकर्तव्यंस्यात् । नचतद्युक्तमित्यर्थः । कुतोनयुक्तमित्यतआह ॥ नहीति ॥ सवाअयमात्माब्रह्मेत्यत्रात्मशब्दस्य जीवपरत्वायोगेहेतुमाह ॥ नचेति ॥ अत्रात्मशब्दस्य जीवपरत्वेविज्ञानमयत्वादेःकथंचित्तस्मिन्संभवेपिसर्वमयइत्युक्तंसर्वप्राधान्यंजीवस्यकथमपिनयुज्यते।

भा० । विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्रेतिच । एषआत्मानिष्क्रामतीतिजीवांगीकारेशरीरंनिहत्याविद्यांगमयित्वाऽन्यन्नवतरंकल्याणतरंरूपंकुरुतइत्यादिकमयुक्तंस्यात् । नहिजीवःशरीरंनिहत्यअविद्यांमयतिरूपांतरंवाकरोति । नचसर्वमयत्वंजीवस्य ।



|गम

नचसर्वमयइतिसर्वस्वरूपत्वमुच्यतइतिवाच्यं । त्वयापिजीवस्यविशिष्टस्यसर्वस्वरूपत्वानंगीकारात् । **जीवचैतन्यस्यसर्वचैतन्याभेदार्थत्वेचलक्षणापातात्** । अतोनायमात्मशब्दोजीवपरइत्यर्थः । तत्रैवहेत्वंतरमाह ॥ **ब्रह्मेति** ॥ २ ॥ **ननुमुच्यमानस्यदेहांतरप्राप्तेरसंभवात्कथंतृणजलूकादृष्टांतइत्यतस्तज्जीवपरमितिप्रतीतिनिरासायप्रमाणेनव्याचष्टे** ॥ **यथेति** ॥ **अयमात्मेत्यस्यार्थोभगवान्पुरुषोत्तमइति** । जीवस्यसूक्ष्मरूपंसूक्ष्मशरीरंलिंगशरीरंप्राप्येत्यनेनान्यमाक्रममाक्रम्येत्येतद्व्याख्यातं आत्मानमुपसंहरतीत्यस्यार्थःस्थूलंदेहंपरित्यजेदिति । इदंशरीरंनिहत्येत्यस्यार्थमाह ॥ **इदमिति** ॥ अविद्यांगमयित्वेत्यस्यार्थमाह ॥ **अविद्यांचैवेति** ॥ ज्ञानसर्जनादेवेत्यन्वयः ॥ ३ ॥ तद्यथापेशस्कारीपेशसोमात्रामुपादायेत्यादिव्याचष्टे ॥ **स्वर्णकारइति** ॥ कल्याणतरमित्यस्यार्थःस्वर्णमलमग्नौनिहत्येति आत्मेष्टंरूपंरुचककटकादिकं आत्माग्नौआत्मज्ञानाग्नौस्वेच्छयाप्ययोग्यानांयोग्यंरूपंकरोतिकिमित्यत आह ॥ **यद्योग्यमिति** ॥ एतदेवविवृण्वन्पित्र्यंवेत्यादेरर्थमाह ॥ **पितृजीवस्येति** ॥ **पित्र्यंरूपंकुरुतइतिसंबंधः** । तस्यगंधर्वजीवस्य गांधर्वमेवेतिसंबंधः । प्रजापतेःरुद्रस्य । ननुभवत्वेवमुत्सर्गः **तथापिक्वापिदेशेक्वापिकालेतत्तद्योग्यतातिक्रमेणापिकरोतिकिं**

---

भा० । ब्रह्मेतिविशेषणाच्च ॥ २ ॥ यथातृणजलूकैवंभगवान्पुरुषोत्तमः । जीवस्यसूक्ष्मरूपंतुप्राप्यस्थूलंपरित्यजेत् । इदंशरीरंभूतेषुविलापयतिकेशवः । अविद्यांचैवजीवस्यगमयेज्ज्ञानसर्जनात् ॥ ३ ॥ स्वर्णकारोयथास्वर्णमलमग्नौनिहत्यच । शुद्धेनतेनचात्मेष्टंकुरुतेरूपमंजसा । एवं सभगवान्विष्णुर्जीवस्वर्णस्ययन्मलं । अविद्याकामकर्माद्यमात्माग्नौनाश्यसर्वकृत् । स्वेच्छयाकुरुतेरूपंयद्योग्यंतस्यमुक्तिगं । पितृजीवस्यपित्र्यंसगांधर्वं तस्यचैवहि । दैवंतुदेवजीवस्यप्राजापत्यंप्रजापतेः । ब्रह्मणोब्राह्ममेवेतिनित्यानंदस्वरूपकं ।

नेत्याह ॥ नेति ॥ विनारूपंकुरुतेइत्यनुवर्तते । ननुस्यादेतद्यदियोग्यतैवसिद्धास्यात् सैवकुतइत्यतआह ॥ पूर्वप्रज्ञेति ॥ तं
विद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाचेतिश्रुतेर्योग्यतासिद्धिरित्यर्थः । ननुपित्रादिजीवस्यपित्र्यादिरूपंकुरुतइतिकथं पित्रादीनां
पित्र्यादेरूपस्यपूर्वमेवसिद्धत्वात् सिद्धस्यकरणायोगादित्यतःतदभिप्रायमाह॥यदेति॥ ब्रह्मायदामुक्तोभवेत् तदैवसमुख्यतोब्रह्म
एवमेवप्रजापतिरपिरुद्रोपिशेषइतियावत् यदामुक्तोभवेत् तदैवमुख्यतःप्रजापतिः अन्येपिदेवाद्यायदामुक्ताभवेयुस्तदैवतेमुख्यतो
देवाद्याः मुक्तेःपूर्वंतुब्रह्मादीनांब्रह्मत्वादियोग्यतामात्रं नमुख्यतोब्रह्मत्वादिकं अविद्यावृतत्वादित्यर्थः।तथाचपूर्वंविद्यमानमपिपि
त्र्यादिरूपमविद्यावृतंतन्निवर्तनेनैवशुद्धंकरोतीतिभावेनैवतत्करोतीतिव्यपदेशोनतुपूर्वमविद्यमानकरणाभिप्रायेणेतिभावः । अत्र
दृष्टांतमाह॥यथाहीति॥स्वर्णरूप्याद्यंतन्मयरुचककटकादिकं मलहानावेवतद्भवेत्मुख्यतःस्वर्णरूप्यादिमयरुचककटकादिकंभ
वेत् पूर्वंमलसद्भावदशायांतु योग्यतामात्रं नमुख्यतःसुवर्णादिमयरुचककटकादिकमित्युच्यतइत्यर्थः । स्वर्णरूपादीतिपाठेपिस्व
र्णमयंरुचककटकादीत्येवार्थः । एकस्यैवपूर्वंयोग्यतामात्रंपश्चादतिशयभावेनमुख्यतस्तद्भवनमित्यत्रस्पष्टंदृष्टांतमाह ॥ द्विज
त्वमिति ॥ बालकेअनुपनीतेयथाद्विजत्वंद्विजत्वयोग्यतैव नतुमुख्यतोद्विजत्वं उपनयनरूपसंस्कारेचयथामुख्यतोद्विजत्वं
तथेत्यर्थः । एवंपित्र्यंवागांधर्ववेत्यादिकंमुक्तपरत्वेनव्याख्यायेदानींपित्र्यंपितृलोकेभोगयोग्यंशरीरंकुरुते।एवंगांधर्वमित्यादि

भा० । नयोग्यतांविनाकापिपूर्वप्रज्ञाश्रुतेःक्वचित् । यदामुक्तोभवेद्ब्रह्मातदाब्रह्मासमुख्यतः । एवंप्रजापतिश्चैवतथैवान्येपिसर्वशः । यथा
हिस्वर्णरूप्याद्यंमलहानौहितद्भवेत् । पूर्वंतुयोग्यतामात्रंद्विजत्वंबालकेयथेत्यादिच ।

अन्येषांभूतानांतिर्यगादिसंबंधिशरीरंकुरुतइतियत्परेणामुक्तपरतयाव्याख्यातंवत्दूषयति ॥ नहीति ॥ किंचामुक्तानांपित्रादीनांकल्याणतरत्वाभावेपिकल्याणमात्रत्वंसंभावितं तेषामविद्याकामकर्मादिरूपमलसद्भावेपिशारीरमलाभावात् । अन्येषांभूतानामित्युक्तानांतिर्यगादीनांकल्याणत्वमपिनसंभवति । शारीरमलस्यापिसद्भावादितिभावेनाह ॥ नचेति ॥ ननुअयमात्मेदंशरीरंनिहत्यपातयित्वाअविद्यांगमयित्वाचेतनंकृत्वाअन्यन्नवतरंकल्याणतरंरूपंशरीरंकुरुतइतिमरणमात्रमेवात्रोच्यते मुक्तिरूपमरणेशरीरांतरग्रहणायोगात् अतःकथंमुक्तपरत्वेनव्याख्यानमित्यतआह ॥ मरणमात्रंचेदिति ॥ व्यर्थंविगतार्थं उक्तरीत्याविरुद्धार्थंच किंचपित्र्यंवागांधर्वंवेत्यादिनोक्ताःपित्रादयोनामुक्ताः । सएकःपितॄणांजितलोकानामानंदइत्यादिनापूर्वंब्राह्मणोक्तानांपित्रादीनामेवात्रोक्तत्वात् तेषांचजितलोकत्वश्रोत्रियत्वादिभिर्मुक्तत्वस्यनिर्णीतत्वात्। नचतत्रपितरोगंधर्वाःकर्मदेवाःआजानदेवाःप्रजापतिर्ब्रह्माचेतिषडुच्यंते अत्रपुनःपित्र्यंवेत्यादिनापंचैव अतःकथंतत्रोक्तानामेवात्रोक्तिरितिवाच्यं। दैवमित्यस्यकर्मदेवाजानदेवसंबंधीतिव्याख्यानात् इतिभावेनाह ॥ पूर्वोक्तेति ॥ ननुपित्र्यंवेत्याद्युक्तानांपित्रादीनाममुक्तत्वेयथाकल्याणतरत्वमयुक्तं तथातेषांमुक्तत्वांगीकारेनवतरत्वमनुपपन्नं पूर्वमविद्यमानस्वरूपप्राप्तेरभावादित्यतआह ॥ पूर्वेति ॥ कल्याणतरत्वसमुच्चयार्थश्चशब्दः । प्रकारांतरेणापिनवतरत्वंप्रमाणेनघटयति ॥ अल्पेति ॥ संसृतौजीवरूपमल्पतेजएव तथापरिमाणतोप्यल्प

भा० । नह्यमुक्तानांकल्याणपरत्वं । नचमृगादीनांकल्याणत्वमपि । मरणमात्रंचेदत्रोच्यतेतदाकल्याणतरमितिविशेषणंव्यर्थंस्यात् ।
 पूर्वोक्तश्रोत्रियावृजिनाकामहतदेवादीनांचात्रोक्तिः । पूर्वाननुभूतत्वान्नवतरंचभवति । अल्पतेजस्तथैवाल्पंजीवरूपंहिसंसृतौ ।

मेवास्ति हियस्मात् संसृतावल्पतेजोजीवरूपंमुक्तौसुमहत्तेजःकरोति । तथैवसंसृतावल्पंपरमंसूक्ष्मंजीवरूपंमुक्तौमहत्महापरि
माणवत्करोति । अतोब्रह्मादीनामेतद्रूपंनवतरंकरोतीत्युच्यतइत्यर्थः । ननुपूर्वब्राह्मणेसमनुष्याणांपरमआनंदइतिचक्रवर्तिनो
ऽभिहिताः नचात्रतेऽभिधीयंते अतःकथंतत्रोक्तानामेवात्रोक्तिरित्यतः अन्येषांवाभूतानामित्यनेनतेप्युक्ताएवेत्याह ॥ **अन्येषां**
**वेति** ॥ मनुष्यादीनांचक्रवर्त्यादीनामित्यर्थः। पूर्वब्राह्मणेमनुष्यपदेनचक्रवर्तिनामुक्तत्वात्। आदिपदेनमनुष्योत्तमाग्राह्याः। पूर्व
ब्राह्मणेचचक्रवर्तिभ्योनीचामनुष्योत्तमाग्राह्याएव।अन्येभ्योपिविमुक्तेभ्यआनंदश्चक्रवर्तिनामित्युक्तत्वात्।नन्वन्येषांभूतानामिति
सामान्यतएवोक्तत्वात्तेनोक्तव्यतिरिक्तभूतमात्रग्रहणंकिंनस्यादितिचेन्न। तमोयोग्यानांनित्यसंसारिणांचकल्याणतरंमोक्तंरूपंनभ
विष्यतीतिप्रमाणसिद्धत्वेनतेनतेषांग्रहणायोगादितिभावेनाह ॥ **नासुरादीनामिति** ॥ ननुयदिपूर्वब्राह्मणोक्तानामेवपित्रादी
नामत्रोक्तिस्तर्हितद्वदेवात्रापितेषांतारतम्यंविवक्षितमितिवक्तव्यं नचतद्युक्तं तथात्वेसुवर्णदृष्टांतानानुगुण्यात् । नहिस्वर्णेस्वा
भाविकंतारतम्यंवर्ततइत्याशंकांप्रमाणेनपरिहरति ॥**मयंत्विति**॥ तुशब्दएवार्थः पीतमेवेतिसंबंधः यतोयंनैजोविशेषःअतोऽया

---

भा० । तथैवसुमहत्तेजःकरोतिभगवान्महत् । अतोनवतरंचैतद्ब्रह्मादीनांकरोत्यजः । अन्येषांवाभूतानांमनुष्यादीनांनासुरादीनांभविष्य
तिच । मयंतुमानुषंस्वर्णपीतंगांधर्वमेवच । इंद्रगोपनिभंनाम्नाजांबूनदमितिस्मृतं । दैवंचानीकरंनामप्रोद्यदादित्यसन्निभं । नैजोविशेषःस्वर्णाना
मेतेषांसर्वदैवच । नाग्न्यादिनापिसमतांयांतितानिकथंचन । एवंमानुषगंधर्वपितृदेवाःप्रजापतिः । ब्रह्मेतिक्रमशोजीवाविशिष्टाउत्तरोत्तरं । स्वभा
वेनैवमुक्तानांस्वभावोव्यक्तिमात्रजेदित्यादिच ।


590

दिनापितानिमानुषस्वर्णादीनिसमतांनयांति । अग्न्यादिनेत्यादिपदेनौषधग्रहणं स्वभावेनैवविशिष्टाइतिसंबंधः । किंचपित्र्यंवेत्यादिनोक्ताःपित्रादयोमुक्ताएवेत्यंगीकार्यं एतत्प्रकरणस्यमुक्तपरत्वात् तदेवकुतइतिचेत् एतत्प्रकरणोपक्रमे सयत्रायमणिमानंन्येतिसयत्रायमात्मावल्यंन्येत्येतिभगवत्प्राप्तेरुक्तत्वात् । तस्यहैतस्येतिहृदयाग्रद्योतनलिंगस्योक्तत्वाच्च उक्तार्थेतेनधीराइतितेनैतीतिचयस्यानुवित्तइतिचमुक्तप्रतिपादकमंत्रोदाहरणाच्चेतिभावेनाह ॥ **सयत्रेति** ॥ एतत्प्रकरणस्यमुक्तविषयत्वेनियामकांतरमाह॥ **मुक्तविषयत्वेनेति** ॥ ननुतदोकोग्रज्वलनमितिसूत्रस्यमुक्तविषयत्वेपिसगुणमुक्तविषयत्वमेव ननिर्गुणमुक्तविषयत्वं हृदयाग्रप्रज्वलनप्रकाशितमार्गेणोत्क्रांतस्यअर्चिरादिनातत्प्रथितेरित्यादिनाअर्चिरादिमार्गोक्त्यातत्रतेषांभोगप्रतीतेः । नचनिर्गुणमुक्तौभोगोस्ति तथाचकथमेतत्सूत्रबलादेतत्प्रकरणस्यनिर्गुणमुक्तिपरत्वसिद्धिरितिचेत् । न । स्यादेतत् यदिभोगरहितानिर्गुणमुक्तिर्नामकाचित्स्यात् नचसास्ति तत्रप्रमाणाभावादित्याह ॥ **नचेति** ॥ नकेवलंप्रमाणाभावादन्यामुक्तिर्नास्ति अपितुश्रुतिस्मृतीतिहासपुराणेषुनिर्गुणमुक्तिविषयत्वेनप्रसिद्धेष्वेवस्थलेषुतेषांमुक्तानांमुक्त्यनंतरभोगोक्तेश्चेत्याह ॥ **सोश्नुतइति** ॥ तेषांनिर्णयेमुक्तिविषयत्वेनेतिपाठेतषांश्रुतिस्मृतीतिहासपुराणवाक्यानांनिर्णयेकृतइत्यर्थः। परममुक्तिविषयत्वेनेत्यर्थः। (यद्वातेषांमायावादिनामित्यर्थः)। न

591

---

भा० । सयत्राणिमानंन्येतितस्यहवैतस्यहृदयस्याग्रंप्रद्योततेतेनधीराअपियंतिब्रह्मविदः। स्वर्गलोकमितऊर्ध्वाविमुक्तास्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्चेत्येवमादेश्चमुक्तविषयमेवैतत्। मुक्तविषयत्वेनचैतत्प्रकरणंसूचयामासभगवान्तदोकोग्रज्वलनंतत्प्रकाशितद्वारोविद्यासामर्थ्यादित्यादिना। नचान्यामुक्तिरस्तीत्यत्रकिंचिन्मानं । सोश्नुतेसर्वान्कामान्त्सहब्रह्मणाविपश्चिता । एतमानंदमयमात्मानमुपसंक्रम्येमांल्लोकान्कामान्नीकामरूप्यनुसंचरन् ।

चसोश्नुतइतिवाक्यंगौणमुक्तिविषयं ब्रह्मविदाप्नोतिपरमित्युक्तौकिंतद्ब्रह्मकिंचतद्वेदनंकीदृशीचतत्प्राप्तिरितिशंकात्रयोत्पत्तौआद्य शंकाद्वयेसत्यंज्ञानमितियोवेदेतिचवाक्यद्वयेनपरिहृतेतृतीयशंकापरिहारार्थंह्येतदुच्यते।नचगौणमुक्तौपरब्रह्मप्राप्तिरस्तीतिभावः। नचानंदमयशब्दोनपरब्रह्मपरःकिंतुकोशपरइतिवाच्यं । तथात्वेउपसंक्रम्येतितत्प्राप्तेःफलत्वेनकथनायोगात् । नहिकोशप्राप्तिः फलं नचानंदमयमात्मानमतिक्रम्येत्यर्थोवाच्यः।तथात्वेउपशब्दविरोधात्। त्वःकश्चिद्ब्रह्माऋचांपोषंपोषणंपुपुष्वान्कुर्वन्नास्ते त्वः कश्चिद्ब्रह्माशक्करीषुऋक्षुआरूढंगायत्रंसामगायतीतिमुक्तस्यब्रह्मणःऋक्पोषणकर्तृत्वादिभोगःप्रतीयते अनेकब्रह्मप्रतीतेरिदंपरममु क्तिविषयं । नहिसगुणमुक्तावनेकेब्रह्माणःसंति सएकधेत्यादिनोक्तंबहुरूपत्वमपिभोगएव । विजानतांमुनीनामात्मास्वामीहिर ण्यगर्भोपिपरमात्मानंप्राप्यतादृगेवभवतीतिपरमात्मसाम्यप्राप्तिरूपोभोगउच्यते । परमंसाम्यंस्वरूपानंदाविर्भावरूपं ममसाधर्म्य मागताइत्यस्यपरममुक्तिपरत्वसिध्यर्थंपूर्वोत्तरवाक्योदाहरणं। ननुश्यामावदाताःशतपत्रलोचनाइत्यादिना मुक्तानांशरीरंप्रतीयते

---

भा० । ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्करीषु । परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतिहोवाच । सतत्रपर्ये तिजक्षन्क्रीडन्रममाणः। सयएवंविद्वेवंपश्यन्नेवंमन्वानस्तस्यसर्वेषुलोकेषुकामचारोभवति । सएकधाभवतित्रिधाभवतिपंचधासप्तधापुनश्चैकादश स्मृतः । नहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते । यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति। एवंमुनेर्विजानतआत्माभवतिगौ तम । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति । परंभूयःप्रवक्ष्यामिज्ञानानांज्ञानमुत्तमं । यज्ज्ञात्वामुनयःसर्वेपरांसिद्धिमितोगताः । इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः । सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच । नवर्ततेयत्ररजस्तमस्तयोःसत्वंचमिश्रंनचकालविक्रमः ।

सतत्रपर्येतीत्यादिनाक्रियाच तच्चाशरीरंवावसंतमित्यादिप्रमाणविरुद्धमित्यतस्तयोर्विरोधंपरिहरति ॥ **अशरीरेति** ॥ तेत्रिमोक्षिणः सत्वादिगुणनयदेहादेरभावतअशरीरक्रियाउच्यंते चिदानंदशरीरादेःसदेहाद्या उच्यंतइत्यर्थः । किमेवंप्रमाणद्वयव्यवस्थाकल्पनया सर्वथादेहाद्यभावएवार्थःकिंनस्यात्इतिचेन्न । इंद्रियादिशून्यानामपिभोगोक्तेस्तदन्यथानुपपत्त्योक्तव्यवस्थायाअंगीकार्यत्वादिति भावेनाह ॥ **अनिंद्रियाइति** ॥ ४ ॥ विज्ञानमयोमनोमयइत्यादौमयटोविकारार्थत्वप्रतीतिनिरासायार्थद्वयमाह ॥ **मयडिति** ॥ सवाअयमात्मेत्यादिकंजीवपरमितिपरकीयव्याख्याननिरासायतावत्पदचतुष्टयंप्रमाणेनव्याचष्टे ॥ **आत्मेति** ॥ विज्ञानमयइत्यादिशब्दपंचकंव्याचष्टे ॥ **पूर्णेत्यादिना** ॥ मयटःप्राचुर्यार्थत्वमभिप्रेत्यपूर्णेत्युक्तं स्वरूपार्थत्वमभिप्रेत्यस्वरूपत्वादियुक्तं । एवमुत्तरत्रापि । सर्वंमनुतइतिसर्वमंतातत्स्वरूपत्वादित्यर्थः । एवंसर्वद्रष्टृस्वरूपत्वादित्यादिकंव्याख्येयं । पृथिवीमयइत्यादिशब्द 593

---

भा० । नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः । श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेशसइत्यादिश्रुतिस्मृतीतिहासपुराणेष्वेषांनिर्गुणमुक्तिविषयत्वेनप्रसिद्धेष्वेवस्थलेषुमुक्त्यनंतरंभोगोक्तेश्च । अशरीरक्रियागौणदेहादेस्तेष्वभावतः । चिदानंदशरीरादेःसदेहाद्याविलक्षणः । अनिंद्रियाअनाहाराअनिष्यंदाःसुगंधिनःइत्यादेश्च ॥ ४ ॥ मयट्प्राचुर्ये स्वरूपेच । आत्मायमाततत्वाद्धित्रह्मपूर्णगुणत्वतः । दूरस्थत्वात्सइत्युक्तःसमीपस्थोह्ययंस्मृतः । पूर्णज्ञानस्वरूपत्वाद्विज्ञानमयईर्यते । सर्वमंतृस्वरूपत्वात्सएवोक्तोमनोमयः । वलपूर्णस्वरूपत्वात्सप्राणमयईरितः । सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मयइतीर्यते । सर्वश्रोतृस्वरूपत्वात्सश्रोत्रमयईरितः ।

पंचकस्यार्थमाह ॥सर्वाधारादिति ॥ पृथिवीवद्धारकत्वाद्गंधवत्त्वाच्चपृथिवीत्युच्यते । मयटःप्राचुर्यार्थत्वेनसर्वाधारत्वात्सुगंधत्वाच्चपृथिवीमयइत्युच्यतइत्यर्थः । एवमपतृप्तिकरत्वादापइत्युच्यते सर्वतृप्तिकरत्वादापोमयःस्मृतइत्यादिव्याख्येयं । अवकाशप्रदातृत्वादाकाशईर्यते सर्वेषामवकाशप्रदातृत्वात्स्वातंत्र्येणावकाशप्रदातृत्वाद्वाआकाशमयइत्यर्थः । पूर्णतेजःस्वरूपत्वादित्यनेनमयटोर्थद्वयमुक्तं । काममयःक्रोधमयोधर्ममयइतिपदत्रयंव्याचष्टे ॥ सृष्ट्यादीति ॥ अतेजोमयअकाममयःअक्रोधमयःअधर्ममयइतिशब्दचतुष्टयस्यविरोधपरिहारायार्थमाह ॥ अप्राकृतेति ॥ प्राकृततेजःस्वरूपत्वाद्यभावादेवातेजोमयइत्याद्युक्तइत्यर्थः । यद्वाअतेजोमयइत्यादिवदविज्ञानमयइत्याद्यपिग्राह्यमितिभावेनतस्यार्थमाह ॥ अप्राकृतेति ॥ प्राकृतविज्ञानादिस्वरूपत्वाभावादेवाविज्ञानमयइत्याद्युक्तइत्यर्थः । अविज्ञानमयइत्यादीनामतेजोमयइत्यंतानांशब्दानामर्थांतरंक्रमाविवक्षयाऽऽह ॥ अपार्थिवइत्यादिना ॥ हरेर्गंधोपार्थिवोयतोतोपृथिवीमयइत्युच्यतइत्यादिव्याख्येयं । अस्यश्रोत्राद्याःश्रोत्रचक्षुःघ्राणाःश्रोत्राद्याः प्रसिद्धश्रोत्रादितत्वात्मकाःनभवंति । अस्याकाशआकाशतत्वात्मकोनभवतीतियोज्यं । अविज्ञानमयअमनोमय

---

भा० । सर्वाधारात्सुगंधत्वात्पृथिवीमयउच्यते । सर्वतृप्तिकरत्वाच्चविष्णुरापोमयःस्मृतः । सर्वकर्तृस्वरूपत्वाच्छ्रुतोवायुमयोहरिः । अवकाशप्रदातृत्वादाकाशमयईर्यते । पूर्णतेजःस्वरूपत्वात्तेजोमयउदाहृतः । सृष्ट्यादीच्छास्वरूपत्वात्स्मृतःकाममयोहरिः । सर्वदुष्टप्रतीपत्वात्सहिक्रोधमयोमतः । सुखादिधर्मरूपत्वाज्ज्ञेयोधर्ममयःप्रभुः । अप्राकृतस्वरूपत्वादनेतन्मयएवच । अपार्थिवोहरेर्गंधोनतृप्तिश्चाप्यवात्मिका ।

इत्येतदपिमनःप्रभेदांतरराहित्योपलक्षकमितिभावेनाह ॥ नाहमिति ॥ सर्वात्मकत्वप्रतीतिनिरासायसर्वमयइत्येतद्व्याचष्टे ॥ ॥ प्रकृत्यादीति ॥ प्रकृत्यादीनांरमादीनांगुणाआनंदाद्याःपरमात्मगुणप्रतिबिंबभूताःयस्मादतोविष्णुःसर्वमयःसर्वप्रधानः सर्वे गुणस्वरूपश्चेत्यर्थः । सर्वात्मकत्वमेवार्थःकिंनस्यादित्यतआह ॥ सर्वाद्यत्वादिति ॥ प्रकृत्यादिसर्वोपजीव्यत्वात्प्रकृत्यादि सर्वात्मकोनभवतीत्यर्थः । अविज्ञानमयइत्यादिवदसर्वमयइत्यपिग्राह्यमितिभावेनतथोक्तौवाहेतुमाह ॥ सर्वाद्यत्वादिति ॥ असर्वमयइत्युक्तौहेत्वंतरमाह ॥ चिदानंदेति ॥ तस्यगुणाःसर्वदाचिदानंदात्मकाः नकेवलमेतावत् किंतुसर्वगुणात्मकाश्च य तोतएषांभगवद्गुणानांसर्ववैलक्षण्यमसर्वमयइत्यनेनप्रकीर्तितमित्यर्थः । ननुभगवतःक्रोधरूपगुणःप्रज्वलनात्मकोचिदानंदात्मक श्चांगीकार्यः तथाचकथमेवमुक्तमित्यतआह ॥ क्रोधइति ॥ कुतइत्यतआह ॥ अन्येति ॥ जीवक्रोधसदृशइत्यर्थः । एवंक्रोध स्येतरवैलक्षण्यमुपपाद्येतरेषामपिगुणानांतदुपपादयति ॥ एवमिति ॥ सर्वेभ्योऽन्यगुणेभ्यः । नन्वस्त्वेवंसवाअयमात्मेत्यादे र्व्याख्यानं तथाप्यसंगतमेतत्कथमुच्यतइत्याशंकांपरिहरति ॥ पूर्वेति ॥ तमुक्तमाहात्म्यविशिष्टं तथाचसयत्रायमात्मावल्य

भा० । नाग्नेयंतस्यतेजोपिनचवायुर्बलंहरेः । श्रोत्राद्यानास्यचाकाशोमनस्तत्वंनतन्मनः । बुद्धितत्वंनतद्बुद्धिर्नाहमस्याहमच्युते । महदा त्मकंनतच्चित्तंप्रकृतिर्नास्यचेतना । प्रकृत्यादिगुणायस्मात्तद्गुणप्रतिबिंबकाः । अतःसर्वमयोविष्णुःसर्वाद्यत्वादतन्मयः । चिदानंदात्मकास्तस्यगुणाः सर्वगुणात्मकाः । सर्वदातःसर्ववैलक्षण्यमेषांप्रकीर्तितं । क्रोधःक्षमात्मकोयस्यचिदानंदात्मकस्तथा । अन्यक्रोधसमःक्रोधस्तस्यविष्णोःकथंभवेत् । एवंसर्वगुणास्तस्यसर्वेभ्योपिविलक्षणाः । पूर्वप्रज्ञानुसारेणविमुक्तस्तमुपेष्यति ।

सित्यादिनामुक्तप्राप्यत्वेनप्रकृतपरमात्ममाहात्म्यप्रतिपादकत्वान्नासंगतिरितिभावः । पूर्वप्रज्ञानामकेत्यतआह ॥ अनादीति ॥ विष्णुसंश्रयाविष्णुविषयिका/ इदंमयअदोमयइतिशब्दयोरर्थावाह ॥ वर्तमानमिति ॥ इदंमयादोमयशब्दाभ्यांकथमुक्तार्थला भइत्यतस्तदुपपादयंस्तस्यैवशब्दद्वयस्यार्थांतरमाह ॥ प्राधान्येचेति ॥ यतःप्राधान्येमयट्प्रोक्तोभवेत् ततअस्यवर्तमानस्यजगतः प्रधानोहरिरिदंमयशब्देनोच्यते तस्यातीतानागतस्यजगतःप्रधानोहरिरदोमयशब्देनोच्यते । हरेरस्यतस्यप्राधान्येहेतुमाह ॥ नित्येति ॥ तथाचवर्तमानस्यातीतानागतस्यचजगतोविष्णुवशत्वंलभ्यतइतिभावः । यतःस्वरूपेमयट्प्रोक्तोभवेत् ततइदंरूपोवर्तमानकालावच्छिन्नोहरिरिदंमयशब्देनोच्यत । अदोरूपअतीतानागतकालावच्छिन्नोहरिरदोमयशब्देनोच्यते । वर्तमानातीतानागतरूपत्वेहेतुमाह ॥ नित्यत्वतइति ॥ अनादिनित्यत्वतइत्यर्थः । तत्यत्एतत्इतिपदत्रयस्यप्रसिद्धार्थत्वप्रतीतिनिरासायार्थांतरंप्रमाणेनाह ॥ यथेति ॥ अतीतवर्तमानकालयोरेकप्रकारत्वंतच्छब्दार्थः । ब्रह्मांडात् शरीराद्वाबहिरंतश्चैकप्रकारत्वंयच्छब्दार्थः । वर्तमानभविष्यत्कालयोरेकप्रकारत्वमेतच्छब्दार्थइत्यर्थः । यथाकारीत्यादिकंजीवपरमितिप्रतीतिनिरासायतावत्तस्य

---

भा० । अनादिकालसंबंधायाप्रज्ञाविष्णुसंश्रया । पूर्वप्रज्ञेतिसाप्रोक्ताब्रह्मादेस्तारतम्यतइतिचमहामीमांसायां । वर्तमानंयतोविष्णोर्वशेतस्मादिदंमयः । अतीतानागतंयस्मात्तद्वशेतोह्यदोमयः । प्राधान्येचमयट्प्रोक्तःस्वरूपेचयतोभवेत् । इदंरूपोप्यदोरूपस्ततोनित्यत्वतोहरिः । अस्यतस्यप्रधानश्चनित्यपूर्णबलत्वतइतिच । यथापूर्वंतथेदानीमितिविष्णुस्तदुच्यते । यथाबाह्येतथैवांतेततोयदितिचोच्यते । यथेदानींतथानित्यंयस्मादेषभविष्यति । अतएतदितिप्रोक्तोवासुदेवोजगत्पतिः ।

थाकारीयथाचारी तथाभवतीतिवाक्यंव्याचष्टे ॥ सइति ॥ साधुकारीसाधुर्भवतिपापकारीपापोभवतीतिवाक्यंव्याचष्टे ॥ साधुरिति ॥ पुण्यःपुण्येनकर्मणाभवतिपापःपापेनेतिवाक्यंपुण्यादेःस्वातंत्र्यनिरासायव्याचष्टे ॥ तत्प्रेरितेनेति ॥ अथोखल्वाहुः काममयएवायंपुरुषइतिवाक्यंव्याचष्टे ॥ आहुश्चेति ॥ काममयःकामप्रधानकःयोग्यतयाहरेरित्यस्यलाभःत(त्र)स्यलब्धार्थमाह ॥ तत्कामाधीनमिति ॥ सयथाकामोभवतितत्क्रतुर्भवतीतिवाक्यंव्याचष्टे ॥ यथाकामइति ॥ तथाभवेत्तथाकामो भवेत् । नन्वेवंपरमात्मायदिजगत्सृष्ट्यादिकामस्तदाऽयमपितत्कामःस्यात्किमित्यतस्तदभिप्रायमाह ॥ तत्कामादस्यकामःस्यादिति ॥ प्रकारांतरेणापिसयथाकामोभवतितत्क्रतुर्भवतीतिवाक्यंव्याचष्टे ॥ कामानुसारिणीनिष्टेति ॥ भगवत्कामानुसारिणीत्यर्थः । यत्क्रतुर्भवतितत्कर्मकुरुतइत्यस्यार्थमाह ॥ कर्मनिष्टानुसारतइति ॥ यत्कर्मकुरुतेतदभिसंपद्यतइत्येतद्व्याचष्टे ॥ फलंकर्मानुसारेणेति ॥ सयथाकामइत्यादिकंप्रकृतासंगतंकिमर्थमुच्यतइत्यतोजीवस्यविष्णुकाममयत्वोपपादकंतदितिनासंगतमित्याह ॥ विष्णोरिति ॥ हियस्मात्तत्कामादस्यकामःस्यात् यस्माच्चतत्कामानुसारिणीनिष्ठा निष्ठानुसारतःकर्म कर्मानुसारतःफलं ततोऽयंजीवःविष्णोःकाममयइतिसंबंधः । अस्त्वेवंसवाअयमात्मेत्यादिकमीश्वरपरं बाधकाभावाज्जीवपरमपिकिंनस्यात् । नचत्र 

भा० । सयथाकरोतिपुरुषंतथैवायंभविष्यति । साधुर्भवतिसाधुंचेत्करोतिपुरुषोत्तमः । पापोभवतिपापंचेत्सकरोतिजनार्दनः । तत्प्रेरितेनपुण्येनपुण्योभवतिमानवः । तत्प्रेरितेनपापेनतथापापःपुमान्भवेत् । आहुश्चतत्कामाधीनंजीवमेनंसदैवहि । तत्कामादस्यकामःस्याद्यथाकामस्तथाभवेत् । कामानुसारिणीनिष्टाकर्मनिष्टानुसारतः । फलंकर्मानुसारेणविष्णोःकाममयस्ततः ।

ह्मेतिविशेषणाच्चेतिबाधकमप्युक्तमितिवाच्यं । जीवस्यब्रह्माभिन्नत्वाभिप्रायेणतद्विशेषणसंभवादितिचेन्न । स्यादेतदेवं यदिजीवेश्वराभेदएवभवेत् नचैतदस्ति तदंगीकारेप्रमाणविरोधापत्तेरितिभावेनतावत्सूत्रविरोधमाह ॥ जीवेति ॥ सुषुप्त्युत्क्रांत्योः प्रकरणयोःजीवस्यपरमात्मनोभेदेनव्यपदेशान्नजीवस्येश्वराभेदइत्यर्थः । सूत्रोपात्तश्रुतिविरोधंचदर्शयति ॥ प्राज्ञेनेति ॥ ननुश्रुतिसूत्रयोर्जीवेश्वरभेदोक्तावपिनतयोरभेदांगीकारेतद्विरोधः । श्रुतिसूत्रयोर्मिथ्याभूतभेदपरत्वेनपारमार्थिकाभेदाविरोधित्वादितिचेत् न । सुषुप्त्युत्क्रांतिप्रकरणयोःमोक्षपरतायाःप्रागुपपादितत्वात् । मोक्षेचविद्यमानस्यभेदस्यमिथ्यात्वंनामपरिभाषामात्रं । किंचजीवेश्वरभेदस्यमिथ्यात्वेसभेदःकिंव्यावहारिकःप्रातिभासिकोवाभवेत् । नतावदाद्यः जीवेश्वरभेदस्यव्यावहारिकत्वेप्रमाणाभावात् । नतावत्तत्रप्रत्यक्षंमानं ईश्वरस्याप्रत्यक्षत्वात् । प्रत्यक्षस्यभेदव्यावहारिकत्वागोचरत्वाच्च । अनुमानंतुस्यात् यदिकोपिभेदोव्यावहारिकोभवेत् । तत्सत्वेतदृष्टांतेनास्यापिभेदस्यव्यावहारिकत्वानुमानसंभवात् । नचतदस्ति तत्रप्रमाणाभावादित्याह ॥ नचेति ॥ यद्वा प्रमाणाभावेनभेदमात्रस्यैवव्यावहारिकत्वाभावेजीवेशभेदव्यावहारिकत्वस्यसुतरामयुक्तत्वादित्याह ॥ नचेति ॥ द्वितीयंदूषयति ॥ भ्रांतिभेदत्वइति ॥ भ्रांतिसिद्धभेदत्वेप्रातिभासिकत्वेइतियावत् । यद्वामास्तुव्यावहारिकोभेदःकश्चिदस्तीत्यत्रकिंचित्प्रमाणं तथापिभ्रांतिसिद्धश्चंद्रभेदोस्त्येव । तथाचतदृष्टांतेनजीवेशभेदस्यापिभ्रांतिसिद्धत्वसि

भा० । जीवोयंसर्वदैवस्यान्नान्यथातुकथंचनेत्यादिचजीवेश्वराभेदांगीकारेसुषुप्त्युत्क्रांत्योर्भेदेनेतिसूत्रविरोधः । प्राज्ञेनात्मनान्वारूढःप्राज्ञेनात्मनासंपरिष्वक्तइत्यादिश्रुतिविरोधश्च । नचव्यावहारिकभेदोनामकश्चिदस्तीत्यत्रकिंचिन्मानं । भ्रांतिभेदत्वेश्रुतिसिद्धत्वमेवनस्यात् ।

598



I

द्धेः तत्परत्वं श्रुतिसूत्रयोः स्यादित्यत आह ॥ भ्रांतिभेदत्व इति ॥ ननु जीवेशभेदस्य भ्रांतिसिद्धत्वे श्रुतिसिद्धत्वं कुतो न स्यात् न भ्रांतिसिद्धश्चंद्रभेदो यज्ञदत्तादिवाक्यसिद्धो न भवतीति चेत् न । स्यादेव भ्रांतिसिद्धस्यापि चंद्रभेदस्य यज्ञदत्तादिवाक्यसिद्धत्वं तस्य दुष्टत्वेनाप्रमाणत्वात् । श्रुतेश्च निर्दोषवाक्यत्वेन प्रमाणत्वात् । तत्सिद्धभेदस्य भ्रांतिसिद्धत्वायोगादित्यत आह ॥ नहीति ॥ भ्रांतं भ्रांतिविषयः । ननु श्रुतिवाक्यसिद्धस्यापि जीवेश्वरभेदस्य भ्रांतिसिद्धत्वमस्तु को दोष इति चेत् । तथा सति तत्सिद्धस्य जीवब्रह्माभेदादेरपि भ्रांतिसिद्धत्वं स्यात् अविशेषात् । अस्तु तदपीति चेत्तत्राह ॥ उन्मत्तवाक्यवदिति ॥ वाक्यस्य भ्रमसिद्धार्थप्रतिपादकत्वेप्यप्रामाण्यं कुतः दृष्टांते कारणांतरसंभवादिति चेन्न । यावता तदेव वाक्यस्याप्रामाण्यं यत्स्वविषयस्य भ्रमसिद्धत्वमेव । न च तदतिरिक्तमप्रामाण्यं नामास्ति येन दृष्टांते कारणांतरसंभव इत्याह ॥ नचेति ॥ ननु जीवेशभेदस्य भ्रमसिद्धत्वेपि तत्प्रतिपादकवाक्यस्याप्रामाण्यं युक्तं अभेदबोधकागमवत्तत्त्वावेदकत्वलक्षणप्रामाण्याभावेपि जीवब्रह्मभेदस्यानिर्वाच्यत्वेन तत्प्रतिपादकवाक्यस्याऽतत्वावेदकप्रमाणत्वोपपत्तेरिति चेन्न । तथा सति त्वन्मते उन्मत्तवाक्यप्रतिपाद्यार्थस्यापि अनिर्वाच्यत्वेन तस्याप्यतत्वावेदकप्रमाणत्वापत्तेरित्याह ॥ तन्मत इति ॥ ननून्मत्तवाक्यं प्रातिभासिकार्थप्रतिपादकमित्यप्रमाणं श्रुत्यादिकं तु व्यावहारिकभेदप्रतिपादकमिति प्रमाणं स्यादिति चेन्न । व्यावहारिकभेदे मानाभावेन श्रुत्यादेस्तत्परत्वायोग इत्युक्तत्वात् । जीवेशभे

---

भा० । नहि निर्दोषश्रुतिवाक्यसिद्धं भ्रांतमिति युक्तं । उन्मत्तवाक्यवत्सर्ववेदस्याप्रामाण्यप्रसक्तेः । नच स्वविषयभ्रमत्वादन्यदप्रामाण्यं नास्ति किंचित् । तन्मते ह्युन्मत्तवाक्यविषयस्याप्यनिर्वाच्यत्वमेव ।

600

S

दस्यापिभ्रांतिसिद्धत्वांगीकारेप्रातिभासिकत्वस्याप्यापाताच्च । प्रातिभासिकत्वेभ्रांतिसिद्धत्वस्यैवप्रयोजकत्वात् । ब्रह्मज्ञानान्यबाध्यभ्रमसिद्धत्वादेःगौरवकरत्वेनाप्रयोजकत्वात् । अन्यथाप्रवृत्तिमात्रेसंसर्गज्ञानंनकारणं किंतुप्रवृत्तिविशेषंप्रत्येव । वह्निमात्रेधूममात्रंनप्रयोजकं किंतुधूमविशेषएवेत्यपिस्यादिति । किंचनकेवलंप्रमाणाभावाच्छ्रुत्यादेर्नापरमार्थिकभेदपरत्वं किंतुजीवेश्वरौभिन्नौविरुद्धधर्माधिकरणत्वाद्घटपटवदितिअनुमानविरुद्धत्वाच्च । नचासिद्धिः श्रुत्यादिषुभगवतःस्वातंत्र्यादेर्जीवस्यतदनुजीवनादेश्चश्रवणात् । नन्वस्त्वेवंजीवेश्वरभेदसाधनं नैतदस्माकंविरोधि। अस्माभिरपिअसत्यस्यजीवेश्वरभेदस्याप्युपगमात् । नचविरुद्धधर्माधिकरणत्वानुपपत्तिः । तस्याप्यसत्यत्वाभ्युपगमादित्यतआह ॥ सत्यइति ॥ सपूर्वोक्तः अस्यमहिमासत्यः विप्रप्रधानकेषुयज्ञेषुशवः सुखमुद्दिश्यतंगृणेइत्यर्थः । गृणतोमघोनोदेवस्य रातिमिष्टं एनंपरमात्मानं विश्वेजीवाः अनुमदंतिअनुजीवंतीत्येतत्सत्यमित्यर्थः । अस्त्वेवंविरुद्धधर्माधिकरणत्वस्यसत्यत्वं किंततइत्यतआह ॥ तदेति ॥ किंच नजीवेश्वरभेदोसत्यः अस्तीतिविधिप्रत्ययसिद्धत्वात् संसारमोचनाद्यर्थक्रियासमर्थत्वाच्च । नचप्रत्ययसिद्धत्वमेवहेतुरस्त्वितिवाच्यं । शुक्तिकामेवायं रजतत्वेनजानातीत्यनुवादरूपप्रतीतिविषयशुक्तिरूप्यादौव्यभिचारापत्तेः । नचैवमपिव्यभिचारः । सर्वविधिप्रत्ययसिद्धस्यहेतुत्वात् नचसर्वेषामेकस्मिन्नर्थेभ्रांतिरस्ति नचासिद्धिः श्रुत्यादिनासार्वज्ञ्यादिगुणंपरमात्मानंप्रत्यक्षेणतद्विरुद्धमात्मानंचपश्यतः तद्भिन्नोऽहमितिप्रतीतेः सर्वानुभवसिद्ध

भा० । सत्यःसोअस्यमहिमागृणेशवः । तएतेसत्याःकामाइत्यादिश्रुतिभिर्भगवद्गुणानांसत्यत्वमेवज्ञायते । सत्यमेनमनुविश्वेमदंतिरातिं देवस्यगृणतोमघोनइतिसर्वजीवानांभगवदनुजीवनंचसत्यमित्येवोच्यते । तदाकथंजीवेशभेदस्यासत्यता ।

२-५

त्वात् यथोक्तं । अज्ञताचाल्पशक्तित्वमित्यादि । नन्वस्तुसर्वविधिप्रत्ययसिद्धत्वमर्थक्रियासमर्थत्वंवा मास्त्वसत्यत्वाभावइत्यतआह ॥नचेति॥सर्वविधिसिद्धस्यार्थक्रियाकारित्वेनसिद्धस्येत्यर्थः॥स्यादेवं यदिसर्वविधिप्रत्ययसिद्धस्यार्थक्रियासमर्थस्यापिकुत्रचिद्बाधः स्यात्। नचासौदृष्टः। तेनासत्यत्वाभावेसर्वविधिप्रत्ययसिद्धत्वादिकमेवप्रयोजकमितिभावः। ननुभयकंपाद्यर्थक्रियाकारिणःरज्जुसर्पादेःस्वप्नार्थस्यचबाधोदृष्टएवेतिचेन्न। रज्जुसर्पादिज्ञानस्यैवभयकंपादिजनकत्वात्।तस्यचाबाध्यत्वात्। स्वप्नार्थस्यसृष्टयुक्त्यातत्सत्यत्वस्योक्तत्वादिति। इतोपिनजीवेश्वरभेदस्यासत्यत्वमित्याह॥ नह्यस्येति॥ नन्वत्रमुक्तिवाचकपदाभावात्संसारएवात्माधीनत्वं जीवस्योच्यतइतिकिंनस्यादित्यतआह॥ नहीति॥ नन्वक्षीणकर्मत्वंनामाक्षीणकर्मफलत्वमेव। तच्चसंसारावस्थायामप्यस्त्येव सर्वात्मनाकर्मफलस्याक्षीणत्वाभावेपिबहुकालानुवृत्तत्वाभिप्रायेणतदुक्त्युपपत्तेरित्यतआह॥नचेति॥ असतिबाधकइतिशेषः। एवमुपपादितंजीवेशभेदासत्यत्वाभावमुपसंहरति ॥ अतइति॥ ननुसभगवान्यथाकरीयथाचारीयादृशंकर्मयादृशमाचारंचकरोतितथाभवतीत्यर्थप्रतीतेः सयथाकरोतिपुरुषमितिकथंव्याख्यानमित्यतआह ॥ सइति ॥ जीवमितिशेषः । तथाभवति जीवइतिशेषः । नचकर्माचारयोर्भेदाभावः। आचारइतिसंप्रोक्तःकर्मांगत्वेनशुद्धिदइत्युक्तेः । सयथाकामोभवतितत्क्रतुर्भवतीतिवाक्यंयथा

601

वृ० भा० ५१ भा० । नचसर्वविध्यर्थक्रियासिद्धस्यकुत्रचिद्बाधोदृष्टः । नह्यस्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइतिमुक्त्यनंतरमपितदधीनत्वप्रतीतेश्चनभेदस्यासत्यता । नहिसंसारावस्थायामक्षीणकर्मताभवति । नचमुख्यार्थंपरित्यज्यामुख्योयुक्तः । अतःसत्यएवभेदः ।

कामस्तथाभवेदितिप्रमाणेनव्याख्यातमप्यस्फुटीभूतत्वात्जीवोयथाकामोभवतीतिप्रतीतिनिरासायव्याचष्टे ॥ सभगवानिति ॥ तत्क्रतुरित्यस्यार्थस्तथाकामइति । ननुभगवतोजगत्सृष्ट्यादिकामत्वेजीवस्यतत्का(मत्वा)माभावात्कथमेतदित्यतःतत्कामाद स्यकामःस्यादितिप्रमाणोक्तंतात्पर्यंविवृणोति ॥ इत्थमिति ॥ क्रतुशब्दस्यज्ञानवाचकत्वात्तत्क्रतुरित्यस्यतथाकामइतिकथंव्या ख्यानमित्यतआह ॥ क्रतुरिति ॥ अथवाकामानुसारिणीनिष्ठेतिक्रतुशब्दोनिष्ठापरतयाव्याख्यातः तत्रनिष्ठाक्रतुशब्दयो रेकार्थत्वसिध्यर्थंक्रतुशब्दार्थमाह ॥ इत्थमिति ॥ अस्त्वेवंक्रतुः निश्चयरूपःकामः सभगवदिच्छयाभवतीत्यत्रकिंमानमित्यत आह ॥ सइति ॥ हीतिदैववशेनअस्येत्थमिच्छाजातेतिलोकप्रसिद्धिंप्रमाणयति । श्रुतिंचाह ॥ कामेनेति ॥ यद्वा हिशब्द सूचितांश्रुतिमाह ॥ कामेनेति ॥ मृत्योःकामेनमेकामआगादित्यर्थः ॥ ५ ॥ अथाकामयमानइत्यादिकममुक्तपरमिति प्रतीतिनिरासायाकामयमानाकामनिष्कामशब्दानांपुनरुक्तिंपरिहरन्प्रमाणेनमुक्तपरतयाव्याचष्टे ॥ अयोग्येति ॥ तथाशब्द

भा० । सभगवान्यथाकारीयथाकारयतियथाचारीयथाचारयतितथाभवति । सभगवान्यथाकामोभवतितथाकामोजीवोभवति । इत्थं कामोस्यभूयादितिभगवदिच्छावशादस्यकामोभवतीत्यर्थः । क्रतुरितीत्थंकरिष्याम्येवेतिनिश्चयरूपःकामः । सभगवदिच्छयाहिभवति । कामेनमे कामआगादितिचश्रुतिः ॥ ५ ॥ अयोग्यकामराहित्यान्मुक्तोनिष्कामइच्यते । अइत्युक्तःपरोविष्णुस्तत्कामोऽकानईरितः । तथाऽकामयमानःस योग्यकामस्यचापितु । कादाचित्कसमुद्भूतेर्भगवत्कामनांविना ।

उपसार्थः । अकामयमानश्चेतिचशब्दान्वयः । राहित्यादित्यनुवर्तते । मुक्तस्यायोग्यकामोनास्त्येव । योग्यकामस्यापिसर्वस्यसर्वदानसमुद्भूतिः । किंतुकस्यचित्कदाचिदेव । तथाचयोग्यकामस्यापिकादाचित्कसमुद्भूतेरपिभगवत्कामनांविनाराहित्यात्सोकामयमानइतीरितइत्यर्थः । आप्तकामात्मकामशब्दार्थावाह ॥ कामितस्येति ॥ कामत्वेनकाम्यत्वेन । ननुतमुत्क्रामंतंप्राणोनूत्क्रामतीत्यादिनाप्राणानामुत्क्रांत्युक्तेःनतस्यप्राणाउत्क्रामंतीतिकथमित्यतआह ॥ मुक्तस्येति ॥ जीवोब्रह्मैवसन्ब्रह्माप्येतीतिजीवस्यब्रह्मात्मकत्वमुच्यतइतिपरव्याख्याननिरासायप्रथमब्रह्मशब्दार्थंप्रमाणेनाह ॥ जीवोपीति ॥ तथाचब्रह्मैवसन्नित्यस्यजीवएवसन्जीवभावमविहायैवेत्यर्थः । द्वितीयब्रह्मशब्दस्यापिजीवपरत्वशंकानिरासायेदानींतद्वाक्यंव्याचष्टे ॥ प्राप्नोतीति ॥ नन्वकामयमानत्वादिविशिष्टोमुक्तःपूर्वमेवपरब्रह्मप्राप्तः अकामयमानत्वादेःतत्प्राप्त्युत्तरकालीनत्वात् तथाचमुक्तोब्रह्मैवसन्ब्रह्माप्येतीतिकथमुच्यतइत्युक्तं ॥ प्रलयेप्रलयइति ॥ तर्ह्यन्यदापिब्रह्मप्राप्तेःसद्भावात्किंविशिष्योच्यतेप्रलयइतितत्राह ॥ अन्यदेति ॥ प्रलयेतुनविष्णोःस्वरूपाद्बहिरप्येतीतिविशेषइत्यर्थः । प्रलयेअन्यदावाविष्णोरंतर्बहिर्वास्थितस्यमुक्तस्यकिंदुःखादिकंभवतिनेत्याह ॥ स्वेच्छयेति ॥ रमतएवेत्यन्वयः । यद्वाब्रह्मसमश्नुतइत्युत्तरमंत्रानुसारेणब्रह्माप्येतीत्येतद्भोगार्थत्वेनव्याचष्टे ॥ स्वेच्छये

---

भा० । कामितस्याखिलस्याप्तेराप्तकामश्चमुक्तिगः । चिदानंदात्मकंरूपंकामत्वेनभविष्यति । यतस्तेनैवात्मकामइतिमुक्तोभिधीयते । मुक्तस्यनपुनःप्राणाउत्क्रामंतिकदाचन । जीवोपिब्रह्मशब्दोक्तोजडाद्गुणबृहत्त्वतः । प्राप्नोतिपरमंब्रह्मप्रलयेप्रलयेसदा । अन्यदास्वेच्छयाविष्णोःस्वरूपाद्बहिरेष्यति । स्वेच्छयांतर्बहिश्चैवंरमतेमुक्तआत्मवानित्यादिच ।

ति ॥ स्वेच्छयेत्युक्त्याप्राप्तांमुक्तस्यस्वातंत्र्यशंकांपराचष्टे । आत्मवान्भगवत्स्वामिकइति । अथाकामयमानइत्यादिकंमुक्तपरतया
प्रमाणेनव्याख्यायअमुक्तपरतयाव्याख्यानेबाधकमाह ॥ नचेति ॥ अमुक्तस्यउक्तनिष्कामत्वाकामत्वाकामयमानत्वानांकथंचि
ज्जीवन्मुक्तविवक्षयासंभवेपिआप्तकामतानकथंचित्संभवति । प्रायःकामितस्याप्तेराप्तकामतापिसंभवतीतिचेत् आप्ताखिलकामत्व
स्यैवाप्तकामशब्दमुख्यार्थत्वात् । मुख्येचसत्यमुख्यग्रहणायोगात् । मुख्यतःआप्तकामताचामुक्तस्यकथमपिनसंभवतीत्यर्थः । यदुक्तं
जीवोपिब्रह्मशब्दोक्तइतिपूर्वंब्रह्मशब्दोजीववाचीति । तदयुक्तं । ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वादित्यतआह ॥ ब्रह्मेति ॥ परब्रह्मणिमु
ख्योप्ययंब्रह्मशब्दःजीववाच्येवेत्यंगीकर्तव्यं परब्रह्मार्थत्वांगीकारेश्रुतब्रह्मप्राप्तिविरोधात् । नहिस्वयंब्रह्मभूतस्यतत्प्राप्तिर्नामास्ति
प्राप्तप्राप्ययोर्भेदनियमात् । मुख्यार्थविरोधेचामुख्यार्थग्रहणस्यन्याय्यत्वादितिभावः । ननुपूर्वंब्रह्मशब्दस्यपरब्रह्मार्थकत्वेनजीवस्य
परब्रह्मत्वांगीकारेपिनतत्प्राप्तिकथनंविरुद्धं ब्रह्मैवहिस्वाविद्ययासंसरतिस्वविद्ययाचमुच्यतइत्यंगीक्रियते तथाचपूर्वमज्ञातपरब्रह्म
त्वोपिजीवोऽज्ञाननाशेस्वस्यविद्यमानमेवपरब्रह्मत्वंजानातीत्यभिप्रायेणप्राप्तिकथनोपपत्तेः । यथाकश्चित्किलराजपुत्रोव्याधगृहेसंव
र्धितः पूर्वमात्मानंराजपुत्रत्वेनाजानन्पश्चाज्जानन्राजपुत्रत्वंप्राप्तइत्युच्यते यथावापूर्वंस्वसमीपेस्थितोविस्मृतःकंठमणिःपश्चाद्विज्ञा
तःप्राप्तइत्युच्यतइत्याशंक्याह ॥ यद्यज्ञानेति ॥ दृष्टांतद्वयेपितथालौकिकव्यवहाराभावंदर्शयति ॥ नहीति ॥ आत्मानंराजपुत्रत्वेना

भा० । नचामुक्तस्यकथंचिदाप्तकामतामुख्यतः । ब्रह्माप्येतीतिवचनात्पूर्वंब्रह्मशब्दोजीववाच्येव । यद्यज्ञाननाशात्परिज्ञानमात्रंतदास्वस्यत्र
ह्मतांविजानातीत्येवस्यात् नतुब्रह्माप्येतीति । नहिराजपुत्रःपूर्वमात्मानमजानन्पश्चाद्राजपुत्रइतिविज्ञायराजपुत्रमप्येतीत्युच्यते ।

जानन्विस्मृतश्चासौकंठमणिश्चेतिविग्रहः । ब्रह्मैवेतिपूर्वब्रह्मशब्दस्यजीववाचित्वमुपपाद्योपसंहरति॥ अतइति ॥ यतः परब्रह्मवा चकत्वेब्रह्माप्येतीतिश्रुतब्रह्मप्राप्तिविरोधोतइत्यर्थः ॥६॥ अथमर्त्योमृतोभवतीत्यस्यपूर्वः सर्वकामप्रहाणंअथततोहेतोस्तदामर्त्योऽमृ तोभवति। किंतदमृतत्वंकेत्यतउक्तं अत्रेति। अत्रास्मिन्शरीरेस्थितस्सन्ब्रह्मसमश्नुतेतद्भोग्यंभुंक्तइतिव्याख्यानमसत् । सर्वकामप्र हाणस्यैवमोक्षत्वेनतस्यतत्साधनत्वाभावात् जीवस्यब्रह्मभावस्याप्रामाणिकत्वाच्चेतिभावेनतदनूद्यव्याचष्टे ॥ अथेति ॥ तथाच नतस्यप्राणाउत्क्रामंतीत्युक्तार्थेइदंप्रमाणमितिभावः । अत्रब्रह्मसमश्नुतइतिमोक्षेब्रह्मणोमुक्तभोग्यत्वमुच्यते तदयुक्तं असंगतंच पूर्वमस्यार्थस्यानुक्तत्वेनोक्तार्थेऽस्यप्रमाणत्वायोगादित्यतोब्रह्मसमश्नुतइत्यस्यब्रह्मप्राप्नोतीत्यर्थमभिप्रेत्यतत्तात्पर्यमाह ॥ मुक्त एवेति ॥ मुक्तएवेत्यवधारणेनाथाकामयमानइत्यादेरमुक्तपरत्वांगीकारेअत्रब्रह्मसमश्नुतइतिमंत्रोसंगतःस्यात् तस्यामुक्तेऽसंभ वादितिसूचयति । समित्यस्यार्थःस्वेच्छयेति । समश्नुतइत्यस्यभोगंकरोतीत्यर्थमभिप्रेत्याह ॥ दर्शनादीनिति ॥ भोगानित्यस्य विवरणं ब्रह्मणोदर्शनादीनिति कर्मणिषष्ठी । यद्वाषट्सुद्वितीयेतिसूत्रात्पंचम्यर्थेद्वितीयेतिभावेनब्रह्मणइत्युक्तंब्रह्मप्रसादादित्य र्थः। एतदनुसारेणब्रह्माप्येतीत्येतत्भोगार्थत्वेनापिव्याख्येयमितिनासंगतिरितिभावः। यदासर्वेप्रमुच्यंतेकामायेस्येत्येतावतापूर्ण

भा० । किंतुराजपुत्रत्वेनात्मानंव्यजानादित्येवोच्यते । विस्मृतकंठमणिरपिविज्ञातइत्येवोच्यते नतुप्राप्तइति । अतःपूर्वब्रह्मशब्दोजीववा च्येव ॥ ६ ॥ अथमर्त्योऽमृतोभवति । अथमुक्त्यनंतरंनकदाचिन्मृतिरस्यभवतीत्यर्थः । मुक्तएवपरेब्रह्मणीच्छयाप्रविशतिनिःसरतिच । दर्श नादीन्ब्रह्मणोभोगांश्चकरोति ।

त्वाद्धृदिश्रिताइतिविशेषणंव्यर्थंव्यावर्त्याभावादित्यतआह ॥ स्वरूपभूताइति ॥ यदीदंविशेषणंनस्यात् तदासर्वकामविमोच
नोक्तिर्बाधितास्यात् मुक्तानांस्वरूपभूतकामसद्भावात् । अतोंऽतःकरणस्थानामेवकामानांनिवृत्तिंप्रतिपादयितुंतद्विशेषणमित्यर्थः ।
ननुमुक्तस्यापिहृदिस्थाःसर्वेकामाःमुच्यंतइतिकुतइत्यतआह ॥ हृदयस्यैवेति ॥ अथाकामयमानइत्यादेरमुक्तपरत्वांगीकारेत
त्रोदाहृतश्लोकेयदासर्वेप्रमुच्यंतेइत्येतदयुक्तंस्यादित्याह ॥ नहीति ॥ नन्वमुक्तस्यापिसुप्तिमोहयोस्सर्वकामविमोचनमस्त्येव त
दाकामानामनुपलंभात् यत्रसुप्तोनकंचनकामंकामयतइत्यादिश्रुतेश्च । तत्कथमेवमुक्तमितिचेन्न । सुप्त्यादावप्यात्मनःकामसद्भा
वात् । नचश्रुत्यानुपलंभेनचविरोधः । विद्यमानानामपिकामानांतदानीमव्यक्तत्वेनश्रौताभावव्यवहारस्यानुपलंभस्योच्चोपपत्तेरि
त्याशयवानाह ॥ सुप्त्यादावपीति ॥ आदिपदेनमोहग्रहणं । अभिभवोऽव्यक्तिः । एवशब्देनाभावव्यावृत्तिः । ननुसुप्त्या
दौकामसद्भावेसिद्धेयुक्तमव्यक्तिकल्पनं । सएवकुतइत्यतआह ॥वासनायाइति ॥ कामवासनायाइत्यर्थः । वासनारूपेणकामस्य
सुप्त्यादावनुवर्तमानत्वादितियावत् । स्यादेतत् यदितदाकामवासनासद्भावएवसिद्धःस्यात् सएवकुतइत्यतआह ॥ वासनाया
हीति॥ वासनायाइतिषष्ठी पुनरुद्भवोऽभिव्यक्तिः । अयमाशयः । यत्कामोदेवदत्तःस्वापमाप्नोति तस्यैवकामस्योत्थापनानंतरंपु
नरुद्भवःतावदस्ति भोजनादिकामनयासुप्तस्यपुनरुत्थापितस्यतद्विषयकव्यवहारस्यैवकदाचिद्दर्शनेनतदातस्यकामसद्भावानुमा

भा० । स्वरूपभूताःकामामुक्तानांभवंतीत्यतोहृदिश्रिताइतिविशेषणं हृदयस्यैवमोचनात्तत्स्थाःकामामुक्तानामपगच्छंतीतियुक्तमेव । नह्यमु
क्तस्यास्यकदाचित्सर्वेकामामुच्यंते । सुप्त्यादावप्यभिभवएव । वासनायाविद्यमानत्वात् । वासनायाहिपुनरुद्भवः ।

नात् । नचासावुत्थानानंतरमेवोत्पन्नः । तदादेवदत्तस्यावशत्वात् । वस्तुदर्शनेअनुमानादिनेष्टसाधनताज्ञानेचसतिखलुकामोद यःस्यात् । नचावशस्यैवंविधाकामसामग्रीकल्पयितुंशक्या । अतःप्राक्तनस्यसुप्त्यादावनुवर्तमानस्यपुनरुद्भवोवाच्यः।नचप्राक्तन स्यापिकामस्याभिव्यक्तस्यैवतदाऽनुवर्तमानत्वंवक्तुंशक्यं । श्रुत्यनुपलंभवाधपरिहारोपायाभावात् तस्माद्वासनारूपेणविद्यमान स्यसहकारिविशेषलाभेपुनरुद्भवोभवतीत्यंगीकार्यं । तथाचयदिसुप्त्यादौकामवासनैवनस्यात् । तदाकस्यपुनरुद्भवःस्यादिति । उक्तं च यत्कामःस्वापमाप्नोतितदेवोत्थापितःपुनः । अवशोपिव्याहरतिकुतःसुप्तावकामतेति । एवं यदासर्वइतिमंत्रंमुक्तपरतयाव्याख्या यतस्यामुक्तपरत्वांगीकारेबाधकमुक्तं तत्रप्रमाणमाह ॥ यावदिति ॥ मोक्षेतुनहृदिस्थाःकामाइतिशेषः । कुतइत्यतआह ॥ चि त्ताभावादिति॥मुक्तानांचित्ताभावेस्वरूपभूताःकामाद्याःकथंस्युरित्यतआह॥स्वरूपभूतचित्तेनेति॥ सुखात्मकाइतिस्वरूपभूत चित्तस्यसुखात्मकत्वादितिभावः ॥ दुःखात्मकाइति ॥ तमसिपतितानामिवतादृशचित्ताभावादित्यर्थः । अथतस्मात्पूर्ववत्शरी राभिमानशून्यत्वादयंजीवन्मुक्तोप्यशरीरएव । अतएवामृतः शरीरस्यैवतद्धर्मत्वात् । अतएवप्राणःप्राणितीतिप्राणःसाक्षीब्रह्मै वाशनादिवर्जितःपरमात्मैव । किंपुनस्तत्तेजएवविज्ञानज्योतिरेवेतिएकवाक्यतयाअथायमशरीरइत्यस्यपरकीयव्याख्यानमसत् । जीवन्मुक्तस्यपरब्रह्मत्वायोगादितिभावेनवाक्यभेदमंगीकृत्याथायमशरीरइतिवाक्यंजीवस्येश्वराद्वैलक्षण्यप्रतिपादकतयाव्याचष्टे

भा० । यावद्विमुच्येत्पुरुषस्तावत्कामाहृदिस्थिताः । चित्ताभावाद्विमुक्तस्यस्युःकामास्तद्गताःकुतः । स्वरूपभूतचित्तेनकामाद्याःस्युःसुखा त्मकाः । दुःखात्मकाःप्राकृतावामुक्तानांनकथंचनेतिब्रह्मतर्के ।

॥ अयंजीवइति ॥ अशरीरोभवतिअमृतोभवतीत्यर्थः । जीवादीश्वरस्यवैलक्षण्यप्रतिपादनायामृतःप्राणःब्रह्मैवेतिवाक्यंप्र वृत्तमितिभावेनामृतशब्दार्थमाह ॥ अमृतइति ॥ नन्विदममृतत्वंमुख्यप्राणस्यायुक्तमित्यतःप्राणोब्रह्मैवेत्येतद्व्याचष्टे ॥ प्राणा ख्यमिति ॥ प्राणशब्दस्यब्रह्मवाचकत्वेश्रुतिमाह ॥ कतमइति ॥ उर्वरितस्यतेजएवेत्यस्यानन्वयशंकांवारयितुंतदपिपृथग्वा क्यमितिभावेनाह ॥ तेजएवेति ॥ जीवव्यावृत्त्यर्थमेवशब्दः । परब्रह्मसमुच्चयार्थश्चशब्दः । तेजएवचकदापिनमृतमितिसं बंधः । तेजःशब्दार्थमाह ॥ तेजइति ॥ उच्यतइतिशेषः । मुक्त्यनंतरमेवजीवोमृतोभवति । परब्रह्मतेजश्चनित्यामृतमित्यर्थं प्रमाणेनद्रढयति ॥ अन्येषामिति ॥ प्राणशब्दस्यपरब्रह्मवाचकत्वेप्रमाणांतरंवदन्तेजःशब्दस्यश्रीवाचकत्वेप्रमाणमाह ॥ प्रा णस्त्विति ॥ ७ ॥ इदानीमणुःपंथाइतिमंत्रमन्यथाप्रतीतिनिरासायव्याचष्टे । तस्मात्प्रेरित्यादिना सदैवहीत्यंतेन । अनेनपंथा इति(एकात्म्,ऐकात्म्यज्ञानलक्षणोमार्गइत्यपहस्तितं । तस्यानर्थहेतुत्वेनमोक्षहेतुत्वाभावात् । मांस्पृष्टइत्यस्यार्थःश्रियास्पृष्ट इति । अनुवित्तोमयैवेत्यस्यार्थोऽनुवित्तस्तयैवेति । तेनेत्यस्यार्थस्तस्यप्रसादादिति । विमुक्ताइतिबहुवचनाभिप्रायःसर्वमोक्षिण

भा० । अयंजीवोथमुक्त्यनंतरमेवाशरीरोभवति । अमृतःकदापिनमृतः । प्राणाख्यंपरब्रह्मैव । कतमएकोदेवइति प्राणइति । सब्रह्मेत्याचक्षत इत्यादिश्रुतेः । तेजएवचेतिजइतिश्रीः । अन्येषाममृतत्वंचभवेद्विष्णुप्रसादतः । नित्यामृतःसभगवान्श्रीश्चनान्यःकथंचनेतिनारदीये । प्राणस्तुभ गवान्विष्णुःनवनेतृत्वतोविभुः । तेजस्तुसर्वतेजस्त्वाच्छ्रीरेवसमुदाहृतेतिच ॥ ७ ॥ तस्मात्प्रेःसुखहेतुत्वात्पंथाइतिहरिःश्रुतः । अणुश्चविततश्चासौ यतोंतर्बहिरेवच । श्रियास्पृष्टःश्रीपतित्वादनुवित्तस्तयैवच । तस्यप्रसादात्संयांतितल्लोकंसर्वमोक्षिणः । ऊर्ध्वःसभगवान्सर्वविशिष्टोयतस्सदैवहि ॥८॥

इति । तस्मिंच्छुक्लमितिमंत्रंव्याचष्टे ॥ रूपमिति ॥ ८ ॥ तस्मिन्निल्यस्यार्थोऽजेहराविति । एषइत्यस्यपरामृश्यंदर्शयन्नेषपंथा ब्रह्मणाहानुवित्तइत्येतद्व्याचष्टे ॥ पंचेति ॥ स्वरूपतोऽभिन्नोपिपंचप्रकारेणविभक्तोयःसपंथाइत्यन्वयः । ब्रह्मणामनेकत्वात्प द्मजेनेत्युक्तं । ब्रह्मवित्पुण्यकृत्तैजसश्चेत्येतद्व्याचष्टे ॥ परब्रह्मेति ॥ एवंविधोपीत्यनेनतैजसश्चेतिचशब्दोपिशब्दार्थइत्युक्तंभ वति । तेनैतीत्यस्यार्थमाह ॥ तस्यैवेति ॥ तांगतिंतल्लोकमित्युक्तांगतिमितिशेषोक्तिः । तेनैतिब्रह्मविदित्येतत्एपपंथाइत्यत्र हेतुप्रतिपादकमित्याह ॥ अतइति ॥ स्वलोकप्राप्तिहेतुत्वात् । ननुस्वरूपतोऽभिन्नःपंचभेदविभिन्नइतियदुक्तंतत्विरुद्धमित्य तोविरोधंपरिहरति ॥ स्वगतेति ॥ स्वगतैःअखिलैःगुणावयवादिभिःभेदेनविहीनोपिसन्भेदोत्थानामन्यत्रभेदनिमित्तकाना मयंगुणोयंगुणीपंचरूपइत्यादीनांसर्वेषांव्यवहाराणांघटनेईश्वरःसमर्थोहियस्मात् अतएवस्वरूपतोभिन्नोपिपंचभेदादिनाभिन्न इत्युच्यते । नान्यथेत्येतदमृषेत्यर्थः ॥ ९ ॥ अंधंतमःप्रविशंतीतिमंत्रमप्रतीत्यन्यथाप्रतीतिनिरासायप्रमाणेनव्याचष्टे ॥ अन्य

भा० रूपमाहुःपंचविधंतस्यविष्णोर्महात्मनः । शुक्लंतुवासुदेवाख्यमनिरुद्धंतुनीलकं । संकर्षणंपिंगलंचप्रद्युम्नंहरितंस्मृतं । नारायणंलोहि तंस्मात्पंचरूपाण्यजेहरौ । पंचभेदविभिन्नोयस्त्वभिन्नोपिस्वरूपतः । सपंथाब्रह्मणाज्ञातःपद्मजेनैवसंततं । परब्रह्मस्वरूपज्ञोमहातेजःश्रियस्तथा । सम्यक्स्वरूपविज्ञानात्तैजसत्वेनकीर्तितः । भगवत्कर्मकर्तृत्वात्पुण्यकृच्चाभिधीयते । एवंविधोपितस्यैवप्रसादाद्यातितांगतिं । अतःपंथास्समुद्दिष्टोभगवा न्केशवःस्वयं । स्वगताखिलभेदेनविहीनोपिससर्वदा । सर्वेषांव्यवहाराणांभेदोत्थानांसईश्वरः । अभिन्नोपिह्यतोभिन्नःपंचभेदादिनाऽमृषा ॥ ९ ॥ अन्यथोपासकायेस्युतेयांतिह्यधंतमः ।

येति ॥ श्रुतावविद्यापदंविषयिवाचकंविषयस्यान्यथाकारस्यलक्षकमित्यभिप्रेत्याविद्यामुपासतइत्येतत् अन्यथोपासकाइतिव्याख्यातं । ततः अन्यथोपासकप्राप्यतमसः । भूयएवेत्यस्यार्थमाह ॥ किंचिद्विशेषेणेति ॥ श्रुतावुशब्दोऽवधारणार्थोविद्यायामित्यनेनसंबध्यते । तेनविद्यायांयथार्थज्ञानएवरताः नत्वन्यथाज्ञाननिंदांकुर्वतीत्येषोर्थोलभ्यते । अतउक्तंदुर्ज्ञानस्याविनिंदकाइति । अन्यथोपासकापेक्षयादुर्ज्ञानाविनिंदकाःकिंचिद्विशेषेणतमोयांतीतिकुतइतिचेत् न । तदपेक्षयातेषामधिकपापित्वात् । तदपि कुतः । उभयोरपिदुर्ज्ञानाविनिंदकत्वाविशेषादित्यतआह ॥ सम्यगिति ॥ विद्यायांरताइत्युक्तत्वेनतेषांसमीचीनाचार्योपदेशस्तावत्प्राप्तः । सम्यगाचार्यवचनंब्रह्मनिर्गुणत्वादिनिंदापरंसम्यगबाधितार्थमविज्ञायाचार्योक्तार्थविरोधिनिब्रह्मनिर्गुणत्वादौसत्वबुद्धिंयतःकुर्युस्ततस्तेअन्यथोपासकापेक्षयाऽधिकपापिनइत्यर्थः । नन्वन्यथोपासकाअपिब्रह्मनिर्गुणत्वादौसत्वबुद्धिकारिणएवततःकथंतेअधिकपापिनइत्यतआह ॥ अप्राप्तत्यागिनइति ॥ अन्यथोपासकोह्यप्राप्तत्यागी तस्यविद्यारतत्वाभावेन समीचीनाचार्योपदेशाभावेदुर्ज्ञाननिंदनस्याप्राप्तत्वात् । अयंतुप्राप्तनिष्ठाहीनः सम्यगाचार्योपदेशप्राप्तेदुर्ज्ञाननिंदनेनिष्ठाशून्यत्वात् । अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनोह्यधिकदोषवानिति । आचार्योपदेशाभावेनअप्राप्तनित्यकर्मादित्यागिनःआचार्योपदेशादिनाप्राप्तनित्यकर्मादौनिष्ठाहीनोदोषवानितिलोकप्रसिद्धमितिहिशब्देनदर्शयति ॥ १० ॥ अनंदाइत्युक्तानंदशब्दार्थमाह

---

भा० । ततःकिंचिद्विशेषेणदुर्ज्ञानस्याविनिंदकाः । सम्यगाचार्यवचनमविज्ञायविरोधिनि । सत्वबुद्धिंयतःकुर्युस्ततस्तेधिकपापिनः । अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनोहिदोषवान् ॥ १० ॥

|| नित्येति || नंदःसुखं । नञोविरुद्धार्थत्वेनअनंदइतितद्विरुद्धंदुःखमुच्यते । मुख्येसत्यमुख्यग्रहणायोगात्नित्यदुःखस्व
रूपत्वादित्युक्तं । इदानीमनंदानामतेलोकाइतिमंत्रंव्याचष्टे || बोधकइति || अविद्वांसोबुधइत्यत्रबोधकेविद्यमानेपियेविदु
र्नपरंहरिमितिकथंव्याख्यानं । ततःतस्याप्रतीतेरित्यतस्तद्याचष्टे || बुधइति || ननुबुधइत्यस्यप्रथमांतत्वात्कथंबुधःसकाशेपीत्युक्त
मित्यतःपंचम्यंतमेवतदित्यभिप्रेत्यतन्मंत्रव्याख्यानरूपंस्पष्टंप्रमाणमाह || बोधनादिति || ११ || आत्मानंचेद्विजानीयादिति
मंत्रंव्याचष्टे || यदीति || आत्मानमित्यस्यार्थःपरात्मानमिति । विजानीयादित्यस्यार्थोवेदितुंयोग्योभवेदिति पुरुषइत्यस्यजी
वइति शरीरमनुसंज्वरेदित्यस्यार्थःशरीरच्छेदादेर्दुःखीभवेदिति किमिच्छन्कस्यकामायेत्यस्यतात्पर्यंकथमिति । यदिजी
वस्तथावेदितुंयोग्यस्तदादुःखीनस्यादित्युक्ततर्कस्यविपर्ययेपर्यवसानमाह || दुःखीति || ननुजीवस्यस्वतोदुःखशून्यत्वादिष्टा
पत्तिःविपर्ययपर्यवसानेचबाधइत्यतउक्तं || शरीरसंबंधादिति || ननुसंसारिणोजीवस्यदुःखित्वेनपरमात्माहमस्मीतिज्ञातुमयो
ग्यत्वेपिमुक्तस्यतद्योग्यतास्यादेवतस्यपरमात्मवददुःखित्वादानंदभोक्तृत्वाच्चेत्यतआह || विष्णोरिति || प्रसादतएवेतिविष्णु

सा० । नित्यदुःखस्वरूपत्वादनंदंतत्तमोमतं । बोधकेविद्यमानेपियेविदुर्नपरंहरिं । तेपियांतितमोघोरंनित्योद्रिक्तासुखात्मकमितिच । बुधः
सकाशेप्यविद्वांसइत्यर्थः । बोधनाज्ज्ञानवान्भुत्स्यात्तत्सकाशाद्वयेहरिं । नविदुस्तेतमोयांतिसर्वदुःखात्मकंपरं || ११ || यदिजीवःपरात्मानमयम-
स्मीतिवेदितुं । योग्यःशरीरच्छेदादेःकथंदुःखीतदाभवेत् । दुःखीशरीरसंबंधाज्जीवोविष्णोःप्रसादतः । अदुःखीविष्णुडानंदंमुक्तएवचभोक्ष्यति ।

डानंदमेवेतिचएवशब्दसंबंधः । ननुयदिपरमात्मापिएवंविधःतदाकथंमुक्तःसोस्मीतिवेदितुमयोग्यःस्यादित्यतआह ॥ नित्यमु क्तइति ॥ विष्णोःप्रसादतोऽदुःखीत्यस्यप्रतियोगीनित्यमुक्तइति विपुडानंदंभोक्ष्यतीत्यस्यप्रतियोगीपूर्णसुखइति । स्वतंत्रइत्य स्यप्रतियोगिनमाह ॥ परतंत्रइति ॥ एवंविरुद्धधर्माधिकरणत्वेनोभयोर्भेदेनिश्चितेजीवःसोस्मीतिवेदितुंकथंयोग्यःस्यादित्यर्थः । किंततइत्यतआह ॥ तस्मादिति ॥ तर्हिकथंज्ञातव्यइत्यतआह ॥ तदीयोस्मीति ॥ १२ ॥ यस्यानुवित्तइतिमंत्रमन्वयक्र मेणव्याचष्टे ॥ यस्येति ॥ येनेत्यर्थः । अनुवित्त इत्यस्यार्थोज्ञातइति प्रतिबुद्धइत्यस्यार्थोनित्यबुद्धइति आत्मेत्यस्यार्थोभगवान्पु रुषोत्तमइति तस्यलोकःसउलोकएवेत्यस्यार्थमाह ॥ तस्येति ॥ उशब्दार्थएकइतिप्रधानइत्यर्थः । सविश्वकृत्सहिसर्वस्यक र्तेत्यनयोरेकार्थतापरिहारायतद्व्याचष्टे ॥ सहीति ॥ विश्वकर्तेत्यस्यवायोरपिकर्तेतिकथंव्याख्यानमित्यतआह ॥ विश्वइति ॥ तर्हिसर्वस्यकर्तेत्युक्त्यैवसर्वसंग्रहपतितवायुकर्तृत्वस्यापिलाभात्तद्व्यर्थंस्यादित्यतआह ॥ तदन्यस्यापिसर्वस्येति ॥ वाय्वन्य स्यापीत्यर्थः । यद्वाविष्ण्वन्यस्यापीत्यर्थः । हियस्मादन्यस्यसर्वस्यापिकर्ताऽतोवायोरपिकर्तेतियोजनान्नवैयर्थ्यं । स्वात्मानंप्रति

भा० । नित्यमुक्तःपूर्णसुखःस्वतंत्रःपुरुषोत्तमः । परतंत्रःकथंजीवोयोग्यःसोस्मीतिवेदितुं । तस्मात्सोस्मीतिनैवायंविजानीयात्कदाचन । तदीयोस्मीतिजानीयात्सर्वदैववुधस्ततइतिच ॥ १२ ॥ यस्यज्ञातोनित्यबुद्धोभगवान्पुरुषोत्तमः । तस्यलोकःसएवैकोयोलोकःपरमात्मनः । सहिवि ष्णुःपरोवायोरपिकर्ताप्रकीर्तितः । विश्वोवायुःसमुद्दिष्टःपूर्णत्वाज्जीवसंयतः । तदन्यस्यापिसर्वस्यकर्तैकोविष्णुरेवहि ।

स्वस्यकर्तृत्वासंभवादन्यस्येत्युक्तं । अस्मिन्संदोघेगहनेप्रविष्टइत्येतद्व्याचष्टे ॥ प्रविष्टइति ॥ देहमध्येस्थितेगहनेहृद्गुहास्थानेप्रविष्टइत्यर्थः । देहमध्यइत्येतत्कस्यव्याख्यानमित्यतआह ॥ संदोघनाम्नीति ॥ संदोहइतिपाठस्याप्ययमेवार्थः । इहैवसंतइत्यस्यतात्पर्यमाह ॥ तज्ज्ञानीति ॥ यदैतमनुपश्यंतीत्यस्यतात्पर्यमाह ॥ तत्प्रसादादिति ॥ १३ ॥ यस्मादर्वाक्संवत्सरइतिमंत्रंव्याचष्टे ॥ नवत्सराश्चेति ॥ वत्सरादिकृतविकारोनास्तीत्यर्थः । तत्रहेतुमाह ॥ नित्याविकारतइति ॥ ज्योतिषामादित्यादीनांज्योतिष्प्रदमित्यर्थः । आयुरित्यस्यार्थोचलमिति ॥ १६ ॥ यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितइतिमंत्रंव्याचष्टे ॥ प्राणइति ॥ पंचपंचेतिद्विरुक्तेस्तात्पर्यंप्रतिपुरुषमिति । प्राणस्यप्राणमितिवाक्यशेषपर्यालोचनयान्नमत्रविवक्षितमितिनज्ञायतइतिचेन्न । माध्यंदिनशाखायां प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमन्नस्यान्नंमनसोमनइत्युक्तत्वेनतदभिप्रायेणात्रान्नग्रहणात् । एतदभिप्रायेणोक्तंसूत्रकृता प्राणादयोवाक्यशेषादिति तर्ह्येतदुपनिषदुक्ताःपंचजनाःकइतिचेत् वाक्यशेषेपरमात्मनःप्राणचक्षुःश्रोत्रमनसांचतुर्णामेवप्राणादिप्रदत्वोक्त्याप्राणादिचतुर्णामेवपरमात्माश्रितत्वावगमेपिपूर्ववाक्येज्योतिषांज्योतिरितिज्योतिषांज्योतिष्प्रदत्वोक्त्याज्योतिषःपरमात्माश्रितत्वावगमात्तेनसहपंचत्वसंभवात् । तथाचोक्तंसूत्रकृता ज्योतिषैकेषामसत्यन्ने इति । उक्तंचभाष्ये तद्देवाज्योतिषांज्योतिरित्यनेनकाण्वानांपंचकमिति । अत्रज्योतिरन्नशब्दयोरेकार्थत्वंपृथक्पंचकंत्वित्युपपन्नमितिटीकोक्तम



भा० । प्रविष्टोगहनेदेहमध्येसंदोघनामनि । तज्ज्ञानीयातितज्ञोकंतत्प्रसादाच्चवर्तते ॥ १३ ॥ नवत्सराश्चनाहानियस्यनित्याविकारतः । ज्योतिषांज्योतिरचलंतद्देवाःसमुपासते ॥ १६ ॥ प्राणश्चक्षुस्तथैवान्नमंनःश्रोत्रंचपंचमं । मूलप्रकृतिसंयुक्तंयद्गतंप्रतिपूरुषं ॥ १७–१८ ॥

नुसंधेयं । अत्रपंचजनादिशब्दानांप्राणादिपरत्वेपिइदंवाक्यंविष्णुपरंभवत्येवेतिभावेनैवंव्याख्यातं । सूत्रभाष्येतुसमन्वयसूत्रो पपत्त्यर्थंपंचजनादिशब्दाअपिविष्णुपराएवेत्युक्तमित्यनुसंधेयं । यद्वातदुक्तरीत्याअत्रापिप्राणादिशब्दास्तत्तन्नियामकभगवत्परा एव । नचैवंसाधाराधेयभावानुपपत्तिः । शरीरनियामकेश्वराधारप्राणादिषुभगवद्रूपाणांअवस्थितिमात्रेणाधाराधेयभावोपपत्ते रिति ॥ १७–१८ ॥ नेहनानास्तिकिंचनेतिवाक्यमन्यथाप्रतिपत्तिनिरासायव्याचष्टे ॥ तस्येति ॥ मृत्योःसमृत्युमिति मंत्रंव्याचष्टे ॥ तद्भेदेति ॥ १९ ॥ एकधैवानुद्रष्टव्यमित्येतदुपसंहारपरमितिनेहनानास्तिकिंचनेत्यनेनगतार्थमित्याह ॥ तस्मादिति ॥ एतदप्रमेयमित्युक्ताप्रमेयशब्दार्थमाह ॥ परिमाणेति ॥ परिमितिविहीनत्वादित्यर्थः । अत्राप्रमेयत्वंस र्वात्मनाप्रमित्यविषयत्वमुच्यतइतिव्याख्यानंप्रमाणविरोधेनपराचष्टे ॥ इत्यादिवचनादिति ॥ अवाच्यत्वामनोविषयत्वयोर्ग्र हणंप्रसंगात्परमतप्रतिक्षेपार्थं । इत्यादीत्यादिपदेनाप्रसिद्धेरवाच्यंतदित्यादिवचनपरिग्रहः । यद्वा यतोवाचोनिवर्तंतेअप्राप्यमन सासहेतिश्रुतावचाच्यत्वामनोविषयत्वयोरुक्तत्वात्सर्वात्मनाप्रमित्यविषयत्वमेवाप्रमेयत्वमितिवाच्यमित्यतआह ॥ अवाच्य त्वममनोविषयत्वंचेति ॥ अप्रमेयत्वममनोविषयत्वंचसर्वात्मनानेत्यत्रहेत्वंतरमाह ॥ मनसैवेति ॥ ननुसर्वात्मनाशब्दावा च्यत्वांगीकारेकोदोषइतिचेत् । तथासतिवेदाप्रतिपाद्यत्वापत्त्यावेदांतानामखंडार्थनिष्ठताभ्युपगमव्याघातात् । ननुनिर्गुणेब्रह्म

भा० । तस्यरूपगुणादिषुनकश्चिद्भेदइष्यते । तद्भेददर्शीसंयातिमृत्योर्मृत्युमभिधंतमः ॥ १९ ॥ तस्मादेकप्रकारेणद्रष्टव्योभगवान्ह रिः । परिमाणविहीनत्वादप्रमेयइतीरितः । इत्यादिवचनादप्रमेयत्वमवाच्यत्वममनोविषयत्वंचसर्वात्मनान । मनसैवानुद्रष्टव्यमित्युक्तत्वात् ।

णिशव्दप्रवृत्तिनिमित्ताभावेनवाच्यत्वाभावेपिलक्षणयासर्ववेदप्रतिपाद्यत्वंभविष्यतीतिचेत्तत्राह ॥ **नचेति** ॥ लोकेहिकेनचित्पदेनवाच्यस्यैवकेनचित्पदेनलक्ष्यत्वंदृष्टं । यथातीरपदवाच्यस्यतीरस्यगंगापदलक्ष्यत्वं । नचकेनापिपदेनावाच्यस्यलक्ष्यत्वंदृष्टं । येनसर्वशव्दावाच्यस्यापिब्रह्मणोलक्ष्यत्वंस्यात् । तथाचविप्रतिपन्नंनलक्ष्यं केनापिपदेनावाच्यत्वात् व्यतिरेकेणतीरवदित्यनुमानविरुद्धत्वान्नलक्षणयावेदप्रतिपाद्यत्वमित्यर्थः । सर्वपदार्थानांलक्षणायोग्यत्वान्नसपक्षत्वमितिनासाधारण्यं । नन्विक्षुक्षीरगुडादीनांमाधुर्यविशेषास्तावद्विद्यंते । अनुभवसिद्धत्वात् । नचतेकेनापिपदेनवाच्याः । तद्वाचकपदाभावात् । तथापिलक्ष्यादृश्यंते । अन्यथावाग्व्यवहाराभावप्रसंगात् । अतस्तत्रव्यभिचारः । यथोक्तं इक्षुक्षीरगुडादीनांमाधुर्यस्यांतरंमहत् । भेदस्तथापिनाख्यातुंसरस्वत्यापिशक्यतइति । तथाचयथाकेनापिपदेनावाच्यानामिक्षुक्षीरमाधुर्यविशेषाणांलक्ष्यत्वंतथाब्रह्मणोपिकेनापिपदेनअवाच्यस्यलक्ष्यत्वंस्यादित्यतआह ॥ **क्षीरेति** ॥ तत्तच्छव्देनैवक्षीरमाधुर्यविशेषादिशव्देनैव । ननुवाचकत्वंपदस्यधर्मःमाधुर्यविशेषइतिचनपदं किंतुवाक्यं अनेकपदात्मकत्वात् । अतःकथंतच्छव्देनैववाच्यत्वमुक्तमितिचेत् ऐकपद्यमैकस्वर्यंसमासप्रयोजनमितिशाब्दैरंगीकृतत्वात् । अथवातत्तच्छव्देनसूदशास्त्रप्रसिद्धेनविशदादिशव्देनवाच्यत्वादित्यर्थः । तत्रप्रमाणमाह ॥ **विशदमिति** ॥ ननुब्रह्मतावन्निर्गुणं केवलोनिर्गुणश्चेतिश्रुतेः । नचतत्रशव्दानांवचनवृत्तिःसंभवति प्रवृत्तिनिमित्ताभावात् ।

---

भा० । नचकेनाप्यवाच्यस्यलक्षणादृष्टा । क्षीरमाधुर्यविशेषादेरपितत्तच्छव्देनैववाच्यत्वात् । विशदंक्षीरमाधुर्यंगुडेतीक्ष्णंघृतेस्थिरमित्यादिच ।

नचसर्वथाशब्दाप्रतिपाद्यंब्रह्म सत्यज्ञानादिवाक्यानांनिर्विषयत्वापातात् समन्वयसूत्रानुपपत्तेश्च अतःकेनापिशब्देनअवाच्यस्यापिलक्षणांगीकार्येत्यतआह ॥ **नचेति** ॥ स्यादेतदेवंयदिब्रह्मनिर्गुणमेवभवेत् । नचतदस्ति । तथासतिब्रह्मणःसत्वस्यैवाभावप्रसंगात् । नचनिर्गुणस्यवस्तुनःसत्वंलोकेदृष्टं येनतथासंभावयामः । निर्गुणश्चेतिश्रुतिःसत्वादिगुणाभावपरा । अन्यथाएकोदेवइत्यादिनोक्तानामपिगुणत्वाद्व्याघातः । अतोब्रह्मणःसत्वसिध्यर्थंसगुणत्वमेवांगीकर्तव्यमितितस्यवाच्यत्वांगीकारेनकाप्यनुपपत्तिरितिभावः । ननुगुणादिपंचकस्यनिर्गुणत्वंपदार्थविदोमन्यंते तथाचतद्वद्ब्रह्मणोपिसत्वंकिंनस्यादितिचेन्न वैषम्यात् । निर्धर्मकस्यवस्तुनःसत्वमेवनास्तीत्यत्रविवक्षितं नहिगुणादीनांनिर्धर्मकत्वंकेप्यभ्युपयंति गुणत्वादीनामेवधर्माणांतत्रस्वीकारात् । किंचसत्यत्वमभ्युपगम्यते वैशेषिकादिभिर्गुणादिपंचकस्यनिर्गुणत्वंतद्वस्तुतोनसंभवतिकुतइत्यतआह ॥ **गुणभेदादीनामिति**॥ गुणभेदोगुणविशेषः । आदिपदेनकर्मभेदादिग्रहणं । यद्वागुणश्चभेदोऽन्योन्याभावश्चेतिगुणभेदौतावादीयेषांकर्मादीनांगुणभेदादयस्तेषांगुणभेदादीनामितिविग्रहः। अयमाशयः। गुणभेदादीनांनिर्गुणत्वंकस्मादंगीकर्तव्यं । नतावत्प्रतीत्यभावात् । चतुर्विंशतिर्गुणाः रूपंरसात्पृथक् कर्मपंचविधं सामान्यंत्रिविधं एकःसमवायः घटान्योन्याभावएक इत्यादिप्रतीतेर्दुरपह्नवत्वात् । नचेयंभ्रांतिःवाधकाभावात् । किंचयद्यपिगुणेसंयोगादिव्यवहारंद्रव्ययोरेवसंयोगइतिदुर्दर्शनाभ्यासवान्जनोनकरोति । तथापिघटपटयोः

भा० । नचानिर्गुणस्यसत्वमेवास्ति । गुणभेदादीनामपिसंत्येवगुणाः ।

संयुक्तयोस्तद्गतरूपेअपिसंयुक्तेइतिलोकःकरोत्येव । किंचरूपेणयुक्तोघटइतिसर्वेपिव्यवहरंति । तथापिसंयुक्तइतिनव्यवहरंती
तिचेत् ध्वंसप्रध्वंसशब्दयोरिवानयोरर्थभेदास्फुरणात् । द्रव्याणांकर्मसंयोगेत्यादौजैमिन्यादिभिःपरीक्षकैरद्रव्यसंबंधेपिसंयोग
व्यवहाराच्च । ननुगुणादिपंचकस्यअद्रव्यत्वात्कथंतत्रगुणादिसद्भावइतिचेत्कथमेतन्निश्चितंभवता । द्रव्यस्यैवगुणवत्त्वमितिप्र
तीतेरुभयत्राविशिष्टत्वात् । ननुचतुर्विंशतिर्गुणाइत्यादिव्यवहारएव नप्रतीतिः । सचोपचारएवेतिचेन्न । बाधकाभावात् । अ
न्यथाद्रव्येपितथात्वापत्त्यासंख्यादिगुणासिद्धिप्रसंगः। ननुप्रतीत्यनुरोधेनतावदेकत्रसंख्यादिकमंगीकर्तव्यंतत्रद्रव्येष्वेवतदंगीका
रेणसर्वस्योपपत्तावन्यत्रनतदंगीकारआवश्यकः । अतोन्यत्रसंख्यादिव्यवहारउपचारएवेतिचेन्न । उपचारनिमित्ताभावेनतद
योगेतत्रापितद्व्यवहारस्यमुख्यत्वावश्यंभावात् । तथाहि नतावदेकार्थसमवायोनिमित्तं द्रव्येचतुर्विंशतित्वनियमाभावात् प्रत्ये
करूपादिषुतत्प्रसंगाच्च अपर्यायचतुर्विंशतिशब्दवाच्यत्वमितिचेत् न। शब्देपिचतुर्विंशतित्वाभावात् । चतुर्विंशतिपुरुषोच्चारिता
पर्यायशब्दवाच्यत्वमितिचेत् रूपरसादिशब्दोच्चारयितृपुरुषाणांचतुर्विंशतित्वेमानाभावात् । बधिरादीनांरूपादिषुसंख्याव्यव
हाराभावप्रसंगाच्च । ननुरूपंरसात्पृथगितिप्रतीतिराश्रयगतंपृथक्त्वमपेक्ष्यैवेतिचेन्न । समानाधिकरणरूपरसयोस्तथाप्रतीतेरनुभ
वसिद्धत्वात् । साप्रतीतिःरूपेरसान्योन्याभावमवगाहतइतिचेन्न । तथासतिघटःपटात्पृथगितिप्रतीतेरप्यन्योन्याभावविषय
कत्वोपपत्तौपृथक्त्वविलोपापातादिति । ननुतथापिनगुणादिपंचकस्यगुणवत्त्वमंगीकर्तुंशक्यं । एकत्वमेकंपृथक्त्वंपृथक्भेदोभिन्न
इत्यादिप्रतीत्यैकत्वादिष्वप्येकत्वाद्यंगीकारापातात् । अन्यथारूपादिष्वपितदभावापातात् । तथाचतत्राप्येकत्वादावेकत्वाद्यं

तरमंगीकर्तव्यमित्यनवस्थापातादित्यतआह ॥ **नचेति** ॥ कुतोनेत्यतआह ॥ **स्वनिर्वाहकत्वादिति** ॥ **स्यादेवमनवस्था** य द्येकत्वादौविद्यमानमेकत्वादिकंततोभिन्नंस्यात् नचैवं स्वस्यैवस्यैकत्वादिव्यवहारनिर्वाहकत्वाभ्युपगमात् । अन्यथाप्रमेयत्वेप्रमे यत्वांतरस्याप्यंगीकारापातेनानवस्थापातादित्यर्थः । उक्तमर्थंप्रमाणेनद्रढयति ॥ **अवाच्यमिति** ॥ यतोब्रह्मागुणंततो ऽवाच्यममनोगम्यमितियद्यंगीक्रियते तदावक्तव्यं तदगुणंचेत्कुतोस्तीति। अगुणत्वेतस्यसत्वमेवनस्यादितियावत्। फलितमाह। ॥ **तस्मादिति** ॥ ब्रह्मरूपंचवस्तुअगुणमितिवदन्नित्यर्थः। शून्यतांब्रह्मणइतिशेषः । यद्वावस्तुशून्यतामित्येकंपदं । अनवस्थाप रिहारायगुणाःस्वेनैवगुणिनइत्युक्तं ॥ २० ॥ सर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिरित्येतेषांपुनरुक्तिपरिहारायार्थभेदमाह ॥ **सर्वमिति** ॥ ईशानपदांतर्गतानशब्दार्थमाह ॥ **ब्रह्मरुद्रादेरिति** ॥ अनश्श्रेष्टकइत्यर्थः । अधीत्यस्यार्थोगुणाधिकइति पति रित्यस्यपालकइति । सर्वस्याधिपतिरित्यनेनगतार्थतापरिहारायभूताधिपतिशब्दंव्याचष्टे ॥ **भूतएवेति** ॥ तात्पर्यमाह ॥ **नास्ये ति** ॥ ननुब्रह्मापरोक्षज्ञानात्पूर्वमेवमननशीलत्वस्यसिद्धत्वात्तंविदित्वामुनिर्भवतीतिकथमुच्यतइत्यतआह ॥ **नित्यइति** ॥

भा० । नचानवस्था । स्वनिर्वाहकत्वात् । अवाच्यममनोगम्यमगुणंचेत्कुतोस्तितत् । तस्मादेवंवदन्यस्तुशून्यतामर्थतोवदेत् । गुणाश्च गुणिनःसर्वेस्वेनैवगुणिनोगुणाइत्यादिच ॥ २० ॥ सर्वमस्यवशेयस्माद्धरिःसर्ववशीततः । सर्वस्यब्रह्मरुद्रादेरनईशानएवच । गुणाधिकःपालक श्चेत्यतोधिपतिरीरितइतिच । भूतएवचाधिपतिर्नास्याधिपत्यमादिमत् । नित्यबोधात्मकत्वाद्योमुनिःप्रोक्तोजनार्दनः । तंविद्वांश्चमुनिर्नाम



व

तत्रहेतुमाह ॥ बोधइति ॥ तेहस्मपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायेतिवाक्यंव्याचष्टे ॥ यंविदित्वेति ॥
अथभिक्षाचर्यंचरंतीतिभिक्षाचरणोक्त्याप्राप्तंदुःखंनिवारयति ॥ उत्पत्तीति ॥ तर्हिकथंतेषांभिक्षाचरणमित्यतआह ॥ आ
नंदभिक्षामिति ॥ एतमुहैवैतेनतरतःपापमकरवंकल्याणमकरवमित्यंशंव्याचष्टे ॥ सएषमिति ॥ यदिविष्णुरेतन्नकरोतितर्हि
कःकरोति जीवइतिचेत् सोपिकिंस्वातंत्र्येणतथाकरोतीतिजिज्ञासायांप्राप्तमतःपापमकरवमित्यतःकल्याणमकरवमितिवाक्यं
व्याचष्टे ॥कृतेमयेति॥ श्रुतावुहैवेत्यस्यात्रान्वयः।उशब्दोवधारणार्थः।उशब्दैवशब्दयोरतःशब्दद्वयेनान्वयइतिभावेनोक्तं॥अ
तएवेति ॥ प्रसिध्यर्थकस्यहेत्यस्यार्थं उक्तमिति।उभेउहैवैषएतेतरतीतिवाक्यंब्रह्मज्ञानिपरमितिनिरासायव्याचष्टे॥तीर्णइति॥
नैनंकृताकृतेतपतइतिवाक्यंव्याचष्टे ॥ नैनमिति ॥ २१ ॥ तस्मादेवंविच्छांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वेत्युक्तशांत्या
दिपदार्थानाह ॥ शांतिरित्विति ॥ सर्वमात्मानंपश्यतीतिवाक्यमैक्यमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ सर्वइति ॥ वे

भा० । बोधस्तन्नाप्यमुख्यतः । यंविदित्वाविमुक्ताश्चायुक्तकामविवर्जिताः । उत्पत्तिलयहीनाश्चनित्यानंदैकभोगिनः । आनंदभिक्षांविष्णू
स्थांचरंत्यज्ञानवर्जिताः । सएषमोक्षदोविष्णुर्यत्कल्याणंकृतंमया । पापंकृतंमयेत्येतन्नकदाचित्करिष्यति । कृतेमयापुण्यपापेइतियच्चेतनात्मनां ।
तत्सर्वंमतएवोक्तंविष्णोःसर्वेश्वरेश्वरान् । तीर्णोहिवर्ततेनित्यंपुण्यपापेजनार्दनः । नैनंकदाचित्तपतःपुण्यपापेजनार्दनमितिच ॥ २१ ॥ शांतिस्तुभ
गवन्निष्ठादमोसदविनिग्रहः । हृदिस्थविष्णौसंतोषःसदैवोपरमःस्मृतः । तितिक्षाद्वंद्वसहताक्षमाक्रोधासमुत्थितिरितिशब्दनिर्णये । सर्वःपूर्णःसमुदि
ष्टस्तथाज्ञेयोजनार्दनः ।

नंपाप्मातरतिसर्वंपाप्मानंतरतीत्यादिपापतरणोक्तिरूपलक्षणं । विपापोविरजोविचिकित्सइतिपरमात्मनोरागसंदेहाभावयोरप्युक्तेरितिभावेनाह ॥ रागेति ॥ विपापोविरजोविचिकित्सइतिवाक्यस्यज्ञानिपरत्वेपुनरुक्तिप्रसंगात्तत्रहेतुप्रतिपादकतयाव्याचष्टे ॥ नित्यंहीति ॥ आदिशब्देनसंदेहग्रहणं । ननुवर्णशून्यत्वाद्विष्णोःकथंब्राह्मणोभवतीत्युक्तमित्यतआह ॥ वेदाख्येति ॥ स्वरव्यत्यासस्त्वाधिक्यार्थइतिभावः । नित्यंहीत्यस्यात्रापिसंबंधः । अण्यत्वाद्गम्यत्वात् । अणपणगताविति धातोः । एषब्रह्मलोकइत्येतत् षष्ठीसमासप्रतीतिनिरासायव्याचष्टे ॥ पूर्णत्वादिति ॥ २२ ॥ अमरोमृतइत्यनयोःपुनरुक्तिपरिहारायार्थमाह ॥ नेति ॥ अत्रब्रह्मत्वंनामयदिपूर्णगुणत्वंतदाब्रह्मलोकइत्युक्तब्रह्मशब्देनपुनरुक्तिःस्यादित्यतआह ॥ ब्रह्मायमितिति ॥ अभयंहिवैब्रह्मभवतियएवंवेदेतिफलवाक्यंव्याचष्टे ॥ एवमिति ॥ ज्ञानिनःसंदेहोनास्तीत्युक्तं तत्रविशेषमाह ॥ परमार्थेभवतीति ॥ ब्राह्मणोभवतीतिवर्तमानप्रयोगेणभगवतोतीतभविष्यत्कालयोर्वेदप्राप्यत्वंनास्तीतिप्रतीतिंनिवारयन्नाह ॥ ब्राह्मणइति ॥ यद्यपिनचविपापोविरजोविचिकित्सोब्राह्मणोभवतीत्यत्रभवतीतिवर्तमानप्रयोगेणविपापत्वादीनांवर्तमानत्वमेवप्रतीयते । अतःकथं नित्यंहिपापरागादेर्मुक्तइत्यादिव्याख्यानमित्यतआह ॥ परमार्थइति ॥ अविचिकित्सोब्राह्मणोभवतीतिवर्तमानप्रयोग

---

भा० । रागसंदेहपापानितथाजानंस्तरिष्यति । नित्यंहिरागपापादेर्मुक्तोयत्पुरुषोत्तमः । वेदाख्यब्रह्मणाण्यत्वाद्विष्णुर्ब्राह्मणउच्यते । पूर्णत्वाज्ज्ञानरूपत्वाद्ब्रह्मलोकश्चसप्रभुः ॥ २२ ॥ नमरिष्यतीतिह्यमरोनमृतोयत्ततोमृतः । ब्रह्मायमाप्तकामत्वादेवंयोवेदतंपरं । आप्तकामोऽभयश्चैवभवेद्विष्णोरनुग्रहादितिच । परमार्थेऽविचिकित्सोब्राह्मणोभवतीतिनित्यमेवतथाभवतीत्यर्थः ।

स्यनित्यमेवतथाभवतीत्यर्थः । कुतः । नहिघटोभवतीत्युक्तेनित्यमेवतथाभवतीत्यर्थःप्रतीयतइत्यतउक्तंपरमार्थइति । विषयसप्त मीयं । विपापत्वादिकंखलुब्रह्मणोविशेषणमुच्यते । तस्यचयदिभवतीत्यनेनवर्तमानमेवोच्यतेतदातद्भगवद्विशेषणपरंनस्यात् । तथात्वेभगवतइतरसाधारण्यापत्त्याउत्तमार्थत्वाभावप्रसंगात् । अतःपरमार्थेभगवतिविषयेअविचिकित्सोब्राह्मणोभवतीत्यस्यनि त्यमेवतथाभवतीत्यर्थोवक्तव्यइतिभावः । अत्रयद्यपिविपापोविरजोविचिकित्सोब्राह्मणोभवतीत्यनुवादोयुक्तः । तथापिलाघवाद विचिकित्सोब्राह्मणोभवतीत्युक्तं। नचैवंब्राह्मणोभवतीत्येववक्तव्यमितिवाच्यं। तथासतिभवतीत्यस्यतत्रैवान्वयप्रतीतिप्रसंगादिति। भगवतिप्रतिपाद्येभवतीत्यस्यनित्यभावनाभिधायकत्वंकुतइत्यतस्तत्रप्रमाणमाह ॥ **अभूदिति** ॥२४॥ **ततश्चायंखंडार्थः** ॥ सपूर्वो क्तः अयंप्रसिद्धः आत्मामुच्यमानोजीवः यत्रयदा बल्यंसर्वेषांबलकारिणंविष्णुं न्येत्यनितरामेत्यप्राप्य मृतेःपूर्वसंमोहमिवविमुग्ध त्वमेव न्येतिप्राप्नोति । मृतेःपूर्वंविमुग्धत्वंप्राप्ययदाविष्णुंप्राप्नोतीतियावत्। अथतदा एनंबल्यंविष्णुं एतेप्राणाः स्वस्वलोकस्थास्ते जःस्वरूपिणोदेवाः अभिसमायंति सचक्षुस्थोविष्णुः तेजोमात्रास्तेजस्वरूपभूताः एतादेवताः समभ्याददानश्चक्षुःस्थानाद्धृदयमे वान्ववक्रामतिगच्छति तदनंतरंभाव्यवस्थामाह ॥ **सइति** ॥ सएषचाक्षुषोदक्षिणाक्षिस्थः पुरुषः पूर्णषड्गुणोभगवान्पराङ्स्थितोव

---

भा०। अभूद्भविष्यतिभवत्येवमाद्यपदानितु। नित्यभावाभिधायीनियत्रवाच्याहरेर्गुणाइतिशब्दनिर्णये॥२४॥छ॥**इतिशारीरब्राह्मणं** ॥४॥

उ० । सयत्रायमात्माबल्यंनेत्यसंमोहमिवन्येत्यथैनमेतेप्राणाअभिसमायंतिसएतास्तेजोमात्रासमभ्याददानोहृदयमेवान्ववक्रामतिसयत्रैव चाक्षुपःपराङ्पर्यावर्ततेऽथारूपज्ञोभवति ॥ १ ॥ पुरुषः

।न्ये

हिर्व्याप्यारंकुर्वन्स्थितो यत्रयदा प्रत्यक्पर्यावर्ततेअंतरागच्छतिहृदयंप्रतिगच्छतीतियावत् अथतदा विष्ण्वाश्रितोजीवोऽरूपज्ञो भवतिरूपाज्ञोभवति तदानकिंचिज्जानातीत्यर्थः ॥ १ ॥ ननुभगवतोहृदयंप्रतिगमनेजीवःकिमपिनजानातीतिकुतइत्यतआह ॥ एकीभवतीति ॥ जीवेश्वरौविशेषेणहृदयस्थौ तयोरंशास्तुचक्षुरादिषुस्थिताः तथाचयदाचक्षुस्थःपरमात्मांशोजीवांशश्चहृदयस्थेनपरमात्मरूपेणजीवरूपेणचएकीभवति तदाऽयंजीवोनपश्यतिइत्याहुर्विद्वांसः एवंयदाघ्राणादिस्थःपरमात्मांशोजीवांशश्चहृदयस्थेनपरमात्मरूपेणजीवरूपेणचैकीभवति तदाजीवोनजिघ्रतीत्याद्याहुरितियोज्यं । तदुत्तरभाविनीमवस्थामाह ॥ तस्यहेति ॥ तस्यपरमात्मानंप्राप्तस्य एतस्याकिंचिदप्यजानतोमुच्यमानजीवस्य यद्धृदयंतस्याग्रं विष्णोःस्वरूपभूततेजसाप्रद्योततेप्रज्वलति । तेनप्रद्योतेनप्रकाशितद्वारेण एषआत्माविष्णुः जीवमादायशरीरान्निष्क्रामति । केनद्वारेणेत्याशंकायामाह ॥ चक्षुषइति ॥ यदिमुच्यमानोजीवःआदित्यलोकेचिरंरत्वामुक्तिगमनयोग्यः तर्हिजीवमादायचक्षुषएवआदित्याभिमतचक्षुर्द्वारेणैव एषआत्मा निष्क्रामतीतिसंबंधः । यदिमुच्यमानोविष्णुलोकएवब्रह्मलोकएववारमणयोग्यस्तर्हितमादायमूर्ध्नएवनिष्क्रामति । यदिश्रोत्राद्यभिमानिदेवलोकेचिरंरत्वामुक्तिगमनयोग्यस्तर्हितमादायान्येभ्यःशरीरदेशेभ्यएवतत्तद्देवाभिमतशरीरावयवेभ्यःश्रोत्रादिभ्य

---

उ० । एकीभवतिनपश्यतीत्याहुरेकीभवतिनजिघ्रतीत्याहुरेकीभवतिनरसयतइत्याहुरेकीभवतिनवदतीत्याहुरेकीभवतिनशृणोतीत्याहुरेकीभवतिनमनुतइत्याहुरेकीभवतिनस्पृशतीत्याहुरेकीभवतिनविजानातीत्याहुस्तस्यहैतस्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानिष्क्रामतिचक्षुष्टोवामूर्ध्नोवान्येभ्योवाशरीरदेशेभ्यः

एवंनिष्क्रामति । एवमुत्क्रामंतंविष्णुं अनुअनुसृत्य प्राणोमुख्यप्राणः उत्क्रामति । एवमुत्क्रामंतंप्राणमनुसृत्यसर्वेप्राणाःशरीरस्थाःदेवाअनूत्क्रामंति । उत्क्रमणकालेपरमात्माकथंगच्छतीत्यतआह ॥ सविज्ञानइति ॥ सविष्णुः सविज्ञानोविज्ञानेनजीवेन सहितोभवति । ननुपूर्वमेवजीवसाहित्यसद्भावात्किमिदानींजीवसाहित्यमुच्यतइत्यतस्तदेवविशदयति ॥ सइति ॥ सभगवान्विष्णुः विज्ञानंजीवमेवआरुह्यअन्ववक्रामतिगच्छतीत्यर्थः । एवंतंजीवमारुह्यगच्छंतंभगवंतं अनुअनुसृत्य विद्याकर्मणीविद्याकर्माभिमानिनौ समन्वारभेतेगच्छतः । नकेवलमेतावत् किंतुपूर्वप्रज्ञाचयोग्यताभिमानिनीचगच्छतीत्यर्थः । अत्रविद्याभिमानिनौ ब्रह्मवायू कर्माभिमानीगरुडः योग्यताभिमानिनीरमेतिज्ञेयं ॥ २ ॥ तेनैषनिष्क्रामतीत्युक्तंनिष्क्रमणंविविच्यदर्शयति ॥ तद्यथेति ॥ तत्निदर्शनं यथा तृणजलूका तृणस्यांतमवसानंगत्वा अन्यमाक्रमंआक्रम्यतइत्याक्रमोवष्टंभस्तमाक्रमंतृणांतरंआक्रम्यप्राप्य आत्मानंपूर्वतृणात्उपसंहरत्यादत्ते पूर्वतृणंपरित्यजतीतियावत् । एवमेवायमात्मा विद्यादानेनअविद्यांगमयित्वा इदंशरीरंनिहत्यपरित्यज्य अन्यमाक्रमंजीवस्यसूक्ष्मंरूपं आक्रम्यप्राप्य आत्मानंजीवस्यस्थूलदेहात्उपसंहरतिआदत्ते । स्थूलदेहंपरित्यजतीतियावत् ॥ ३ ॥ ननुपरमात्मामुक्तययोग्येभ्योपिमुक्तिंप्रयच्छतिकिं नेतिसदृष्टांतमाह ॥ तद्यथेति ॥ तद्यथावक्ष्यमा



---

उ० । तमुत्क्रामंतंप्राणोनूत्क्रामतिप्राणमनूत्क्रामंतꣳसर्वेप्राणाअनूत्क्रामंति सविज्ञानोभवतिसविज्ञानमेवान्ववक्रामतितंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच ॥ २ ॥ तद्यथातृणजलूकातृणस्यांतंगत्वाअन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳशरीरंनिहत्याविद्यांगमयित्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥ तद्यथा

णनिदर्शनंयथा पेशस्कारीस्वर्णकारः पेशसः सुवर्णस्य मात्रामंशमुपादाय अन्यत् अन्यदिवनवतरंप्रागननुभूतत्वात् कल्याणतरंमलापकर्षणात् रूपंरुचकादिकं तनुतेकरोति एवमेवायमात्मापरमात्मा जीवास्यस्वर्णमलस्थानीयमिदंशरीरंनिहत्य अविद्यांगमयित्वाऽन्यदिवनवतरंप्रागननुभूतत्वात् कल्याणतरंरूपंतत्तद्योग्यंकुरुते । तदेवाह ॥ पित्र्यमिति ॥ पितृजीवस्यपित्र्यमेवरूपं गंधर्वजीवस्यगांधर्वमेवरूपं देवजीवस्यदैवमेवरूपं प्रजापतेःरुद्रस्यप्राजापत्यंरूपं ब्रह्मणश्चतुर्मुखस्यब्राह्ममेवरूपं अन्येषांभूतानांमनुष्योत्तमादीनांतत्तद्योग्यमेवरूपंकरोतीतिप्रत्येकंसंबंधः । अत्रसुवर्णस्यैवयथारुचकादिभावःसुवर्णकारेणक्रियते नयस्यकस्यचिद्द्रव्यस्य तथामुक्तियोग्यानामेवेश्वरेणमुक्तत्वंक्रियते नान्येषामित्युच्यते ॥ ४ ॥ एवंमोक्षदस्यपरमात्मनोमहिमानमाह ॥ सवाइति ॥ मुक्तप्राप्यत्वेनप्रकृतःपरमात्मासदूरस्थोवा अयंसमीपस्थः आत्माव्याप्तः ब्रह्मगुणपरिपूर्णं विज्ञानमयइत्यादौतेजोमयइत्यादिवत् अविज्ञानमयइत्याद्यपिग्राह्यं । विज्ञानमयःपूर्णविज्ञानस्वरूपः प्राचुर्यस्यस्वरूपत्वस्यचमयडर्थत्वात् । अविज्ञानमयःयस्यबुद्धिर्बुद्धितत्वात्मिकानभवति मनोमयःसर्वमंतृस्वरूपः यस्यमनोमनस्तत्वात्मकंनभवतिसोऽमनोमयः प्राणमयःपूर्णबलस्वरूपः यस्यप्राणअहंकारकार्यप्राणतत्वात्मकोनभवतिसोप्राणमयः चक्षुर्मयःसर्वद्रष्टृस्वरूपः यस्यचक्षुश्चक्षुस्तत्वात्मकंनभवतिसोचक्षुर्मयः श्रोत्रमयःसर्वश्रोतृस्वरूपः यस्यश्रोत्रंश्रोत्रतत्वात्मकंनभवतिसोश्रो

---

उ० । पेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरꣳरूपंतनुतएवमेवायमात्मेदꣳशरीरंनिहत्याविद्यांगमयित्वान्यन्नवतरंकल्याणतरꣳरूपंकुरुतेपित्र्यंवागांधर्वंवादैवंवाप्राजापत्यंवाब्राह्मंवान्येषांवाभूतानां ॥ ४ ॥ सवाअयमात्माब्रह्मविज्ञानमयोमनोमयःप्राणमयश्चक्षुर्मयःश्रोत्रमयः

त्रमयः पृथिवीमयःपृथिवीवत्सर्वाधारः सुगंधस्वरूपोवा यस्यगंधःपार्थिवोनभवतिसोपृथिवीमयः आपोमयःसर्वतृप्तिकरः यस्यतृप्तिरबात्मिकानभवतिसोनापोमयः वायुमयःसर्वकर्तृस्वरूपः यस्यबलंवाय्वात्मकंनभवतिसोऽवायुमयः आकाशमयः अवकाशप्रदातृस्वरूपः यस्याकाशआकाशतत्वात्मकोनभवतिसोऽनाकाशमयः तेजोमयःपूर्णतेजःस्वरूपः अतेजोमयःयस्य तेजोनाग्नेयंभवति काममयःसृष्ट्यादीच्छास्वरूपः अकाममयःप्राकृतेच्छाशून्यः क्रोधमयःसर्वदुष्टप्रतीपस्वरूपः अक्रोधमयःजीवक्रोधसदृशक्रोधशून्यः धर्ममयःआनंदादिधर्मस्वरूपः अधर्ममयःप्राकृतसुखादिधर्मशून्यः सर्वमयःप्रकृत्यादिसर्वप्रधानःसर्वगुणस्वरूपश्च, प्रकृत्यादिसर्वात्मकोनभवतीतिवा यस्यगुणाःसर्वविलक्षणाइतिवाअसर्वमयः तत्अतीतवर्तमानकालयोरेकप्रकारं यद्ब्रह्मांडाच्छरीराद्बहिरंतश्चएकप्रकारं एतत्वर्तमानभविष्यकालयोःएकप्रकारं इदंमयोवर्तमानजगत्प्रधानः वर्तमानस्वरूपश्च अदोमयअतीतानागतजगत्प्रधानः अतीतानागतस्वरूपश्च । यदर्थंमहिमोक्तिस्तदाह ॥ इतीति ॥ इतिएवंमहिमविशिष्टोयतःअतःभगवान्यथाकारीजीवंयथाकरोति यथाचारीआचारयति तथाभवतिजीवः तदेवविवृणोति ॥ साधुकारीति ॥ यदिसभगवान्साधुकारीजीवंसाधुंकरोति तदासजीवःसाधुर्भवति पापकारीयदिजीवंपापंकरोति तदा



---

उ० । पृथिवीमयआपोमयोवायुमयआकाशमयस्तेजोमयोतेजोमयःकाममयोकाममयःक्रोधमयोक्रोधमयोधर्ममयोधर्ममयस्सर्वमयस्तद्यदेतदिदंमयोदोमयइतियथाकारीयथाचारीतथाभवतिसाधुकारीसाधुर्भवतिपापकारीपापोभवति

सपापोभवतीत्यर्थः । परमात्मापिस्वतोसाधुंसाधुंकरोतिस्वतोपापंपापंकरोतिकिंनेत्याह ॥ पुण्यइति ॥ ईश्वरप्रेरितेनपुण्येन जीवःपुण्योभवति । तत्प्रेरितेनपापेनपापोभवति । यद्वाईश्वरएवजीवंसाधुंपापंचयदिकरोति तर्हिकृतंपुण्यपापाभ्यामित्यत आह ॥ पुण्यइति ॥ ईश्वराधीनत्वंजीवस्यवृद्धसंमत्याद्रढयति ॥ अथोइति ॥ अथोतस्मादेवजीवस्यईश्वराधीनत्वादेवखलु अयंपुरुषोजीवः काममयोविष्णोरिच्छाधीनइत्याहुर्विद्वांसः । कुतः सभगवान्यथाकामोभवति । तत्क्रतुस्तत्कामोजीवोभवति यद्वासभगवान्यथाकामोभवति तत्क्रतुस्तन्निष्ठावान् इत्थंकरिष्याम्येवेतिनिश्चयरूपकामवान्जीवोभवति । यत्क्रतुर्यन्निष्ठावा ञ्जीवोभवतितत्तादृशंकर्मकुरुते । यादृशंकर्मकुरुतेतादृशंफलंप्राप्नोति । अतःपरमात्मेच्छाधीनोजीवइत्यर्थः ॥ ५ ॥ निष्ठानुसा रेणकर्मकुरुतेकर्मानुसारेणफलंप्राप्नोतीत्युक्तार्थेमंत्रोस्तीत्याह ॥ तदेषइति ॥ तत्तत्रोक्तार्थे एषवक्ष्यमाणःश्लोकोभवति । त दुपादत्ते ॥ तदेवेति ॥ अस्यशरीरिणः लिंगंशरीरंमनश्च यत्रयस्मिन्फले निषक्तंनितरांसक्तं तत्रफले सक्तःपुरुषः तदेवफलंतत्साधनीभूतस्वकृतकर्मणासह एति । अयंपुरुषः इहलोके यत्किंचित्कर्मकरोति तस्यकर्मणः अंतमवसानं प्राप्य तस्माल्लोकात्कर्मफलभूतात्स्वर्गादेः पुनरस्मैलोकाय एतिआगच्छति किमर्थं कर्मणेकर्मकर्तुमिति । मुक्तामुक्तयो

---

उप० । पुण्यःपुण्येनकर्मणाभवतिपापःपापेनाथोखल्वाहुःकाममयएवायंपुरुषइतिसयथाकामोभवतितत्क्रतुर्भवतितत्कर्मकुरुतेयत्कर्मकुरुते तदभिसंपद्यते ॥ ५ ॥ तदेषश्लोकोभवति । तदेवसक्तःसहकर्मणैतिलिंगंमनोयत्रनिषक्तमस्य । प्राप्यांतंकर्मणस्तस्ययत्किंचेहकरोत्ययं । तस्माल्लो कात्पुनरेत्यस्मैलोकायकर्मणे

रुभयोरपिप्रकृतत्वात्कोवाअत्रप्रतिपाद्यइत्यतोब्राह्मणंस्वयमाह ॥ इतिनुकामयमानइति ॥ निरूपितइतिशेषः । एवंसंसारिस्वरूपंनिरूप्यमुक्तस्वरूपमाह ॥ अथेति ॥ अथशब्दःसंसारिप्रकरणविच्छेदार्थः । योकामःअकारवाच्यविष्णुकामःनिष्कामःअयोग्यकामरहितः योग्यकामस्यापिनसर्वस्यसर्वदासमुद्भूतिः किंतुकस्यचित्कदाचिदेव । सायोग्यकामस्यकादाचित्कसमुद्भूतिरपिभगवत्कामानांविनानेत्यकामयमानः आप्ताःकामाःकाम्यायेनासावाप्तकामः आत्मैवकामःकाम्यश्चिदानंदात्मकत्वादित्यात्मकामोमुक्तः । तस्यप्राणामुक्त्यनंतरंपुनःनोत्क्रामंति । ननुजीवभावपरित्यागेनमुक्तस्यपरब्रह्मवदेवस्वातंत्र्यप्राप्तौकथमुक्तमकामत्वादिकं तदपरित्यागेपिमुक्तस्यान्यदाप्राणानामुत्क्रांत्यभावेपिमहाप्रलयेस्यादित्यतआह ॥ ब्रह्मैवेति ॥ समुक्तोब्रह्मैवसन्जीवएवसन्जीवभावमविहायैवपरंब्रह्माप्येतिप्रतिप्रलयेपरंब्रह्माप्नोतीत्यर्थः ॥ ६ ॥ नतस्यप्राणाउत्क्रामंतीत्युक्तेमुक्तस्यमरणाभावेब्रह्माप्येतीत्युक्तब्रह्मप्राप्तौचप्रमाणमाह ॥ तदेषइति ॥ मंत्रंपठति ॥ यदेति ॥ अस्यजीवस्ययेहृदिश्रिताःअंतःकरणस्थाः कामाः तेसर्वेयदाप्रमुच्यंते तदामुक्तोभवति । अनेनमुक्तस्याकामत्वनिष्कामत्वादिकंकुतइत्यत्रहेतुरुक्तोभवति । अथमुक्त्यनंतरं मर्त्यःपूर्वंमरणशीलः मुक्त्यनंतरममृतोभवति । कदाचिदस्यमृतिर्नभवतीत्यर्थः । अत्रमुक्तौप्रलयेवा ब्रह्मसमश्नुतेप्राप्नोति । ननुनतस्यप्राणाउत्क्रामंतीतिमुक्तस्यमरणाभावउक्तः सनयुक्तः । तथात्वेईश्वरान्मुक्त

---

उप० । इतिनुकामयमानोथाकामयमानोयोकामोनिष्कामआप्तकामआत्मकामोनतस्यप्राणाउत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येति ॥ ६ ॥ तदेपश्लोकोभवति । यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिश्रिताः । अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥

स्यविशेषाभावापत्तेरितिचेत् न मुक्तस्यपूर्वंशरीरिणएवसतःशरीरत्यागानंतरमेवाशरीरत्वं परमात्मनस्तुसर्वदाअशरीरत्वमिति वैलक्षण्यादितिभावेनाह ॥ तद्यथेति ॥ तत्निदर्शनंयथा अहिःसर्पोनिलीयतेस्यामितिअहिनिलयनीसर्पत्वक् वल्मीकेप्रत्यस्ताप्रक्षिप्तामृतासर्पेणत्यक्ताशयीत एवमेवेदंशरीरंजीवेनपरित्यक्तंशेते । अथशरीरत्यागरूपमुक्त्यनंतरमेव अयंजीवः अशरीरोभवति । प्राणअमृतःकदापिनमृतः । कःप्राणइत्यतआह ॥ ब्रह्मैवेति ॥ नकेवलंप्राणाख्यंपरंब्रह्मैवनित्यमुक्तं किंतुश्रीरपीत्याह ॥ तेजइति ॥ तेजःश्रीरेवामृतंकदापिनमृतमित्यर्थः । एवंश्रुतोराजागुरुदक्षिणांप्रतिजज्ञेइत्याह ॥ सोहमिति ॥ ७ ॥ भगवान्मोक्षदातेत्याद्युक्तार्थेमंत्राःसंतीत्याह ॥ तदेतइति ॥ तत्तत्रपूर्वोक्तार्थे एतेवक्ष्यमाणाःश्लोकाः प्रमाणत्वेनभवंति । तानुपादत्ते ॥ अणुरित्यादिना ॥ अणुर्विततोव्याप्तः पंथाःसुखहेतुप्राप्तिमान् पुराणोऽनादिः मांश्रियंश्रियास्पृष्टः मयैवश्रियैवानुवित्तोज्ञातः ऊर्ध्वःसर्वविशिष्टोभगवान्यः तेनतत्प्रसादेन धीराब्रह्मविदः इतःसंसाराद्विमुक्ताः स्वर्गंस्वरूपभूतरमणज्ञानात्मकंलोकंवैकुंठादिकमपि यंतिप्राप्नुवंतीत्यर्थः ॥ ८ ॥ ननुभगवज्ज्ञानाद्रमाज्ञानान्निवृत्तकर्मानुष्ठानाच्चमोक्षोभविष्यति तत्रकाभगवत्प्रसादस्यापेक्षा अतःकथंभगवतोनिरुक्तपथित्वमित्यतःशुक्लस्यनीलस्येत्युक्तार्थेमंत्रंवदन्नाह ॥ तस्मिन्निति ॥ तस्मि

उप० । तद्यथाहिनिलयनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेदꣳशरीरꣳशेतेऽयमशरीरोऽमृतःप्राणोब्रह्मैवतेजएव सोहंभगवतेसहस्रंददामीति होवाचजनकोवैदेहः ॥ ७ ॥ तदेतेश्लोकाभवंति । अणुःपंथाविततःपुराणोमाꣳस्पृष्टोनुवित्तोमयैव । तेनधीराअपियंतिब्रह्मविदःस्वर्गंलोकमितऊर्ध्वोविमुक्ताः ॥ ८ ॥ तस्मिंच्छुक्लमुतनीलमाहुः

न्हरौ शुक्कंवासुदेवाख्यं । नीलमनिरुद्धाख्यं पिंगलंसंकर्षणाख्यं हरितंप्रद्युम्नाख्यं लोहितंनारायणाख्यमितिपंचरूपाणिसंतीत्याहुः । एषपंचरूपोभगवान्पंथाब्रह्मणाचतुर्मुखेनाऽनुवित्तोज्ञातः हेतिप्रमाणसिद्धिमाह । किंप्रकृतइत्यतःपथित्वमेवदर्शयति ॥ तेनेति ॥ ब्रह्मवित्परब्रह्मज्ञानी तैजसःमहातेजोभूतश्रीस्वरूपज्ञानी पुण्यकृत्भगवत्कर्मकर्तापि तेनैवभगवतातत्प्रसादेनैव स्वर्गं लोकमित्युक्तांगतिमेतियस्मात् तस्माद्भगवान्पंथाइत्यर्थः ॥ ९ ॥ एवंयथावत्परमात्मादिज्ञानंभगवत्प्रसादद्वारामोक्षसाधनमित्युक्तं नकेवलमेतावत् किंनामान्यथाज्ञानिनिंदासमुच्चितमेवेतिभावेनयथायज्ज्ञानस्येवान्यथाज्ञाननिंदायाअप्यावश्यकत्वोपपादनायान्यथाज्ञाननिंदनस्यान्यथाज्ञानापेक्षयाधिक्येनानर्थसाधनत्वंमंत्रेणाह ॥ अंधंतमइति ॥ येअविद्यांविरुद्धविद्यांमिथ्याज्ञानंतद्विषयमन्यथाकारंब्रह्मनिर्गुणत्वादिकमुपासते तेअंधंतमःप्रविशंति । येविद्यायांयथार्थज्ञानएवरताः नत्वन्यथाज्ञाननिंदांकुर्वंति तेततोन्यथोपासकाद्भूयएवकिंचिद्विशेषेणतमःप्रविशंतीत्यर्थः ॥ १० ॥ ननुभगवज्ज्ञानंकदासंपादनीयमितिचेत् सम्यग्ज्ञानिन्युपदेष्टरिसत्येव अन्यथाअनर्थसद्भावादितिभावेनतत्रमंत्रमाह ॥ अनंदाइति ॥ यद्वानकेवलमन्यथाज्ञानिनस्तदनिंदकस्यचतमःप्राप्तिः किंतुगुरूपदेशोल्लंविनश्च अतोभगवदुपदेष्टरिसतिभगवत्स्वरूपंज्ञातव्यमेवेतिभावेनतत्रमंत्रमाह ॥ अनंदाइति ॥

---

उप० । पिंगलंहरितंलोहितंच । एषपंथाब्रह्मणाहानुवित्तस्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥ अंधंतमःप्रविशंतियेऽविद्यामुपासते । ततोभूयइवतेतमोयउविद्यायांरताः ॥ १० ॥ अनंदानामतेलोकाअंधेनतमसावृताः ।

बुधःबोधयतीतिभुत्ज्ञानीतस्मात्ज्ञानिनो येभगवत्स्वरूपमविद्वांसोजनाः तेप्रेत्य अंधयतीत्यंधेनतमसावृताः अनंदाः सुखवि रुद्धदुःखरूपाः तेप्रसिद्धायेलोकाः तानभिगच्छंतीत्यर्थः ॥ ११ ॥ ७ ॥ येविद्यामुपासतेइत्यन्यथोपासकस्यतमःप्राप्तिरि त्युक्तं तत्रकोयमन्यथाकारोयदुपासकस्यतमःप्राप्तिरितिचेत् जीवेश्वराभेदएवान्यथाकारः तत्पक्षेदोषसद्भावादितिभावेनतत्प क्षेदोषमाह ॥ आत्मानमिति ॥ चेद्यदि पुरुषोजीवः अयंपरमात्माअहमस्मीतिपरमात्मानंविजानीयात्विज्ञातुंयोग्यःस्यात् तर्हिंकिमिच्छन् तस्यैवविवरणंकस्यकस्मैकामायेति कथमितियावत् शरीरंशरीरच्छेदादिकमनुसंज्वरेत्दुःखीभवेदित्यर्थः । यदि जीवःस्वस्यपरमात्मत्वानुसंधानयोग्यःस्यात्तर्हिंदुःखीनस्यात् परमात्मनोदुःखाभावादितिभावः ॥ १२ ॥ भगवज्ज्ञानंमोक्ष साधनमित्यत्रमंत्रांतरंपठति ॥ यस्येति ॥ हियस्मात्सआत्मासर्वस्यकर्ता तस्माद्विश्वकृत्वायोरपिकर्ता अस्मिन्संदोहेदेहेविद्य मानंयद्गहनंहृद्गुहास्थानंतस्मिन्प्रविष्टः प्रतिबुद्धः सर्वज्ञः सआत्मा यस्ययेनोपासकेनानुवित्तोज्ञातः तस्योपासकस्यउएकः प्रधानः सएवलोकोभवति सकः योलोकः परमात्मनइतिशेषः ॥ १३ ॥ सद्गुरूपदेशेनैवज्ञानंसंपादनीयंतदुल्लंघनेचानर्थप्राप्ति रितीममर्थंमंत्रांतरेणद्रढयति ॥ इहेति ॥ बुधइत्युक्तोज्ञानीइहेतिपरामृश्यते इहज्ञानिनिबोधकेविद्यमानएव संतःसज्जनावयं

उप० । तांस्तेप्रेत्याभिगच्छंतियेऽविद्वांसोबुधोजनाः ॥ ११ ॥ आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः । किमिच्छन्कस्यकामायशरी रमनुसंज्वरेत् ॥ १२ ॥ यस्यानुवित्तःप्रतिवुद्धआत्मास्मिन्संदो(हे)वेगहनेप्रविष्टः । सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकःसउलोकएव ॥ १३ ॥ इहैवसंतोथविद्मस्तद्वयंनचेदवेदीर्महतीविनष्टिः ।

तत्( परं )ब्रह्म विद्मः जानीमः । वेदपुरुषवचनमेतत् । कालांतरेसंपादयिष्येब्रह्मज्ञानंइतिवदंतंप्रत्याह ॥ नेति ॥ तस्मिन्बोधकेसत्यपि चेद्यदि नावेदीः परंब्रह्मनजानीयाः तर्हिमहतीविनष्टिः । सद्गुरूपदेशजज्ञानस्यकिंफलमित्यतआह ॥ यएतदिति ॥ एतत्परंब्रह्म सद्गुरूपदेशेनेतिशेषः । नचेदवेदीर्महतीविनष्टिरित्युक्तमेवविवृणोति ॥ अथेतरेइति ॥ गुरूपदेशोल्लंघिनइत्यर्थः। दुःखमेवअंधंतमइत्यर्थः ॥ १४ ॥ ज्ञानमाहात्म्यप्रतिपादकमंत्रमाह ॥ यदेति ॥ येभूतभव्यस्येशानंदेवंक्रीडादिगुणमे(त)नमात्मानंयदांजसानुपश्यंति ततस्तदनंतरं । नविजुगुप्सतेभयाभावादात्मानंगोप्तुंनेच्छति । यथोक्तं । यःपश्येत्सभयाभावादात्मानंगोप्तुंनेच्छतीति ॥ १५ ॥ तद्यदेतदिदंमयमित्यत्रतदेतच्छब्दाभ्यामुक्तेविष्णोर्भूतभविष्यतद्वर्तमानकालेष्वेकप्रकारत्वे अमृतः प्राणइत्युक्तामृतत्वेचमंत्रंपठति ॥ यस्मादिति ॥ अहोभिः सहसंवत्सरोयस्मादर्वाक्परिवर्ततेयस्मिन्स्वव्यापारंकर्तुमसमर्थइतियावत् तज्ज्योतिषांज्योतिः ज्योतिष्प्रदं आयुरचलममृतंनित्यमुक्तं देवाउपासते हेतिप्रसिद्धिमाह ॥ १६ ॥ ब्रह्मज्ञानस्यैवमोक्षसाधनत्वेमंत्रांतरंपठति ॥यस्मिन्निति॥ यस्मिन्पंचपंचजनाः प्रतिपुरुषंपंचजनाःप्रतिष्ठिताः आकाशोमूलप्रकृतिश्च प्रतिष्ठितः तमेवात्मानंमन्येविजानीयां किंतज्ज्ञानेनेत्यतआह । अमृतंनित्यमुक्तंब्रह्मविद्वानमृतोमुक्तोभवतीति ॥ १७॥ आत्मनि 631

---

उप० । यएतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवापियंति ॥ १४ ॥ यदैतमनुपश्यंत्यात्मानंदेवमंजसा । ईशानंभूतभव्यस्यनतोविजुगुप्सते ॥ १५ ॥ यस्मादर्वाक्संवत्सरोहोभिःपरिवर्तते । तद्देवाज्योतिषांज्योतिरायुर्होपासतेऽमृतं ॥ १६ ॥ यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितः । तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोऽमृतं ॥ १७ ॥

प्रतिष्ठिताःपंचजनाःकइतिचेत् ज्योतिषांज्योतिरितिज्योतिर्नियामकत्वोक्त्यापंचानांमध्येज्योतिरेकमुक्तमेव इतरेप्राणादयएवे तिभावेनभूतलादेर्घटाद्याधारवत् नपंचजनाधारत्वंपरमात्मनःकिंतुतन्नियामकत्वेनेतिवदन् तथापरमात्मज्ञानिनःफलमाह ॥ **प्राण स्येति**॥प्राणंप्राणत्वप्रदंनिचिक्युःप्राप्तवंतः॥१८॥ननुमोक्षसाधनंब्रह्मापरोक्षज्ञानंकेनकरणेनसंपादनीयमित्यतआह॥**मनसैवेति**॥ शुक्लस्यनीलस्यइत्यादिनाबहुरूपत्वोक्त्यारूपाणांपरस्परंमूलरूपेणचसवाअयमात्माब्रह्मविज्ञानमयइत्यादिनागुणानामुक्त्यागुणा नांपरस्परंगुणिनाचभेदःप्राप्तः । तन्निराचष्टे ॥ **नेहेति** ॥ इहब्रह्मणि किंचनरूपगुणादि नानाभिन्नं नास्तीत्यर्थः । कुतोनास्ती तिचेत् यतोभेदाभेददर्शिनोप्यनर्थसद्भावः किमुभेदमात्रदर्शिनइतिभावेनभेदाभेददर्शिनोऽनर्थप्रमाणेनाह ॥ **मृत्योरिति** ॥ यइहब्रह्मणिरूपंगुणादिकंनानेवभिन्नाभिन्नंपश्यति समृत्योर्मृत्युमंधंतमःप्राप्नोतीत्यर्थः ॥ १९ ॥ तर्हिकथंभगवान्ज्ञातव्यइत्यत आह ॥ **एकधैवेति** ॥ यस्माद्भेदज्ञानेनर्थसद्भावः तस्मादप्रमेयंपरिमितिरहितं ध्रुवंनित्यमेतद्ब्रह्मैकप्रकारेणैवद्रष्टव्यमित्यर्थः । परमात्मापरोक्षज्ञानेमनःकरणमित्युक्तं नतावन्मात्रेणतद्भवति किंतुश्रवणादिसाधनादपीतिभावेनसाधनांतरमाह ॥**विरजइति**॥ धीरोमनोधैर्यवान् ब्राह्मणोब्रह्माणनयोग्यो विरजोनिर्दोषः आकाशान्मूलप्रकृतेः परउत्तमः केनापिप्रकारेणनजायतइत्यजः महान्परिमाणतो ध्रुवोनित्यःतमेवआत्मानमेव परोक्षतोविज्ञाय प्रज्ञामपरोक्षज्ञानंकुर्वीतसंपादयेदित्यर्थः।तमेवविज्ञायेतिपरमात्मन

632

---

उप० । प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रं मनसोयेमनोविदुस्तेनिचिक्युर्ब्रह्मपुराणमग्र्यं ॥ १८ ॥ मनसैवानुद्रष्टव्यंनेहनानास्तिकिंच न । मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ १९ ॥ एकधैवानुद्रष्टव्यमेतदप्रमयंध्रुवं । विरजःपरआकाशादजआत्मामहान्ध्रुवः । तमेवधीरो

एववेदादिनाविज्ञेयत्वमुक्तंतद्व्यावर्त्यमाह ॥ नेति ॥ शब्दान्वेदादिरूपान्वहून्मुखतोहरहिरण्यगर्भादिरूपब्रह्वर्थप्रतिपादकान्नानुध्यायेत्नानुचिंतयेत्। कुतः तद्ब्रह्वर्थप्रतिपादकवेदाध्ययनादिकं वाचोवागिंद्रियस्य विग्लापनंश्रमकरमित्यर्थः। इतिशब्दःश्लोकसमाप्तिद्योतकः ॥ २० ॥ नन्विदंप्रकरणंचतुर्मुखपरमेवेतिप्रतीयते । अजआत्मामहानित्यजादिशब्दश्रणात् । तेषांचविष्णुजातत्वयोगेनआत्माविरिंचिःसुमहानित्यभिधानेनमहत्तत्वाभिमानित्वेनचतत्रसंभवादित्यतआह ॥ सवाएषइति ॥ एषमंत्रोक्तोमहानजआत्मा सवैसएव सकइत्यतोयोयंविज्ञानमयःपुरुषःप्राणेषुहृद्यंतर्ज्योतिरित्युक्तएवेतिभावेनतद्वाक्यमर्थतोऽनुवदति ॥ योयमिति ॥ योयंविज्ञानपूर्णःप्राणेषुशेतेतिष्ठति यएपप्रसिद्धः अंतर्हृदयेहृदयांतर्वर्तमानआकाशस्तस्मिन्शेतेइत्युक्तस्सएवेत्यर्थः । पूर्वोक्तश्चभगवानेवेतिभावः । ननुयदुक्तंभगवज्ज्ञानमेवमोक्षसाधनमिति । तन्न । वेदाध्ययनयज्ञदानतपआदीनामपिमोक्षसाधनत्वश्रवणादित्यतोनतेषांसाक्षान्मोक्षसाधनत्वंकिंतुतत्साधनब्रह्मज्ञानसाधनत्वमेवेतिभावेनयन्महिमविशिष्टभगवज्ज्ञानंमोक्षसाधनंतदुक्तिपूर्वकंवेदानुवचनादेर्ब्रह्मज्ञानसाधनत्वमाह ॥ सर्वस्येत्यादिना ॥ अत्रसर्वत्रयच्छब्दोनुवर्तनीयः । तस्यतमेतमितितच्छब्देनान्वयः । यद्वासवाएषमहानजःइत्यादिकमसंभेदायेत्यंतंमोक्षसाधनज्ञानविषयभगवन्माहात्म्यप्रतिपादकमेव । एवंसतिप्रथमवाक्येयच्छब्दोनुकर्षणीयः । तथाचायमर्थः। यःसर्वैमुक्तनियामकत्वेनोक्तः एषमहानजआत्मा यश्चायंप्रसि

---

उप० । विज्ञायप्रज्ञांकुर्वीतब्राह्मणः। नानुध्यायेद्बहूञ्छब्दान्वाचोविग्लापनꣳहितदिति ॥ २० ॥ सवाएपमहानजआत्मायोयंविज्ञानमयः प्राणेपुयएषोंतर्हृदयआकाशस्तस्मिञ्छेते । सर्वस्यवशीसर्वस्येशानः

द्धोविज्ञानपूर्णः प्राणेषुयएषोंतर्हृदयेहृदयस्यांतराकाशस्तस्मिंश्शेते यश्चसर्वस्ववशेवर्ततइतिसर्वस्यवशी सर्वस्येशस्यब्रह्मरुद्रादेरनश्चेष्टकइतिसर्वस्येशानः सर्वस्यब्रह्मरुद्रादेःसकाशादधिअधिकोगुणैः सर्वस्यपतिःपालकश्चेतिसर्वस्याधिपतिः यश्चसप्रसिद्धः जीववत्साधुनाकर्मणातत्फलेनसुखेनभूयान्नभवति नित्याभिपूर्णत्वात् असाधुनाकर्मणातत्फलेनदुःखेनकनीयान्नोएवभवति तदभोक्तृत्वात् यश्चैषःप्रसिद्धः सर्वेश्वरः सर्वेश्वरत्वंनसादि किंतुयश्चैषभूतएवाधिपतिर्नास्याधिपत्यमादिमदितिभूताधिपतिःयश्चैषभूतएवपालःपालकः यश्चैषएषांलोकानांअसंभेदायासांकर्यायएषांलोकानांविधरणःविधारणसमर्थः नकेवलंसामर्थ्यमात्रं किंतुएषांलोकानांसेतुराश्रयश्च तमेतमुक्तगुणवंतंभगवंतं ब्राह्मणाःब्रह्माणनयोग्याः वेदानुवचनेनवेदाध्ययनेन यज्ञेन दानेन तपसाकायक्लेशात्मकेन अनाशकेनानशनव्रतेन विविदिषंतिवेत्तुमिच्छंतीति। अनाशकेनशरीरनाशाकरणेनतपसेतिविशेषणविशेष्यभावोवा । अश्वेनजिगमिषतीत्यत्रयथाश्वस्यधात्वर्थगमनसाधनत्वमेव नत्विच्छासाधनत्वं एवमत्रापियज्ञादेर्धात्वर्थवेदनसाधनत्वमेवोच्यतइत्यवगंतव्यं । वेदनेनकिंस्यादित्यतआह ॥ एतमेवेति ॥ एतंपूर्वोक्तमहिमानंपरमात्मानमेव विदित्वामुनिर्ज्ञानस्वरूपोमुक्तोभवतीतियावत् । किंचै(तं)नंभगवंतमेव लोकमाश्रयं इच्छंतः प्रार्थयंतः प्रव्राजिनःप्रव्रजनशीलाः प्रव्रजंतिनिषिद्धकाम्यकर्मत्यागलक्षणसंन्यासंस्वीकुर्वंति यद्वालोकमाश्रयमिच्छंतःप्रव्रजिन

उप० । सर्वस्याधिपतिः सनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयानेपसर्वेश्वरएपभूताधिपतिरेपभूतपालएपसेतुर्विधरणएषांलोकानामसंभेदायतमेतंवेदानुवचनेनब्राह्मणाविविदिपंतियज्ञेनदानेनतपसाऽनाशकेनैतमेवविदित्वामुनिर्भवत्येतमेवप्रव्राजिनोलोकमिच्छंतःप्रव्रजंति

शीलाः एतमेवप्रतिप्रव्रजंतिगच्छंति। श्रुतिःस्वोक्तार्थेपूर्वाचारंप्रमाणयति ॥ एतदिति॥ तदेतत् भगवानेवाश्रयइतिप्रमेयं विद्वांसःपूर्वेपि प्रजांउपलक्षणमेतत् निषिद्धंवस्तुनकामयंते हस्मवाइतिनिपातत्रयंसुप्रसिद्धिद्योतकं प्रजाद्यकामनेकारणंनिरूपयति ॥ किमिति ॥ येपांनोऽस्माकमयंपूर्वोक्तमहिमविशिष्टोभगवानात्मास्वामी अयंलोकआश्रयश्च तेवयंकिंप्रजयाकरिष्याम इतिभावेनप्रजांनकामयंतइतिसंबंधः । तर्हितेकिंकृतवंतइत्यतआह ॥ तेहीति ॥ व्याख्यातमेतत् । यज्ज्ञानादेषणात्रयव्युत्थानलक्षणोमोक्षोयस्माच्चानंदादिभिक्षातस्यमहिमानमाह ॥ सएषइत्यादिना ॥ महिमांतरमाह ॥ एतमिति ॥ अहंपापमकरवंकृतवानितिअहंकल्याणमकरवंकृतवानितिएतेभावनेएतमुभगवंतमेवनैवतरतोनैवव्याप्नुतःनजीवमपि जीवंतुव्याप्नुतएव । जीवंकिंस्वातंत्र्येणव्याप्नुते नेत्याह ॥ अतःपापमिति ॥ एवेत्यनुवर्तते । अहंपापमकरवमितियच्चिंतनंजीवस्यतदतएवपरमेश्वरादेव कल्याणमकरवमितियच्चिंतनंजीवस्यतदप्यतएवेत्यर्थः । ननुपरमात्मापुण्यपापप्राप्तावपितादृशींभावनांकरोतिकिंनेत्याह ॥ उभेइति ॥ एपपरमात्मैव एतेपुण्यपापेतरतिनित्यतीर्णोवर्तते । ननुभगवतःपुण्यपापतरणंनतावदनाश्रयत्वं सर्वाश्रयत्वात् नापितदननुभवः सर्वज्ञत्वात् अतःकिंतत्तरणंनामेत्यतआह ॥ नैनमिति ॥ कृताकृतेनित्यकर्मानुष्ठानाननुष्ठा 635

उप० । एतद्धस्मवैतत्पूर्वेविद्वांसःप्रजांनकामयंतेकिंप्रजयाकरिष्यामोयेषांनोयमात्मायंलोकइतितेहस्मपुत्रेषणायाश्चवित्तेषणायाश्चलोकेषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंति याह्येवपुत्रेषणासावित्तेषणायावित्तेषणासालोकेषणोभेह्येतेईषणेएवभवतः सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्यतेऽसितोनव्यथतेनरिष्यत्येतमुहैवैतेनतरतइत्यतः पापमकरवमित्यतःकल्याणमकरवमित्युभेउहैवैपएतेतरतिनैनं

ननिमित्तकपुण्यपापे । एनंभगवंतंनतपतःतत्कृतनीचोच्चत्वादिलक्षणविकारोनास्तीत्यर्थः ॥ २१ ॥ उक्तार्थेप्रमाणमप्यस्तीत्याह
॥ तदेतदिति ॥ ब्रह्मणावेदेनगम्यतइतिब्राह्मणोविष्णुः तस्यैषपूर्वोक्तोमहिमानित्यः कुतः शुभकर्मणानवर्धते पापकर्मणा
नोकनीयान् । अस्त्वेवंभगवत्स्वरूपंकिंमयाकार्यमित्यतःतज्ज्ञानंसंपादनीयमित्याह ॥ तस्यैवेति ॥ तस्यनित्यमहिम्नःकर्मफ
लशून्यस्यविष्णोरेव पदवित् स्वरूपज्ञानीस्यात् । किंतज्ज्ञानेनेत्यतआह ॥ तंविदित्वेति ॥ इतिशब्दऋक्समाप्तिद्योतकः ।
एवंभगवज्ज्ञानस्यमोक्षसाधनत्वात्तत्कामोन्योपितज्ज्ञानंसंपादयेदित्याह ॥ तस्मादिति ॥ तस्माद्भगवज्ज्ञानस्यमोक्षसाधन
त्वात् एवंवित् भगवज्ज्ञानंमोक्षसाधनमितिज्ञानवान्शांतोभगवन्निष्ठो दांतोनिगृहीतमदः उपरतउपसमीपेवर्तमानेस्वहृदिस्थेविष्णौ
रमतीत्युपरतः तितिक्षुः द्वंद्वंसहिष्णुः समाहितोयथावस्तुज्ञानी भूत्वाऽऽत्मन्येवस्वस्मिन्नेवविद्यमानमात्मानंपश्यतिपश्येत् । के
नप्रकारेणेत्यतआह ॥ सर्वमिति ॥ आत्मानंसर्वंपूर्णंपश्यतिपश्येदित्यर्थः। यद्वानकेवलंश्रवणमननादिरूपपरोक्षज्ञानमेवापरोक्ष
ज्ञानसाधनंकिंतुशांत्यादिसहितमितितद्ज्ञानस्यमोक्षसाधनत्वेज्ञानिनामाचारंप्रमाणयति ॥ तस्मादिति ॥ भगवज्ज्ञानिनःफल
माह ॥ नैनमिति ॥ एनंज्ञानिनंपाप्मानतरतिनप्राप्नोति । किंत्वयमेवसर्वंपाप्मानतंरतीति । नैनंपाप्मातरतीत्युक्तंविवृणोति
॥ नैनंपाप्मातपतीति ॥ सर्वंपाप्मानंतरतीत्युक्तंविवृणोति ॥ सर्वंपाप्मानंतपतीति ॥ एवंनैवंरजस्तरतिसर्वंरजस्तरतिनैनं

---

उप० । कृताकृतेतेतपतः ॥ २१ ॥ तदेतदृचाभ्युक्तं । एषनित्योमहिमाब्राह्मणस्यनवर्धतेकर्मणानोकनीयान् । तस्यैवस्यात्पदवित्तंविदित्वा
नलिप्यतेकर्मणापापकेनेति ॥ तस्मादेवंविच्छांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानंपश्यतिसर्वमात्मानंपश्यतिनैनंपाप्मातरतिनैनं
पाप्मातपतिसर्वंपाप्मानंतपति

विचिकित्सातरति सर्वांविचिकित्सांतरतीत्यपिग्राह्यं । एवंज्ञानिनःपापरागसंदेहाभावाअभिहिताः । तत्कुतइत्यतस्तदुपास्यस्य भगवतोनित्यंपापरागसंदेहशून्यत्वादित्याह ॥ विपापइति ॥ विष्णुर्नित्यंविपापोविरजोऽविचिकित्सोब्रह्मणावेदेनगम्यतइति ब्राह्मणोभवतियतः अतस्तज्ज्ञान्यपिताद्दशइत्यर्थः । हेसम्राट्एषपरमात्माब्रह्मलोकःपूर्णज्ञानस्वरूपइतिहोवाचयाज्ञवल्क्यः। एवंश्रुतभगवत्तत्वोराजागुरुदक्षिणांप्रतिजज्ञेइत्याह ॥ सोहमिति ॥ भगवतेपूज्याय ते विदेहानपिमयानुभूयमानानपिविदेह देशान् दास्यायमांचमयापिसहदास्यामीत्यर्थः ॥ २२ ॥ विद्यांतरमुपदिशति ॥ सवाइति॥ अन्नमत्तीत्यन्नादः वसुदैवमानु पात्मकंददातीतिवसुदानः । तज्ज्ञानिनःफलमाह ॥ विंदतइति ॥ २३ ॥ विद्यांतरमाह ॥ सवाइति ॥ अजरोजराशून्यः नमरिष्यतीत्यमरः नमृतइत्यमृतः अभयोभयशून्यः ब्रह्मासकामः। ब्रह्मणोऽभयत्वंकुतइत्यतस्तदेतदमृतमभयमेतत्ब्रह्मेतिश्रुति प्रसिद्धमित्याह ॥ अभयंवैब्रह्मेति ॥ तज्ज्ञानिनःफलमाह ॥ अभयंहीति ॥ यएवंवेदतस्यब्रह्माभयंभवतिभयराहित्यायभ वतीत्यर्थः । यद्वायएवंवेदसोभयंभयरहितःब्रह्माप्तकामोभवतीतिप्रसिद्धमित्यर्थः ॥ २४ ॥ इतिशारीरब्राह्मणं ॥ ४ ॥ ७ ॥ प्रियावैखलुनोभवतीसतीप्रियमवृधदित्यत्रप्रियमवृधत्वृद्धमभवदितियथाश्रुतप्रतीतिरनुपपन्ना प्रियस्यस्वतएववर्धनायोगात्

उप० । विपापोविरजोविचिकित्सोत्राह्मणोभवत्येपब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवतेविदेहान्ददामिमांचापिसहदास्याये ति ॥ २२ ॥ सवाएपमहानजआत्मान्नादोवसुदानोविंदतेवसुयएवंवेद ॥ २३ ॥ सवाएपमहानजआत्माऽजरोऽमरोऽमृतोऽभयोब्रह्माभयंवैब्र ह्माभयंहिवैब्रह्मभवतियएवंवेद ॥ २४ ॥ इतिशारीरब्राह्मणं ॥ ६ ॥ ४ ॥

भवतीत्वंपूर्वमपिनःप्रियैवसतीदानीमतिप्रियंप्रीतिमवृधत्वर्धितवत्यसीतिव्याख्यानमयुक्तं अवृधदित्यस्यांतर्णीतणिच्त्वेनयथा श्रुतेनैवोपपत्तौत्वमित्यध्याहृत्यतदुपपत्तयेवर्धितवत्यसीतिप्रतिपादनायोगात् बह्वध्याहारापाताच्च प्रियशब्दस्यप्रीतिविषयवाचकत्वेनप्रीतिवाचकत्वायोगाच्च प्रियंभाषसइतिप्रागुक्तविरोधाच्चेतिभावेनप्रियमवृधदितिवाक्यंकर्तृप्रदर्शनपूर्वकंव्याचष्टे ॥ **प्रियामिति** ॥ तथापिप्रियंवचनमितिवक्तव्यमितिचेत् सत्यं अर्थानुवादोयमित्यदोषः। शाखांतराभिप्रायेणवा। एतदुपनिषत्पुस्तकेष्वपि क्वचित्प्रियामवृधदितिपाठोपलंभाच्च। सयथासैंधवघनोऽनंतरोऽबाह्यःकृत्स्नोरसघनएवेत्यत्रनविद्यतेअंतरमंतस्थंबाह्यंचयस्मात्तदनंतरमबाह्यमितिसैंधवघनस्यसूक्ष्मत्वंव्याप्तत्वंचोच्यतइतिप्रतीतिनिरासायतद्विशेषणस्योपयोगंदर्शयंस्तद्वाक्यंव्याचष्टे॥**बाह्येति**॥ अनेननविद्यतेअंतरस्मिन्बाह्येचविशेषोयस्यतदनंतरमबाह्यमित्यर्थउक्तोभवति। तच्चविशेषणंहेत्वर्थगर्भमितिभावेनविशेषाभावेनेत्युक्तं। कृत्स्नइत्यस्यार्थः॥**सर्वत्रेति**॥ रसघनइतिकस्यरसइतिनप्रतीयतेअतउक्तं॥**लवणेति**॥अत्रैवमाभगवन्मोहांतमापीपिपन्नवा अहमिमंविजानातीतियथाश्रुतप्रतीतिनिवारणायतदनूद्यसमग्रवाक्यमन्वयप्रदर्शनपूर्वकंव्याचष्टे ॥ **नवाइति** ॥ अहमित्यस्यार्थोऽहेयमिति । जीवइतिकर्तुरध्याहारः । मुक्तइत्यर्थः । मोहस्यांतइतिभ्रमनिरासायमोहाख्यंनाशमित्युक्तं । एवमत्राहंशब्दस्याहेयार्थकत्वात्यत्प्रागुक्तमस्माभिस्तदात्मानमेवावेदहंब्रह्मास्मीत्यादिष्वहंशब्दोऽहेयत्ववाचीतितदपिसिद्धमित्याह॥**अतइति**॥

भा० । प्रियांवाचमवर्धयद्भवती । बाह्याभ्यंतरविशेषाभावेनसर्वत्रलवणरसघनएव । नवाअहमिमंविजानातीति । अहेयमिमंपरमात्मानंजीवोनजानातीत्यत्रैवभगवान्मोहांतंमोहाख्यंनाशमापीपिपत् प्रापयामास । अतोहंब्रह्मास्मीत्यादिष्वहंशब्दोऽहेयत्ववाचीतिसिद्धं ।

स्यादेतत् यद्यत्रैवाहंशब्दोऽहेयत्वार्थकःस्यात् तदेवकुतः अस्मच्छब्दरूपत्वांगीकारेबाधकाभावादित्यतआह ॥ अन्य
थेति ॥ अस्मद्युत्तमइतिविजानामीत्युत्तमपुरुषप्रयोगापत्तेरितिभावः । ननुविजानातीत्येतत्विजानामीतिपुरुषव्यत्यासेन
व्याख्यायतइतिचेत् तथात्वेनवाअहमिमंविजानातीत्यस्यनप्रेत्यसंज्ञास्तीतियाज्ञवल्क्योक्त्यनुवादरूपत्वानुपपत्तेः । याज्ञवल्क्ये
नहिमोक्षेभूतानांविनाशाद्भूतजंज्ञानंनास्तीतिभावेननप्रेत्यसंज्ञास्तीत्युक्तेतमभिप्रायमजानतीमैत्रेयीमुक्तस्यज्ञानसामान्यनिषेधोऽ
नेनकृतइतिबुद्ध्वाखलुपृच्छति अत्रैवेति । तथाचयदिअहमिमंपरमात्मानंनविजानामीत्यर्थःस्यात् तदाकथंतस्यतदनुवादरूपत्वं
स्यात् अतस्तत्सिध्यर्थमस्मदुक्तएवार्थोंगीकार्यइति । ननुनवाअहमित्येतत्नयाज्ञवल्क्योक्तानुवादरूपं अत्रैववस्तुनिप्रज्ञानघनए
वनप्रेत्यसंज्ञास्तीतिमोहांतमापीपिपत् अतोऽहमिमंनविजानामीतिव्याख्यानादितिचेत् न । उक्तरीत्यानवाअहमित्यस्यैवनप्रेत्य
संज्ञास्तीत्यनुवादरूपत्वोपपत्तावध्याहारेणैवंव्याख्यानायोगात् । ननुतथापिमुक्तोऽहेयंपरमात्मानंनविजानातीत्येतत्कथंप्रागुक्तज्ञा
नसामान्यनिषेधानुवादइतिचेन्न । यदिमुक्तस्यज्ञानमेवनस्यात् तदापरमात्मज्ञानमपिनस्यात् तथाज्ञानंचमिथ्याज्ञानमितिमैत्रेय्या
शयादिति । एतावदरेखल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्योविजहारेत्यत्रैतावदेवोक्तरूपात्मज्ञानमेवामृतत्वंमोक्षसाधनमितिप्रतीति
निरासायव्याचष्टे ॥ एतावदिति ॥ विज्ञातुर्जीवस्य । आदिशब्देनविषयपरिज्ञानंगृह्यते । हिशब्देनप्रमाणप्रसिद्धिमाह । पूर्वंया
ज्ञवल्क्यःनवाअरेअहंमोहंब्रवीमित्वमेवमदभिप्रायमज्ञात्वाअन्यथाकल्पयसीत्युक्त्वामोक्षेविप्रतिपत्तीर्निराकुर्वन्आत्मनाशंमोक्षंव

भा० । अन्यथाकथमहंविजानातीतियुज्यते । एतावद्विज्ञातुःपरमात्मनोविज्ञानादिकमत्रह्यमृतत्वंमोक्षः ।

दतांबौद्धानांमतंअविनाशीवाअरेऽयमात्माइत्यनेननिराकृत्य अशेषविशेषगुणोच्छेदोमोक्षइतिवैशेषिकमतंनविद्यतेउच्छित्तिर्ना शोयेषांतेअनुच्छित्तयःअनुच्छित्तयोधर्माज्ञानाद्यायस्यासावनुच्छित्तिधर्मेत्यनेननिराकृत्य निर्विशेषचैतन्यमात्रावशेषोमोक्षइतिम तेऽनिष्टमापादयितुंयत्रहीत्यादिनाव्यतिरेकव्याप्तिमुक्त्वा यत्रत्वस्यसर्वमात्मैवाभूदित्यादिना तन्मतेविषयभोगःसएषनेतिनेती त्याद्युक्तमाहात्म्यवतायेनेदंसर्वंविजानातितत्परब्रह्मकेनविजानीयादितिपरमात्मज्ञानं विज्ञातारमरेकेनविजानीयादितिस्वस्वरूप ज्ञानंचनस्यादित्युक्त्वा तत्रेष्टापत्तिपरिहारायमैत्रेय्येतावदरेखल्वमृतत्वमित्युच्यते तथाचतद्वाक्यस्यास्मदुक्तएवार्थोनपरोक्तइ तिभावः । अत्रप्रमाणमाह ॥ विष्णोरिति ॥ अत्रादिशब्देनजीवस्यविषयस्यचज्ञानंगृह्यते । ननुविगलिताखिलभेदेमोक्षेक्कवि ष्ण्वादिकं कुतस्तरांतज्ज्ञानमित्यतआह ॥ तदभावइति ॥ विष्ण्वाद्यभावेसुखंनस्यादिति कुतइत्यतआह ॥ ज्ञेयेति ॥ मा भूज्ज्ञानंमोक्षइत्यतआह ॥ ज्ञानाभावइति ॥ शून्यता । आत्मनःस्यादितिशेषः । आत्मनोज्ञानस्वरूपत्वादित्यर्थः । तथाचक स्यसुखंस्यादितिभावः । विपर्ययेपर्यवसानमाह ॥ तस्मादिति ॥ सुखरूपत्वतोज्ञानरूपस्यात्मनःसद्भावोऽवश्यमपेक्षितः । ज्ञा नंचज्ञेयसापेक्षमितिज्ञेययुक्तोमोक्षइत्यर्थः । अत्रब्राह्मणार्थःपूर्वमेवोक्तः ॥ ७ ॥ ७ ॥ मैत्रेयीब्राँह्मणं ॥ ५ ॥

भा० । विष्णोर्ज्ञानादिकंमोक्षस्तदभावेकुतःसुखम् । ज्ञेयाभावान्नहिज्ञानंज्ञानाभावेहिशून्यता । तस्माज्ज्ञेययुतोमोक्षःसुखरूपत्वतः सदेतिब्रह्मतर्के ॥ इतिमैत्रेयीब्राह्मणं ॥ ५ ॥



* चतुर्थाध्यायेचतुर्थेमैत्रेयीब्राह्मणेव्याख्यातत्वादत्रखंडार्थोनकृतः ।

उप० । अथहयाज्ञयल्क्यस्यद्वेभार्येबभूवतु:मैत्रेयीचकात्यायनीचतयोर्हमैत्रेयीब्रह्मवादिनीबभूव स्त्रीप्रज्ञैवतर्हिकात्यायन्यथहयाज्ञवल्क्योन्यद्वृत्त
मुपाकरिष्यन् ॥ १ ॥ मैत्रेयीतिहोचयाज्ञवल्क्य:प्रव्रजिष्यन्वाअरेऽहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतंकरवाणीति ॥२॥ साहोवाचमैत्रेयी
यन्नुमइयंभगो:सर्वापृथिवीवित्तेनपूर्णास्यात्स्यांन्वहंतेनामृताहोनेतिनेतिहोवाचयाज्ञवल्क्योयथैवोपकरणवतांजीवितंतथैवतेजीवितंस्यादमृतत्वस्यतु
नाशास्तिवित्तेनेति ॥ ३ ॥ साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यांयदेवभगवान्वेत्थतदेवमेब्रूहीति ॥ ४ ॥ सहोवाचयाज्ञवल्क्य:प्रिया
वैखलुनोभवतिसतीप्रियामवृधंतर्हिभवत्येतव्द्याख्यास्यामिव्याचक्षाणस्यतुमेनिदिध्यासस्वेति ॥ ५ ॥ सहोवाचनवाअरेपत्यु:कामायपति:प्रियोभव
त्यात्मनस्तुकामायपति:प्रियोभवति नवाअरेजायायैकामायजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवति नवाअरेपुत्राणांकामायपुत्रा:प्रियाभवं
त्यात्मनस्तुकामायपुत्रा:प्रियाभवंति नवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुकामायवित्तंप्रियंभवति नवाअरेपशूनांकामायपशव:प्रियाभवं
त्यात्मनस्तुकामायपशव:प्रियाभवंति नवाअरेब्रह्मण:कामायब्रह्मप्रियंभवत्यात्मनस्तुकामायब्रह्मप्रियंभवति नवाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्या
त्मनस्तुकामायक्षत्रंप्रियंभवति नवाअरेलोकानांकामायलोका:प्रियाभवंत्यात्मनस्तुकामायलोका:प्रियाभवंति नवाअरेदेवानांकामायदेवा:प्रियाभवं
त्यात्मनस्तुकामायदेवा:प्रियाभवंति नवाअरेवेदानांकामायवेदा:प्रियाभवंत्यात्मनस्तुकामायवेदा:प्रियाभवंति नवाअरेभूतानांकामायभूतानिप्रिया
णिभवंत्यात्मनस्तुकामायभूतानिप्रियाणिभवंति नवाअरेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवत्यात्मावाअरेद्रष्टव्य:श्रोतव्योमंत
व्योनिदिध्यासितव्योमैत्रेय्यात्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदंसर्वंविदितं ॥ ६ ॥ ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेद क्षत्रंतंपरादाद्यो
न्यत्रात्मन:क्षत्रंवेद लोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेद देवास्तंपरादुर्योन्यत्रात्मनोदेवान्वेद वेदास्तंपरादुर्योन्यत्रात्मनोवेदान्वेद

भूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेद सर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेदेदंब्रह्मेदंक्षत्रमिमेलोकाइमेदेवाइमेवेदाइमानिभूतानीदꣳसर्वंयदयमात्मा
॥ ७ ॥ सयथादुंदुभेर्हन्यमानस्यनवाह्याञ्छब्दाञ्शक्नुयाद्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः ॥ ८ ॥ स यथाशं
खस्यध्मायमानस्यवाह्याञ्छब्दांच्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृहीतः ॥ ९ ॥ सयथावीणायैवाद्यमानायैनवाह्याञ्छ
ब्दांच्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः ॥ १० ॥ सयथार्द्रैधाग्नेरभ्याहितस्यपृथग्धूमाविनिश्चरंत्येवंवाअरेऽस्यमहतोभूत
स्यनिश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानीष्टꣳहुतमाशितं
पायितमयंचलोकःपरश्चलोकःसर्वाणिचभूतान्यस्यैवैतानिसर्वाणिनिश्वसितानि ॥ ११ ॥ सयथासर्वासामपाꣳसमुद्रएकायनमेवंसर्वेषांस्पर्शानांत्व
गेकायनमेवंसर्वेषांरसानांजिह्वैकायनमेवंसर्वेषांगंधानांनासिकैकायनमेवंसर्वेषांरूपाणांचक्षुरेकायनमेवंसर्वेषांशब्दानांश्रोत्रमेकायनमेवंसर्वेषांसंक
ल्पानांमनएकायनमेवंसर्वासांविद्यानांहृदयमेकायनमेवंसर्वेषांकर्मणांहस्तावेकायनमेवंसर्वेषामानंदानामुपस्थएकायनमेवंसर्वेषांविसर्गाणांपायुरेकाय
नमेवंसर्वेषामध्वनांपादावेकायनमेवंसर्वेषांवेदानांवागेकायनंसयथासैंधवघनोनंतरोवाह्यःकृत्स्नोरसघनएवैवंवाअरेऽयमात्मानंतरोऽवाह्यःकृत्स्नःप्र
ज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः ॥ १२ ॥ साहोवाचमैत्रेय्यत्रैवमाभगवा
न्मोहांतमापिपन्नवाअहमिमंविजानातीति सहोवाचनवाअरेहंमोहंब्रवीम्यविनाशीवाऽरेयमात्मानुच्छित्तिधर्मा ॥ १३ ॥ यत्रहिद्वैतमिवभवतित
दितरइतरंपश्यतितदितरइतरंजिघ्रतितदितरइतरꣳरसयतेतदितरइतरमभिवदतितदितरइतरꣳशृणोतितदितरइतरंमनुतेतदितरइतरंस्पृशतितदि
तरइतरंविजानातियत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्तत्केनकंजिघ्रेत्तत्केनकंरसयेत्तत्केनकमभिवदेत्तत्केनकंशृणुयात्तत्केनकंमन्वीततत्केनकं



642



Scanned by CamScanner

अध्यायद्वयोक्तविद्यासुबुभुत्सुश्रद्धाजननार्थंतासांविद्यानांप्रवर्तकान्ऋषीनाह ॥ **अथवंशइत्यादिना** ॥ **अत्रोपदेष्टारःसर्वेपिन** नियमेनश्रोतृभ्योऽधिकाः अश्विभ्यामाथर्वणआधिक्याभावादितिभावेनाह ॥ **अवरेभ्यइति** ॥ **वंशब्राह्मणं** ॥ ६ ॥ इतिश्री मदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायांश्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृतायांपरब्र ह्मप्रकाशिकायांषष्ठोऽध्यायः ॥ ६ ॥

---

स्पृशेत्तत्केनकंविजानीयाद्येनेदंसर्वंविजानातितंकेनविजानीयात्सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्जतेऽसितोनव्यथतेनरिष्यतिविज्ञातारमरेकेनविजानीयादित्युक्तानुशासनासिमैत्रेय्येतावदरेखल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्योविजहार ॥१४॥ **मैत्रेयीब्राह्मणं ५**

भा० । अवरेभ्योपिशृण्वंतिपरमाश्चक्वचित्क्वचित् । लीलयैवनचैतेपांपरमत्वंविहीयतइतिच ॥ इतिवंशब्राह्मणं ॥ इतिबृहदारण्यकेभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

उप० । अथवंशःपौतिमाष्योगौपवनाद्गौपवनःपौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनःकौशिकात्कौशिकः कौंडिन्यात्कौंडिन्यःशांडिल्याच्छांडिल्यःकौशिकाच्चगौतमाच्चगौतमः॥१॥ आग्निवेश्यादाग्निवेश्योगार्ग्याद्गार्ग्योगार्ग्याद्गार्ग्योगौतमाद्गौतमःसैतवात्सैतवःपाराशर्यायणात्पाराशर्यायणोगार्ग्यायणाद्गार्ग्यायणउद्दालकायनादुद्दालकायनोजाबालायनाज्जाबालायनोमाध्यंदिनायनान्माध्यंदिनायनःसौकरायणात्सौकरायणःकापायणात्कापायणःसायकायनात्सायकायनःकौशिकायनेःकौशिकायनिः ॥ २ ॥ घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराशर्यायणःपाराशर्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यआसुरायणाच्चयास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपंचधनेरौपंचधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजआत्रेयादात्रे

चतुर्थ्वध्यायेपूक्तानांविद्यानांअखिलाःशेषभूताःसप्तमाष्टमाभ्यांनिरूप्यंते। पूर्वंशुक्लस्यनीलस्येत्यादिनाभगवदवताराअभिहिताः। तत्रमूलरूपस्यावताररूपस्यचपरावरत्वेनपूर्णत्वापूर्णत्वेस्यातामित्याशंकापूर्णमदइतिप्रथमब्राह्मणेनापाक्रियते । अप्रतिपत्तिविप्रतिपत्तिनिरासायतद्ब्राह्मणंप्रमाणेनव्याचष्टे ॥ अवताराइत्यादिना ॥ पूर्णमिदमितिएकस्यैवावतारस्यपूर्णत्वमुच्यतइतिशंका निरासायतस्यार्थमाह ॥ अवताराइति ॥ पूर्णमदइत्यस्यार्थमाह ॥ पूर्णंचेति ॥ परंमूलरूपमित्यर्थः। पूर्णात्पूर्णमुदच्यतइत्यस्यार्थमाह ॥ पूर्णादिति ॥ ननुमूलरूपस्यपरत्वेनअवताररूपस्यावरत्वेनदेशकालसामर्थ्यैर्विशेषावगमात्कथमुभयोःपूर्णत्वमित्यतआह ॥ परावरत्वमिति ॥ पूर्वमेवाभिव्यक्तत्वान्मूलरूपंपरमित्युच्यते । अनंतरमभिव्यक्तत्वादवताररूपमव(प)रमित्यु

---

योमांटेर्मांटिगौतमाद्गौतमोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भात्कौंडिन्यात्विदर्भीकौंडिन्योवत्सनपातोवाभ्रवाद्वत्सनपाद्बाभ्रवःपथःसौभरात्पंथाःसौभरोऽयास्यादांगिरसादयास्यांगिरसआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिःसनारोःसनारुःसनातनात्सनातनःसनकात्सनकःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयंभुब्रह्मणे नमः ॥ इतिवंशब्राह्मणं ॥ ६ ॥ इतिबृहदारण्यकेषष्ठोऽध्यायः ॥ ६ ॥

भा० । अवतारामहाविष्णोःसर्वेपूर्णाःप्रकीर्तिताः । पूर्णंचतत्परंरूपंपूर्णात्पूर्णाःसमुद्गताः । परा(प)वरत्वंतेषांतुव्यक्तिमात्रविशेषतः ।

च्यतइत्यर्थः । मात्रपदव्यवच्छेद्यमाह ॥ नेति ॥ पूर्णस्यपूर्णमादायेतिवाक्यंव्याचष्टे ॥ पूर्वेति ॥ अवतारत्वेनगम्यतइत्यवतारं। ननुब्रह्मादीनांस्वात्मन्यादानवत् स्वावताररूपादानस्यापिदेहलयरूपत्वेकथंतस्यपूर्णत्वंस्यादित्यतआह ॥ लौकिकेति ॥ लोकविषयइत्यर्थः । तद्दृष्टिंभूभारक्षपणादिव्यवहाराद्दृष्टिं कृष्णादिनां कृष्णादीनांह्रस्वःछांदसः । एतेनअदःपरोक्षंनिरुपाधिकंब्रह्म पूर्णं इदंनामरूपोपाधिविशिष्टमपिस्वरूपेणपूर्णंनतुविशिष्टरूपेण तदिदंविशिष्टरूपंपूर्णात्कारणात्मनःसकाशात्पूर्णमेवोदच्यते उद्गच्छति पूर्णात्मभावस्यत्यागायोगात् पूर्णस्यकार्यात्मनोब्रह्मणःपूर्णंपूर्णत्वमेकरसत्वलक्षणमादाय विद्ययाआविद्यकोपाधिसंसर्गतिरस्कारपूर्वकंपूर्णमेवनिरंतरप्रज्ञानघनैकरसस्वभावंकेवलंब्रह्मावशिष्यतेइतिपरकीयव्याख्यानमपास्तं । विशिष्टाविशिष्टब्रह्मसद्भावेमानाभावात् उदाहृतप्रमाणविरोधाच्च । ओंखंब्रह्मखंपुराणंवायुरंखंइत्येतद्व्याचष्टे ॥ ओताइति ॥ अस्मिन्विष्णौओताइत्यन्वयः । खमितित्रिवारमुक्तस्यैकार्थताप्रतीतिनिरासायाऽर्थमाह ॥ खमिति ॥ इतिहस्माहकौरव्यायणीपुत्रइत्यस्यार्थमाह ॥ रौहिणेयइति ॥ वेदोयंब्राह्मणाविदुरित्येतद्व्याचष्टे ॥ वेदोयमिति ॥ वेदोनेनैनयद्वेदितव्यमित्यत्रैनेत्येतत् अशब्दस्यत 645

भा० । नदेशकालसामर्थ्यैःपारावर्यकथंचन । पूर्णरूपस्यपूर्णस्यपूर्णयदवतारगं । रूपंतदात्मन्यादायपूर्णमेवावतिष्ठते । लौकिकव्यवहारोयोभूभारक्षपणादिकः । तदृष्टिंविनानान्योलयःकृष्णादिनांक्वचित् । ओताःसर्वगुणायस्मादस्मिन्नोंविष्णुरुच्यते । खंप्रकाशस्वरूपत्वाद्ब्रह्मतद्व्याप्तरूपतः । पुनःखंसुखरूपत्वात्पुराणंतदनादितः । वायोश्चरतिदंयस्माद्वायुरंब्रह्मतत्परं । ख्यातत्वाच्चापितत्खंस्याद्रौहिणेयस्तथावदन् । वेदोयंज्ञानरूपत्वादितियंब्राह्मणाविदुः ।

646

तीयांतमितिभावेनतदर्थमाह ॥ निर्दोषत्वादिति ॥ तद्वाक्यंव्याचष्टे ॥ तेनेति ॥ कौरव्यायणीपुत्रइत्येतत्रौहिणेयइति व्याख्यातं तद्धटयति ॥ बाह्लीकेति ॥ हियस्माद्वाह्लीकःकौरव्यःतत्सुताचरोहिणीकौरव्यायणीत्युच्यते । अतस्तत्पुत्रोबलभद्रःकौरव्यायणीपुत्रइत्युच्यतेइत्यर्थः ॥ ततश्चायंखंडार्थः ॥ अदोमूलरूपं पूर्णं इदमवताररूपंच पूर्णं पूर्णान्मूलरूपात् पूर्णअवताररूपं उदच्यतेउद्गच्छति पूर्णस्यमूलरूपस्य पूर्णंयदवताररूपं तदात्मन्यादायैकीभूय पूर्णंमूलरूपमेवावतिष्ठते । तस्यैवब्रह्मणोमूलरूपस्यस्वरूपमाह ॥ ओमिति ॥ तन्मूलरूपंसर्वगुणपरिपूर्णत्वादोमित्युच्यते प्रकाशरूपत्वात्खं व्याप्तत्वाद्ब्रह्म सुखरूपत्वात्खं अनादित्वात्पुराणं वायोःरतिदत्वाद्वायुरं ख्यातत्वात्खमिति कौरव्यायणीपुत्रोबलभद्रआहस्म अयंपरमात्मा ज्ञानरूपत्वाद्वेदइतियंब्राह्मणाविदुस्तेनवेदेनज्ञानरूपेणएननिर्दोषत्वादकारवाच्येन यदिदंप्रसिद्धं तत्सर्ववेदितव्यमित्यर्थः॥ इतिप्रथमंब्राह्मणं ॥ १ ॥ अथभाष्यार्थः ॥ सर्वप्राणिसाधरणानुष्ठेयमाह ॥ त्रयाइति ॥ देवादीन्सृजताभगवतातत्तत्कर्तव्यस्योपदिष्टत्वात्पुनःकस्माद्ब्रह्माणंपप्रच्छुरित्यतआह ॥ज्ञानदानमिति॥ उपलक्षणमेतत् देवानांदयादमश्च मनुष्याणामसुराणांचदानादित्रयमपिविहितमितिग्राह्यं देवनरासुराः विशेपंबुभुत्सवइतिशेषः । यद्वाअत्रदेवानांदमस्यमनुष्याणांदानस्यअसुराणांदयायाविहित

---

भा० । निर्दोपत्वादइत्युक्तस्तेनवेद्यंसदाखिलमितिच । बाह्लीकसुताहिरोहिणीअतोबलभद्रःकौरव्यायणीपुत्रः ॥ ७ ॥ इतिप्रथमंब्राह्मणम् १

उप० । पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॥ १ ॥ ॐ ३ खंब्रह्मखंपुराणंवायुरंखमितिहस्माहकौरव्यायणीपुत्रोवेदोयंब्राह्मणाविदुर्वेदोऽनेनैनयद्वेदितव्यं ॥ २ ॥ इतिप्रथमंब्राह्मणं ॥ १ ॥

त्वेनदेवानांदानंनास्तीतिप्रतीयते तदनुपपन्नं । ज्ञानदानमेवदेवानांविहितंइत्यादिश्रुत्यादेवानांज्ञानदानस्यमनुष्यकृतकर्मफलदानस्यचप्रमितत्वादित्यतआह ॥ ज्ञानदानंत्विति ॥ विष्णुनैवतस्यविहितत्वान्नतद्ब्रह्मणाविहितमितिभावः। देवाऊचुःब्रवीतुनोभवानिति । अथहैनंमनुष्याऊचुः अथहैनमसुराऊचुरितिवाक्यत्रयंव्याचष्टे ॥ पुनरिति ॥ तेभ्योहैतदक्षरमुवाचदइतीतिदेवानांदमोविहितः । तत्रदमोनाममनेंद्रियनिग्रहः अपरोक्षज्ञानिनांतेषांस्वतएवनिगृहीतेंद्रियत्वादतआह ॥ देवानामिति ॥ देवानामनहंकारमात्रंविहितमित्यन्वयः । ऐश्वर्यादिनाअहंकारोनकर्तव्यइतिविहितमित्यर्थः । मात्रपदंदानव्यवच्छेदार्थः । तत्किमर्थमित्यतआह ॥ सद्गुणोच्छ्रितेरिति ॥ ज्ञानभक्त्यादिगुणवृद्ध्यर्थमित्यर्थः । ननूत्पन्नापरोक्षज्ञानानांतेषांमोक्षस्यनिश्चितत्वात्किंसद्गुणवृद्ध्येत्यतआह ॥ सर्वोच्चेति ॥ ज्ञानमात्रेणसंसारनिवृत्तिरूपमोक्षस्यसिद्धत्वेपि , आनंदातिशयविशिष्टोमोक्षोनसिध्यतीतितदर्थंसाऽपेक्षितेतिभावः । तेभ्योहैतदेवाक्षरमुवाचदइत्यादिनामनुष्याणांदानंविहितं तत्कस्यदानंकस्मैचदातव्यंकिमर्थंचेत्यतआह ॥ नराणामिति ॥ देवादीनांहविरादेर्दानमेवनराणांज्ञानसाधनंप्रकीर्तितमित्यन्वयः । ननुदेवानांदमवत्मनुष्याणांदानमपिसद्गुणवृद्धिद्वारासर्वोच्चमोक्षकारणंकिंनेत्यतोवाऽऽह ॥ नराणामिति ॥ ज्ञानसाधनमेवेत्यन्वयः । अनुत्पन्नापरोक्षज्ञानत्वात्तेषामितिभावः । असुराणांदयोपदेशेनिमित्तमाह ॥ तमइति ॥ तद्विलंबेचसाधनानुष्ठानाधिक्येदुःखाधिक्यसिद्धिरितिभावः ॥ ७ ॥

---

भा० । ज्ञानदानंतुदेवानांफलदानंचकर्मणां । विष्णुनाविहितंपूर्वंपुनर्देवनरासुराः। ब्रह्माणमपिपप्रच्छुर्देवानांसद्गुणोच्छ्रितेः । अनहंकारमात्रंतुब्रह्मणाविहितंतदा । सर्वोच्चमोक्षसंप्राप्त्यैनराणांज्ञानसाधनं । देवादीनांदानमेवहविरादेःप्रकीर्तितं । तमःप्राप्तिविलंबायदैत्यानांविहितादयेतिप्रवृत्ते ॥ 

॥ अथखंडार्थः ॥ त्रयास्त्रिविधाः प्रजापतेर्ब्रह्मणोपत्यानिप्राजापत्याः प्रजापतौपितरि ब्रह्मचर्यंब्रह्मचारित्रतंकृत्वोषुः । केतेत्र यइत्यतआह ॥ देवाइति ॥ तत्रदेवाब्रह्मचर्यमुषित्वाभवान्नोस्माकंब्रवीत्वित्यूचुः । एवंपृष्टोब्रह्मा तेभ्योदेवेभ्य एतद्वक्ष्यमाण मक्षरमुवाचह । किंतदक्षरमित्यतआह ॥ दइतीति ॥ दइत्येकमक्षरमुपदिश्यतदभिप्रायोज्ञातःकिमितिपृच्छति ॥ व्यज्ञासि ष्टाइति ॥ एवंपृष्टादेवाव्यज्ञासिष्मेतिहोचुः । तद्यनुवदतेत्यतआह ॥ दाम्यतेतितिनआत्थेति ॥ एवमभिप्रायोद्घाटने ब्रह्माभ वत्यर्थंममाभिप्रायइत्याह ॥ ओमितिहोवाचेति ॥ १ ॥ एवमुत्तरत्रापि ॥ २ ॥ यदेतद्ब्रह्मणोपदिष्टंतदेतदेव एषादैवीवागप्य नुवदति कासेत्यतआह ॥ स्तनयित्नुरिति ॥ अनुवादप्रकारंदर्शयति ॥ ददद्इतीति ॥ त्रिवारमुक्तस्याभिप्रायमाह ॥ दा म्यतेति ॥ तत्तस्माद्ब्रह्मणोपदिष्टत्वात् अद्यतनोपिएतत्त्रयंशिक्षेत् । किंतत्त्रयं ॥ दमंदानंदयामिति ॥ शिक्षेदितिप्रत्येकंसं बंधः ॥ इतिद्वितीयंब्राह्मणं ॥ २ ॥

---

उप० । त्रयाःप्राजापत्याःप्रजापतौपितरिब्रह्मचर्यमूषुर्देवामनुष्याअसुराउषित्वाब्रह्मचर्यंदेवाऊचुर्ब्रवीतुनोभवानिति तेभ्योहैतदक्षरमुवाचद इति व्यज्ञासिष्टा३इति व्यज्ञासिष्मेतिहोचुर्दाम्यतेतितिनआत्थेत्योमितिहोवाचव्यज्ञासिष्टेति ॥ १ ॥ अथहैनंमनुष्याऊचुर्ब्रवीतुनोभवानिति तेभ्यो हैतदेवाक्षरमुवाचदइति व्यज्ञासिष्टा३इति व्यज्ञासिष्मेतिहोचुर्दत्तेतितिनआत्थे त्योमितिहोवाचव्यज्ञासिष्टेति ॥ २ ॥ अथहैनमसुराऊचुर्ब्रवीतुनो भवानिति तेभ्योहैतदेवाक्षरमुवाचदइति व्यज्ञासिष्टा३इति व्यज्ञासिष्मेतिहोचुर्दयध्वमितितिनआत्थेत्योमितिहोवाचव्यज्ञासिष्टेति तदेतदेवैषादैवी वागनुवदतिस्तनयित्नुर्ददद्इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳशिक्षेद्दमंदानंदयामिति ॥ ३ ॥ द्वितीयंब्राह्मणं ॥ २ ॥

पूर्वप्रकृतचतुर्मुखस्यैवस्वरूपमाह ॥ एषप्रजापतिरिति ॥ तत्रप्रजापतिशब्दवाच्यस्यचतुर्मुखस्यहृदयशब्दवाच्यत्वमुक्तं । तत्रकिंनिमित्तमित्यतः अभिहरंतीति ददतीति एतीति फलवाक्यानुसारेणतन्निमित्तंवदन् ब्राह्मणंव्याचष्टे ॥ हरणादिति ॥ हरणात्हृ दानतोदः अव्यवधानेनान्यद्वारसंतरेणपरस्यब्रह्मणोयानात्प्राप्तेर्यः अभिहरंत्यस्मैस्वाश्चान्येचयएवंवेद ददत्यस्मैस्वाश्चान्येचयएवंवेद एतिस्वर्गलोकंयएवंवेद इतिफलवाक्यत्रयंव्याचष्टे ॥ तस्येति ॥ अभिहरंतिददतीत्यनयोरेकार्थत्वप्रतीतिंनिराकुर्वन्हृतिदानेत्युक्तंविवृणोति ॥ हृत्वैवेति ॥ अन्यस्मादितिशेषः । नकेवलमेतद्ब्राह्मणेपूर्वब्राह्मणप्रकृतचतुर्मुखएवैषप्रजापतिरितिप्रजापतिशब्देनोच्यते किंतुपरमात्माचेत्याह ॥ परमात्माचेति ॥ अन्यथा एतत्ब्रह्मैतत्सत्यमित्यस्यचतुर्मुखेमुख्यतोनुपपत्तेरितिभावः ॥ तृतीयंब्राह्मणं ॥ ३ ॥ प्रकृतभगवतोवासुदेवाख्यावतारनिरूपणेनएतत्सत्यमित्युक्तंविवृणोति ॥ तद्वैतदितिब्राह्मणेन ॥ तद्व्याचष्टे ॥ ततत्वादिति ॥ अनेनप्रथमतच्छब्दस्यार्थद्वयमुक्तं । ततत्वाद्व्याप्तत्वात् । एकरूपत्वादतीतवर्तमानकालयोरितिशेषः । यथोक्तंपुरस्तात् । यथापूर्वंतथेदानीमितिविष्णुस्तदुच्यतइति । यद्वा ततत्वादितितच्छब्दार्थः वर्तमानानागतकालयोरेकरूपत्वादितिएतच्छब्दार्थः यथोक्तंपुरस्तात् । यथेदानींतथानित्यंयस्मादेषभ

भा० । हरणाद्यज्ञभागादेर्ज्ञानादेर्दानतस्तथा । यानादव्यवधानेनपरस्यब्रह्मणस्तथा । ब्रह्माहृदयइत्युक्तस्तस्यैवंविदपिध्रुवं । हृतिदानस्वर्गयानपात्रंस्यात्तत्प्रसादतः । हृत्वैवास्मैददत्यद्धास्वकीयाश्चान्यएवचेतितिनिर्णये । परमात्माचप्रजापतिः ॥ इतितृतीयंब्राह्मणम् ॥ ३ ॥ ततत्वादेकरूपत्वात्तत्परंब्रह्मकीर्तितं ।

विष्यति । अतएतदितिप्रोक्तइति परंब्रह्मतदितिकीर्तितमित्युपलक्षणं एतदितिकीर्तितमित्यपिग्राह्यं । ननुव्याप्तमेकरूपंचवस्तुप
रमात्मसदृशमन्यदप्यस्तिकिंनेत्याह ॥ तदेवेति ॥ परंब्रह्मैवेत्यर्थः । एतत्तदाससत्यमेवेतिवाक्यंअन्वयक्रमेणव्याचष्टे ॥ तदेत
दिति ॥ ननुतदेवतादृशंप्रोक्तमित्येतत्कस्यव्याख्यानमितिनप्रतीयतेइत्यतस्तद्व्याख्येयप्रदर्शनायश्रुतावन्वयमाह ॥ तदेवाहित
दिति ॥ अनेनद्वितीयैतच्छब्दोपरिगतस्यैवशब्दस्यप्रथमतच्छब्देनान्वयः तदासेतितच्छब्दस्यात्रापिसंबंधइत्युक्तंभवति । हेत्य
स्यानुवादोहीति तथाचस्मृतौतदित्यस्यार्थस्तादृशमिति दृशब्दार्थःप्रोक्तमितीतिभावः । ननुतदेतत्सत्यमेवासीदितिस्मृतौतदेतदि
त्यनुवादांशःसत्यमेवेत्येवशब्दश्चान्ययोगव्यवच्छेदकइतिप्रतीयते तदनुपपन्नं । अनुवादेव्यर्थत्वात् संकर्षणादिरूपांतरस्यापिसद्भा
वादित्यतःस्मृत्यर्थमाह ॥ तदिति ॥ तथाचैवशब्दःप्रसिद्ध्यर्थकइतिभावः । सयोहैतंमहद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिजयतीमाँ
ल्लोकानितिफलवाक्यंव्याचष्टे ॥ स्वस्मादिति ॥ तत्रप्रथमजमित्यस्यार्थकथनमेतत् महद्यक्षमित्यस्यार्थोमहायाज्यमिति । जित
इन्वसावसदितिवाक्यंव्याचष्टे ॥ प्राप्नोत्येवेति ॥ जयतीमाँल्लोकानित्युक्तः एतल्लोकजयोनामकइत्यतआह ॥ जीवन्निति ॥ न
नुपरमात्माचप्रजापतिरित्यनेनएषप्रजापतिर्यत्हृदयमितिब्राह्मणंपरमात्मपरमित्युक्तं तत्रपरमात्मनोहृदयशब्दवाच्यत्वेकिंनिमित्तं 650

भा० । तदेवतादृशंप्रोक्तंनैवान्यत्तादृशंक्वचित् । तदेतत्सत्यमेवासीद्वासुदेवाख्यमव्ययमितिब्रह्मतर्के । तदेवहिनन् । तन्नारायणाख्यंपरं
ब्रह्मैतदेवसत्यंवासुदेवाख्यमासीदित्यर्थः । स्वस्मात्स्वयंसमुत्पन्नोवासुदेवात्मनाप्रभुः । सत्यंब्रह्मेतियोवेदमहायाज्यंतुतंपरं । प्राप्नोत्येवहितल्लोकाञ्जी
वन्नप्युत्तमोभवेदितिप्रध्याने ।

नचहरणाद्यज्ञभागादेरित्युक्तमेवेतिवाच्यं यानादव्यवधानेनपरस्यब्रह्मणइत्यस्यविष्णावनुपपत्तेरित्यतःप्रकारांतरेणहृदयशब्दनिर्वचनपूर्वकमेतत्सत्यमित्येतद्व्याचष्टे ॥ स्वभागेति ॥ चतुर्मुखपरमात्मनोरुभयोरपिएषप्रजापतिरितिप्रजापतिशब्दवाच्यत्वमुक्तं तत्रतयोःकिंसाम्येनतच्छब्दवाच्यत्वंनेत्याह ॥ प्रजापतिरिति ॥ अमुख्यतःप्रजापतिशब्दवाच्योब्रह्माएषप्रजापतिरित्यत्रप्रतिपाद्यत्वेनकुतोंगीकार्यइतिचेत् त्रयाःप्राजापत्याइतिपूर्वब्राह्मणेतावत्चतुर्मुखएवप्रजापतिशब्दवाच्यः। तथाचैषप्रजापतिरित्यत्र तस्यापिग्रहणेबाधकाभावात्सोपिप्रतिपाद्यइतिभावेनाह ॥ यस्मिन्निति ॥ देवासुरनरइतिनृशब्दोबहुवचनांतः। तर्हिकोमुख्यतः प्रजापतिशब्दाभिधेयइत्यतआह ॥ एषइति ॥ कुतोत्रविष्णोरेवमुख्यतःप्रतिपाद्यत्वमितिचेत् एतिस्वर्गंलोकंयएवंवेदेतितज्ज्ञानान्मोक्षोक्तेः। नह्यन्यज्ञानान्मोक्षःसंभवतीतिभावेनतद्वाक्यंव्याचष्टे ॥ यज्ज्ञानादिति ॥ यद्धृदयमितिव्याचष्टे ॥ हृदयंचसइति ॥ सब्रह्मानकेवलंप्रजापतिरित्येवोक्तः किंतुहृदयंचअमुख्यतोहृदयशब्दवाच्यश्चेत्यर्थः। तत्रनिमित्तंहरणादितिपूर्वोक्तमेवाह ॥ हृतीति ॥ सतोज्ञानादेर्दानंसद्दानं। यानंपरब्रह्मणःअव्यवधानेनयानं। यद्वासविष्णुःनकेवलंमुख्यतःप्रजापतिरेवकिंतु हृदयंचेत्यर्थः। तत्रनिमित्तंस्वभागहरणादित्युक्तमेवाह ॥ हृतीति ॥ यानंयापनं। एतत्सत्यमित्यस्यार्थमाह ॥ सत्यमिति ॥ इ



भा० । स्वभागहरणाद्दानात्फलानांयापनान्नृणां। हृदयंभगवान्विष्णुःसत्यंसद्गुणरूपतइतिसत्तत्वे । प्रजापतिरितिब्रह्मावेदेपूक्तोह्यमुख्यतः। यस्मिन्नृपुर्ब्रह्मचर्यंदेवासुरनरोव्जजे । एषवैभगवान्विष्णुर्मुख्यतस्तुप्रजापतिः । यज्ज्ञानान्मुक्तिमायांतिस्वर्गाख्यांहृदयंचसः । हृतिसद्दानयानेभ्यः सत्यंसद्गुणरूपतः ।

दमप्युभयपरतयायोज्यं । ननुयथाएषप्रजापतिरितिब्राह्मणमुभयपरं तथातद्वैतदेवेतिब्राह्मणमपिकिंनेतिभावेनाह ॥ यत्तादि ति ॥ सत्यतांसत्याख्यंरूपांतरंवासुदेवाख्यं । केयंसत्यतेत्यतआह ॥ सत्यत्वामिति ॥ सदनीयत्वमपितस्यास्तिकिमित्यतआह ॥ आसाद्यमिति ॥ प्राप्यमित्यर्थः । सयोहैतमितिफलवाक्यंव्याचष्टे ॥ एवमिति ॥ ननुएतल्लोकजयोह्येतल्लोकप्राप्तिरेव तस्य चदुःखहेतुत्वात् कथं( फलत्व ) तत्फलमित्यतआह ॥ एतल्लोकेति ॥ अनेनजीवन्नप्युत्तमोभवेदित्युक्तंविवृतं जितइन्वसावस दितिफलवाक्यांतरंव्याचष्टे ॥ जितएवेति ॥ असौलोकःपरलोकः । अनेन (प्राप्नोत्येवहितल्लोका )नित्युक्तंविवृतं । जितइ न्वसावसदितिवाक्यं इनुइत्थंयथासत्यब्रह्मणानृतशत्रुर्जितस्तथोपासकेनाप्यसौशत्रुर्जितस्तथाभूतःसन्नसच्चनष्टश्चभवेदितिपरेण व्याख्यातं तदसत् उदाहृतप्रमाणविरोधात् शत्रोरप्रकृतत्वेनासावित्यनेनतद्ग्रहणायोगाच्चेतिभावेनतद्वाक्यंस्पष्टंव्याचष्टे ॥ पर लोकइति॥ श्रुतावसावित्यनंतरंलोकइत्यनुवर्ततइतिभावेनतदर्थोक्तिः॥ परलोकइति॥ इन्वित्यस्यार्थएवेति। असदित्यस्यार्थो ऽभवदिति ॥ ३ ॥ ४ ॥ तथाचायंब्राह्मणद्वयार्थः ॥ एषविष्णुर्विरिंचोवाप्रजापतिःप्रजानांपालनात् हृदयंचहृदयशब्दवाच्य श्च । तत्रनिमित्तंभाष्यएवोक्तं। यत्हृदयमेतत्ब्रह्मस्वस्वरूपापेक्षयापूर्णं। एतत्सत्यंसद्गुणरूपत्वात्। परमात्माविरंचोवाहृदयशब्दा

भा० । यत्तद्धृदयमित्युक्तंब्रह्मतत्सत्यतामगात् । सत्यत्वंसदनीयत्वमासाद्यंयन्मुमुक्षुभिः । एवंतद्ब्रह्मयोवेदसहिलोकानिमाञ्जयेत् । एतल्लोकजयोनासधर्मज्ञानादिपूर्णता । जितएवह्यसौलोकोयदावेदजनार्दनमितिगुणपरसे । परलोकोजितएवाभवदित्यर्थः ॥ ३ ॥ ४ ॥

उप० । एषप्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सत्यं

र्थत्वेनोपास्यइत्युक्तं । इदानींतच्छव्दगतवर्णार्थत्वेनाप्युपास्यइतिभावेनाह ॥ **तदेतदिति** ॥ हृदयमितियत्तदेतत्त्र्यक्षरं तदेव विवृणोति ॥ **हृइत्येकमक्षरमिति** ॥ स्वभागहरणनिमित्तेनहृइत्येकाक्षरेणविरिंचस्यविष्णोर्वोपासकस्यफलमाह ॥ **अभिहरंतीति** ॥ यएवंहृइत्येकाक्षरेणपरमात्मानंविरिंचंवावेदोपास्ते अस्माउपासकायस्वाःस्वकीयाश्चान्येचाऽभिहरंति शत्र्वादिभ्योवलिंहरंतीत्यर्थः । दइत्येकमक्षरं तथोपासकस्यफलमाह ॥ दद्तीति ॥ यएवंदइत्ये काक्षरेणवेदोपास्ते अस्मैस्वाश्चान्येचान्येभ्योहृत्वाददतीत्यर्थः । यमित्येकमक्षरं । यएवंवेदसःस्वर्गलोकंमुक्तिरूपमेति ॥ **तृतीयंब्राह्मणं** ॥ ३ ॥ **तद्वैतदिति** ॥ पूर्वप्रकृतं परब्रह्म तत्ततत्वात् एतद्वर्तमानानागतकालयोरेकप्रकारत्वात् व्याप्तमेकरूपंचवस्तुअन्यदप्यस्तिकिंनेत्यतोप्याह ॥ **तद्वेति** ॥ एतदेवेत्येवशव्दोत्रसंबध्यते तदासेतितच्छव्दोत्रापिसंबध्यते तदेवहतत्तदेवपरंब्रह्मैवतादृशंप्रोक्तंनान्यदित्यर्थः। तस्यविष्णोःप्रथमावतारमाह ॥ **एतत्तदाससत्यमेवेति** ॥ तन्नारायणाख्यंपरब्रह्मैतदेवसत्यंवासुदेवाख्यमासेत्यर्थः । सत्याख्यवासुदेवस्यब्रह्मत्वेनोपासकस्यफलमाह ॥ **सयइति** ॥ सोधिकारी महद्यज्ञंमहायाज्यंप्रथमजंस्वस्मादेवनारायणात्प्रथमतअवतीर्णं एतंवासुदेवं सत्यंब्रह्मेतिवेद सइमाँल्लोकान्जयति धर्मज्ञानादिपरिपूर्णोभवतीत्यर्थः । नकेवलमेतावत् योऽधिकारीमहद्यज्ञंप्रथमजमेतमेवंवेद ।

उप० । तदेतत्त्र्यक्षरꣳहृदयमितिहृइत्येकमक्षर( माहरं )मभिहरंत्यस्मैस्वाश्चान्येचयएवंवेददइत्येकमक्षरंददत्यस्मैस्वाश्चान्येचयएवंवेदयमित्येकमक्षरमेतिस्वर्गंलोकंयएवंवेद ॥ **तृतीयंब्राह्मणं** ॥ ३ ॥ तद्वैतदेतदेवतदाससत्यमेवसयोहैतंमहद्यज्ञंप्रथमजंवेदसत्यंब्रह्मेतिजयतीमाँल्लोकान्जितइन्वसावसद्यएवमेतंमहद्यज्ञंप्रथमजंवेद

653

एवंशब्दार्थंविवृणोति ॥ सत्यंब्रह्मेति ॥ तेनासौपरलोकोजितइन्नुजितएवासत् अभवदित्यर्थः । एवंब्रह्मत्वेनसत्योपासकस्यफलसद्भावात्सत्यं ब्रह्मभवत्येवेत्याह ॥ सत्यंह्येवेति ॥ चतुर्थंब्राह्मणं ॥४॥ नारायणाख्यंपरंब्रह्मसत्यंवासुदेवाख्यमासीदित्युक्तं तदेवविवृणोति ॥ आपइतिब्राह्मणेन ॥ अत्रापशब्दोनप्रसिद्धोदकपरः । तासांकार्यत्वेनमहाप्रलयेवस्थानायोगात् । नचअव्याकृतात्मनाऽवस्थिताएवापोग्राह्याइतिवाच्यं तथापितासांसत्याख्यपरब्रह्मसर्जकत्वायोगात् नचसत्यशब्देनचतुर्मुखःब्रह्मप्रजापतिमित्युत्तरवाक्यविरोधादितिभावेनब्रह्माणंप्रमाणेनव्याचक्षाणस्तावदपशब्दार्थमाह ॥स्वदेति॥ ताआपःसत्यमसृजंतेतिवाक्यंसत्यंसत्यवचनमितिप्रतीतिनिरासायव्याचष्टे ॥ द्वितीयमिति ॥ आत्मनोद्वितीयंरूपमित्यन्वयः । सत्यंकर्तृब्रह्मासृजतेतिनिरासायसत्यंब्रह्मेत्येतद्व्याचष्टे ॥ ब्रह्मेति ॥ ब्रह्मप्रजापतिमित्येतदसृजतेतिपदानुवृत्याव्याचष्टे ॥ तस्मादिति ॥ प्रजापतिर्देवानित्येतत्पूर्ववद्व्याचष्टे ॥ ततइति ॥ तेदेवाःसत्यमेवोपासतइत्यत्रदेवशब्देनप्रजापतिजन्यदेवानामेवग्रहणमितिप्रतीतिंनिवारयंस्तत्यस्यैवोपास्तौनिमित्तमाह ॥ तस्मादिति ॥ तदुत्पन्नत्वादित्यर्थः । मध्यतोनृतमितितीत्येतदनृतवाचकमित्युक्तं । तत्रानृतशब्दार्थवदंस्तद्व्याचष्टे ॥ ततत्वादिति ॥ पुरुषेषुव्याप्तत्वादित्यर्थः । तदेतदनृतमुभयतःसत्येनपरिगृहीतमित्येतद्व्याचष्टे ॥

उप० । सत्यंब्रह्मेतिसत्यꣳह्येवब्रह्म ॥ चतुर्थंब्राह्मणं ॥ ४ ॥

भा० । सदासर्वगुणापानादापोनारायणःस्मृतः । द्वितीयंरूपमसृजद्वासुदेवंसआत्मनः । ब्रह्मसत्यमितिप्राहुर्वासुदेवाभिधंप्रभुं । तस्माद्ब्रह्माऽजनिततोदेवाःसर्वेपिजज्ञिरे । तस्माद्ब्रह्मादयोदेवावासुदेवमुपासते । ततत्वादन्यथाज्ञानंतीत्येवसमुदीर्यते ।

**तस्येति** ॥ सदात्मासाधुस्वरूपोवासुदेवाख्यः सादनात्सकारवाच्योहरिः । अनृतमज्ञानं सादयन्अल्पंकुर्वन् तस्यज्ञानस्याधस्तात्स्थितः सदात्मावासुदेवाख्योविनाशनात्यंनामाहरिरनृतंनाशयंस्तस्योपरिष्टाच्चस्थितइत्यन्वयः । अत्रोभयत्रसदात्मेत्युक्त्याप्रथमोत्तमेअक्षरेसत्यंइत्येतदपिव्याख्यातं । नैवंविद्वांसमनृतंहिनस्तीतिफलवाक्यंव्याचष्टे ॥ **एवमिति** ॥ वेदोपास्ते । नन्वेवमुपासनासर्वेषामपिस्यात्किमित्यतआह ॥ **योग्यतेति** ॥ यद्वातेदेवाःसत्यमेवोपासतेइत्युक्तत्वेनास्यामुपासनायांदेवानामेवाधिकारःकिमित्यतआह ॥ **योग्यतापेक्षयेति** ॥ योग्यतापेक्षयाऽन्येषामपिसोपासास्यादित्यर्थः । योग्यानामप्युपासनैवोक्तंफलं (ददाति) दिशति किमित्यतआह ॥ **अथेति** ॥ आपरोक्ष्यादितिल्यब्लोपनिमित्तापंचमी उपासास्वपूर्त्यनंतरंअपरोक्षज्ञानमुत्पाद्यैवतत्फलं सम्यग्ददाति । अन्यथाऽपरोक्षज्ञानोत्पत्त्यभावेपिउपकारिणीभवेदेवेत्यर्थः । तर्ह्यत्ययोग्येनकृतापिसोपकारिणीभवेत्किंनेत्याह ॥ **अत्ययोग्यायेति** ॥ नन्वयोग्यकृतायाअपिभगवदुपासायानरकादिविपरीतफलप्रदत्वंकथमित्यतआह ॥ **वैपरीत्यमिति** ॥ उक्तंच स्वाधिकाराधिकोयत्नःप्रायशोनोपपद्यते । कथंचिदधिकेयत्नेदोषःकश्चित्समापतेदिति ॥ १ ॥ **तत्तश्चायंखंडार्थः** ॥

---

भा० । तस्याधस्तात्सदात्मातुसादयन्ननृतंहरिः । उपरिष्टाच्चयंनामानाशयन्ननृतंस्थितः । एवंयोवेदतंविष्णुंनास्यमिथ्याद्दशिर्भवेत् । योग्यतापेक्षयोपासाऽथापरोक्ष्याच्चतत्फलं । सम्यग्ददात्यन्यथाचभवेदेवोपकारिणी । अत्ययोग्यायचेत्सास्याद्विपरीतफलप्रदा । वैपरीत्यंतुविघ्नःस्यान्नतुपापंकथंचनेत्याधारे ॥ १ ॥

आसम्यक्सर्वान्गुणान्पिबतीत्यापोनारायणएव इदमग्रेअस्याग्रे आसुरास शब्दस्वभावत्वाद्बहुवचनं ताआपअप्शब्दवाच्यो नारायणः सत्यंसत्याख्यमात्मनोद्वितीयंरूपंवासुदेवाख्यं असृजंतासृजत् तद्वासुदेवाख्यंद्वितीयंरूपंसद्गुणरूपत्वात्सत्यं पूर्णत्वा द्ब्रह्मेत्याहुर्विद्वांसः ब्रह्मवासुदेवाख्यं प्रजापतिंचतुर्मुखमसृजत् । सप्रजापतिर्ब्रह्मा । देवान्शेषादीन् । असृजत् । तेवासुदेवो त्पन्नाब्रह्माद्यादेवाःस्वपितरंसत्यमेववासुदेवाख्यमुपासते । सत्यस्योपास्तिप्रकारंवक्तुमाह ॥ तदेतदिति ॥ सत्यमितियत्तदेत दक्षरं कथमित्यतआह ॥ सदित्येकमक्षरमिति ॥ तीत्येकमक्षरमित्यत्रहलंततकारनिर्देशार्थइकारानुबंधः । तत्रप्रथमांतिमा क्षरयोरर्थमाह ॥ प्रथमेति ॥ उत्तमशब्दअंतिमशब्दार्थः। प्रथमोत्तमेअक्षरेसकारयकारौसत्यंवासुदेववाचकौइत्यर्थः । मध्यतो विद्यमानमक्षरंतीत्येतदनृतंमिथ्याज्ञानवाचकमित्यर्थः । तदेतदनृतंमिथ्याज्ञानंउभयतःपूर्वोत्तरतः । सत्येनवासुदेवेनसकारयका रवाच्येन परिगृहीतमंतर्भावितं सादनात्सकारवाच्योवासुदेवोऽज्ञानंसादयन्तदधस्तात्स्थितः नाशनाद्यकारवाच्योवासुदेवोऽज्ञा नंनाशयन् तदुपरिष्टात्स्थितइत्यर्थः । एवंपूर्वोत्तराभ्यांसत्येनपरिगृहीतत्वादनृतंसत्यभूयमेव सत्यशब्दवाच्यवासुदेवप्रधानकमे वभवति । एवंवेत्तुःफलमाह ॥ नैवमिति ॥ एवंविद्वांसमनृतंमिथ्याज्ञानंनहिनस्ति नास्यमिथ्याज्ञानंभवेदित्यर्थः ॥ १ ॥

उप० । आपएवेदमग्रआसुस्ताआपःसत्यमसृजंत सत्यंब्रह्म ब्रह्मप्रजापतिं प्रजापतिर्देवांस्तेदेवाःसत्यमेवोपासते तदेतत्र्यक्षरꣳसत्यमिति सदित्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमेअक्षरेसत्यं मध्यतोनृतंतदेतदनृतमुभयतःसत्येनपरिगृहीतंसत्यभूयमेवभवति नैवंविद्वाꣳसम नृतंहिनस्ति ॥ १ ॥

अथभाष्यार्थः ॥ तस्यैववासुदेवस्योपासनास्थानमाह ॥ तदितिब्राह्मणेन ॥ तत्रसत्याख्यस्यवासुदेवस्यादित्यांशेदउच्यतइति प्रतीतिनिरासायतद्व्याचष्टे ॥ सइति ॥ तत्रनिमित्तमाह ॥ आदानादिति ॥ यश्चायंदक्षिणेक्षन्पुरुषइत्येतद्व्याचष्टे ॥ यएषइति ॥ तावेतावन्योन्यस्मिन्प्रतिष्ठितौइतिवाक्यंव्याचष्टे ॥ तच्चेति ॥ ननुदक्षिणाक्षिस्थंरूपमादित्ये आदित्यस्थंरूपंदक्षिणाक्षिणिस्थितमित्ये तदसंभावितमित्यतउक्तंउपनिषदिरश्मिभिरिति तस्यार्थमाह ॥ प्राणैरिति ॥ सयदोत्क्रमिष्यन्भवतीत्यादिव्याचष्टे ॥ दक्षिणेनेति ॥ शुद्धमित्यस्यार्थोविरश्मिकमिति किंरश्म्यभावादेवविरश्मिकंनेत्याह ॥ नास्येति ॥ तदैवेत्युक्तंविवृणोति ॥ तत्क्षणइति ॥ सप्तभिर्दिनैःसप्तदिनात्पूर्वं ॥ तत्रश्चायंखंडार्थः ॥ तत्प्रसिद्धं यत्सत्यंवासुदेवाख्यंपूर्वोक्तं तदसौ असौ कः एतस्मिन्परिदृश्यमाने मंडले यएषपुरुषोवर्तते सआदित्यःआदित्यस्थोहविषामादानादादित्यनामा योयंदक्षिणेक्षन्नक्षणिपुरुषोवर्तते सचेतियोजना। नकेवलमादित्यस्थंवासुदेवस्यरूपमादित्यएवाक्षिस्थंरूपंअक्षण्येववर्तते किंतुतावेतावादित्याक्षिस्थौपरमात्मानाव

---

भा० । सवासुदेवांशस्सयानादित्यस्थोजनार्दनः । आदित्यनामासंप्रोक्तआदानाद्धविषांसदा । सएवदक्षिणाक्षिस्थस्तत्स्वरूपद्वयंहरेः । अन्योन्यस्मिंस्थितंनित्यंप्राणैश्चसहरश्मिभिः । दक्षिणाक्षिस्थितोविष्णुर्यदाम्माद्रुत्क्रमिष्यति । तदैवम्रियमाणस्तुजीवःपश्येद्विरश्मिकं । सूर्यस्यमंडलंनास्यप्रतीयंतेहिरश्मयः । तत्क्षणंनियमेनैवकेषांचित्सप्तभिर्दिनैः ॥ २ ॥

उप० । तद्यत्तत्सत्यमसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ

न्योन्यस्मिन्प्रतिष्ठतौ आदित्यस्थश्चक्षुषिचक्षुस्थश्चआदित्येवर्ततइत्यर्थः । नन्वेतदसंभावितमित्यतआह ॥ रश्मिभिरिति ॥ एष आदित्यस्थोहरीरश्मिभिःसहास्मिन्चक्षुषिप्रतिष्ठितः आदित्यरश्मयश्चक्षुषःउपकारकतयाचक्षुष्यपितिष्ठंतीतिआदित्यस्थश्चक्षुष्य पितिष्ठतीत्यर्थः । अयंदक्षिणाक्षिस्थःपरमात्मा प्राणैश्चक्षुरादिभिःसहामुष्मिन्नादित्येप्रतिष्ठितः चक्षुरादयःप्राणाःसूर्यमंड लमपिप्रकाशयंतस्तस्मिंस्तिष्ठंतीति अयममुष्मिन्प्रतिष्ठितइत्यर्थः। दक्षिणाक्षिस्थस्यैवादित्यस्थत्वेहेतुमाह ॥ सइति ॥ दक्षिणा क्षिस्थोभगवान् यदाऽस्माद्देहादुत्क्रमिष्यन्नुत्क्रांतीच्छुर्भवति तदैवतत्क्षणएव तत्सप्तदिनात्पूर्ववा म्रियमाणोजीवएतत्सूर्यमंडलंशुद्ध मेवविरश्मिकमेवपश्यति रश्म्यभावाद्विरश्मिकंपश्यतिकिंनेत्याह ॥ नैनमिति ॥ एतेविद्यमानाअपिरश्मयः एनंम्रियमाणं न प्रत्याययंतिनास्यप्रतीयंतइत्यर्थः ॥ २ ॥ अत्रभाष्यार्थः ॥ सूर्याक्षिस्थितयोर्वासुदेवरूपयोर्ध्यानार्थंतदवयवनामानितयोरहस्यं

उप० । रश्मिभिरेषोस्मिन्प्रतिष्ठितःप्राणैरयममुष्मिन्सयदोत्क्रमिष्यन्भवतिशुद्धमेवैतन्मंडलंपश्यतिनैनमेतेरश्मयःप्रत्याययंति ॥ २ ॥

भा० । सवासुदेवोभगवानादित्यस्थोजनार्दनः । आदित्यनामासंप्रोक्तआदानाद्धविषांसदा । सएवदक्षिणाक्षिस्थस्तच्चरूपद्वयंहरेः । अन्यो न्यस्मिंस्थितंनित्यंप्राणैश्चसहरश्मिभिः । दक्षिणाक्षिस्थितोविष्णुर्यदास्मादुत्क्रमिष्यति । तदैवम्रियमाणस्तुजीवःपश्येद्विरश्मिकं । सूर्यस्यमंडलंना स्यप्रतीयंतेहिरश्मयः । तत्क्षणेनियमेनैवकेषांचित्सप्तभिर्दिनैः ॥ २ ॥

उप० । तद्यत्तत्सत्यमसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौरश्मिभिरेषोस्मिन्प्रति ष्ठितःप्राणैरयममुष्मिन्सयदोत्क्रमिष्यन्भवतिशुद्धमेवैतन्मंडलंपश्यतिनैनमेतेरश्मयःप्रत्याययंति ॥ २ ॥



658

नामचाह ॥ **यएषइतिब्राह्मणेन** ॥ तत्रतस्यभूरितिशिरइत्यादित्याक्षिस्थविष्णुशिरसोभूर्नामकत्वमुक्तंतत्रनिमित्तंदर्शयंस्तद्व्या
चष्टे ॥ **तस्येति** ॥ आदित्याक्षिस्थस्येत्यर्थः । भावनंनामकिमित्यतआह ॥ **भावनमिति** ॥ भूसत्तायामितिधातुस्सत्ताचरक्ष
णरूपैवेत्यर्थः । उत्पादनहेतुत्वेनभुशब्दवाच्यत्वस्यदक्षिणबाहोर्वक्ष्यमाणत्वादेवंव्याख्यातं । तर्हिशिरसःकथंरक्षणहेतुत्वमित्य
तआह ॥ **दृष्टयेति** ॥ विष्णुर्दृष्ट्यावाचाचभक्तान्रक्षति । दृष्ट्यादिकंचशिरोंतर्भूतमित्यर्थः । भुवइतिबाहूइतिवाक्यंव्याचष्टे ॥
॥ **उत्पादनादिति** ॥ वागतिगंधनयोरितिधातोर्वातेर्गत्यर्थत्वात्सनष्टइत्यर्थेसगतइतिप्रयोगात् गतिश्चविनाशइतिभावेनाह ॥
॥ **विनाशनादिति** ॥ सुवरितिप्रतिष्ठेतिवाक्यंव्याचष्टे ॥ **स्वित्यानंदइति**॥ तद्दानात्स्वरूपभूतानंदज्ञानदानात् । कःपादःकिं
वर्णनामकइत्यतआह॥ **दक्षिणश्चेति**॥ क्रमादेवेत्यन्वयः। दक्षिणश्चसव्यश्चेत्यस्यपादावित्यन्वयः । मुक्तिदानेनेतिभगवत्पदद्वय
स्यमुक्तिदातृत्वमुक्तंतत्रकिंमानमित्यतआह ॥ **हितत्प्राप्तिरिति** ॥ हियस्माद्भगवत्पदप्राप्तिर्मुक्तिरित्यभिधीयते भजेखगेंद्रध्व
जपादमूलमित्यादौ । तस्मात्पदद्वयस्यमुक्तिदातृत्वमुपपन्नमित्यर्थः । तस्योपनिषदहमित्यत्राक्षिस्थस्यजीवस्याहमितिनामोक्तमित्य
सत् जीवस्याक्षणिपृथक्शिरोबाह्वादेरभावात् हृदिस्थितमेवतस्यरूपंजागरितेप्यक्ष्यादिषुविशेषसन्निहितंभवतीत्युक्तंप्राक् तस्मा

---

भा० । तस्यविष्णोःशिरोनामभावनाद्भूरितिस्मृतं । भावनंरक्षणंप्रोक्तंदृष्ट्यावाचाचरक्षति । उत्पादनाद्भुनामास्याद्दक्षिणोबाहुरस्यतु ।
विनाशनाद्वइत्युक्तःसव्योबाहुःपरात्मनः । स्वित्यानदस्समुद्दिष्टोवरितिज्ञानमुच्यते । मुक्तिदानेनतद्दानात्सुवरस्यपदद्वयं । दक्षिणश्चैवसव्यश्चक्र
माद्वर्णद्वयोदितौ । पादावस्यहितत्प्राप्तिर्मुक्तिरित्यभिधीयते ।

दक्षिस्थस्यविष्णोरेवाहमितिरहस्यंनामोक्तं । तस्यार्थमाह ॥ अहमिति ॥ एषदक्षिणाक्षिस्थः । अहेयत्वंकथमित्यतआह ॥ जीवेनेति ॥ तस्योपनिषदहरितिवाक्यंव्याचष्टे ॥ असाविति ॥ असावादित्यस्थः प्रकाशनादिति अहर्दिनंप्रकाशश्चेतिवचनादित्यर्थः । हंतिपाप्मानंजहातिचयएवंवेदेतिवाक्यंव्याचष्टे॥ तद्वेदनादिति ॥तद्वेदनादेवेतिसंबंधः। कानिचिज्जहातिचेत्यन्वयः। तदेवविवृणोति ॥ हंतीति ॥ ततश्चायंखंडार्थः॥ यएषप्रसिद्धः एतस्मिन्मंडलेवर्तमानः पुरुषः पूर्णषड्गुणोवासुदेवः। तस्यशिरोभावनाद्रक्षणाद्भूरित्युच्यते भूरित्यस्यशिरोनामत्वेयुक्तिमाह॥एकंहीति॥ हियस्माच्छिरएकमेतद्भूरित्यक्षरंचैकमतः साम्याच्छिरसोभूरिति नामवत्त्वंउपपन्नमित्यर्थः । तस्यबाहूभुवइत्युच्येते उत्पादनाद्दक्षिणोबाहुर्भुजइत्युक्तः । विनाशनात्सव्योबाहुर्वइत्युक्तइत्यर्थः।तत्रपूर्ववद्युक्तिमाह॥द्वाविति॥तस्यप्रतिष्ठापादःसुवरित्युच्यते । तस्यदक्षिणःपादःस्वरूपभूतानंददानात्स्वित्युक्तः सव्यःपादः स्वरूपभूतज्ञानदानाद्वरित्युक्तइत्यर्थः । तत्रयुक्तिमाह॥ द्वेइति ॥ आदित्यस्थस्यविष्णोःरहस्यंनामाह ॥ तस्येति॥ सर्वलोकप्रकाशनादहरितितस्योपनिषद्रहस्यंनाम । एवंवेतुः फलमाह ॥ हंतीति ॥ यएवंवेदसपाप्मानंसर्वंहंति कल्यादीन्पापप्रेरका

---

भा० । अहमेपोह्यहेयत्वाज्जीवेनसहभावतः । असावहरितिप्रोक्तःसर्वलोकप्रकाशनात् । तद्वेदनात्सर्वपापंहंतिचैवजहातिच । कानिचिद्धंतिपापानिकल्यादीन्संजहातिचेतिप्रवृत्ते ॥ ३ ॥ ४ ॥

उप० । यएषएतस्मिन्मंडलेपुरुषस्तस्यभूरितिशिरएकंशिरएकमेतदक्षरंभुवइतिबाहूद्वौबाहूद्वेएतेअक्षरेसुवरितिप्रतिष्ठाप्रतिष्ठेद्वेएतेअक्षरे तस्योपनिषदहरितिहंतिपाप्मानंजहातिचयएवंवेद ॥ ३ ॥

न्संजहातिचेत्यर्थः॥३॥ योयमित्यादिकंपूर्ववदुक्तार्थं॥४॥इतिपंचमब्राह्मणं॥५॥ एवमादित्यक्षिस्थत्वेनभगवदुपासनामुक्त्वा हृत्स्थत्वेनापितदुपासनंकर्तव्यमितिभावेनतद्गुणानाह॥ मनोमयइतिब्राह्मणेन ॥ तत्रमनोमयइतिमनोविकारित्वमुच्यतइतिप्र तीतिनिरासायतदनूद्यव्याचष्टे ॥ मनोमयइति ॥ मनुअवबोधनइतिधातोर्मनःशब्दस्यज्ञानवाचित्वाज्ज्ञानमयइत्युक्तं । मय टोविकारार्थत्वप्रतीतिनिरासायार्थमाह ॥ प्रधानमिति॥ तादात्म्यंचेतिग्राह्यं । वक्ष्यमाणश्चशब्दोत्रसंबध्यते । तेनवातादात्म्य समुच्चयः । अस्त्वेवंमयटोऽर्थद्वयंततोज्ञानमयइत्यस्यकोर्थोलभ्यतइत्यतआह ॥ महाज्ञानात्मकइति ॥ एवकारोविकारार्थत्व निवारणार्थः । भारूपःप्रकाशरूपः सत्यइत्यस्यव्याख्यानंसद्गुणात्मकइति । सर्वमिदंप्रशास्तियदिदंकिंचेत्यस्यार्थःसर्वप्रशासकोवि ष्णुरिति॥६॥ ततश्चायंखंडार्थः ॥ अयंपुरुषःपूर्णषड्गुणोभगवान् मनोमयोमहाज्ञानात्मकः भाःप्रकाशरूपस्सत्यःसद्गुणात्मकः व्रीहिर्वायवोवायथायत्प्रमाणः तथातत्परिमाणःसन्तस्मिन्प्रसिद्धेऽतर्हृदयेहृदयांतस्तिष्ठतियोगिभिर्दृश्यतेवा सएषहृत्स्थःपरमात्मा सर्वस्येशानःसर्वस्याधिपतिः यदिदंप्रसिद्धंकिंचेदंसर्वजगत्प्रशास्तीत्यर्थः॥ इतिषष्ठंब्राह्मणं॥६॥ अथभाष्यार्थः ॥ भगवद्विषयं

---

उप० । योयंदक्षिणेक्षन्पुरुषस्तस्यभूरितिशिरएकंशिरएकमेतदक्षरं भुवइतिबाहूद्वौबाहूद्वेएतेअक्षरेसुवरितिप्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरेत स्योपनिषदहमितिहंतिपाप्मानंजहातिचयएवंवेद ॥ ४ ॥ पंचमंब्राह्मणं ॥ ५ ॥

भा० । मनोमयोज्ञानमयःप्रधानंमयउच्यते । महाज्ञानात्मकश्चैवभारूपःसद्गुणात्मकः । सर्वप्रशासकोविष्णुः ॥ इतिषष्ठंब्राह्मणं ॥ ६ ॥

 उ० । मनोमयोयंपुरुषोभाःसत्यस्तस्मिन्नंतर्हृदयेयथाव्रीहिर्वायवोवासएषसर्वस्येशानःसर्वस्याधिपतिःसर्वमिदंप्रशास्तियदिदंकिंच॥षष्ठंब्राह्मणं॥६

विद्यांतरमुपदिशति ॥ **विद्युदितिब्राह्मणेन** ॥ तद्व्याचष्टे॥विद्युदिति॥विष्णुरित्यत्रापिसंबध्यते विदानाद्विद्युदितिविद्युच्छब्दनिर्वचनंकृतं । तत्रविदानादित्यस्यार्थमाह ॥ **सर्वस्यवेदनादिति** ॥ यएवंवेदविद्युद्ब्रह्मेतीत्यत्रैवंशब्दोप्यर्थः । व्याख्यानव्याख्येयभावश्चाऽगतिकागतिरित्याशंकापरिहारायतद्व्याचष्टे ॥ **यएनमिति** ॥ एनंवेत्तारमितिविद्युद्ब्रह्मेतीत्यर्थः । एवंशब्दार्थःसर्वस्यपरमेश्वरमिति । ततश्चपूर्वब्राह्मणोक्तपरामर्शकतयानतस्यवैयर्थ्यमितिभावः । ततश्चपूर्वब्राह्मणोक्तप्रकारेणभगवज्ज्ञानिनोपिइदमेव फलं । अतएवपूर्वब्राह्मणेफलानुक्तिः । विद्यत्येनंपाप्मनइतिवाक्यंव्याचष्टे॥ **पाप्मभ्यइति** ॥ ७ ॥ **ततश्चायंखंडार्थः** ॥ विद्युद्ब्रह्मेत्याहुर्विद्वांसः । तत्रनिमित्तमाह ॥ **विदानादिति** ॥ सर्वस्यवेदनात्खंडनाद्वाविद्युत् । उपासकस्यतदनुरूपंफलमाह ॥ **विद्यत्येनमिति** ॥ योधिकारी एवंपूर्वब्राह्मणोक्तप्रकारेण विद्युद्ब्रह्मेतिचवेद एनंवेत्तारंतेनज्ञातोहरिःपाप्मनोविद्यतिमोचयति । नकेवलमेतावत् । किंतुएनंस्वात्मानंविद्यतिवेदयतीत्यर्थः ॥ **सप्तमंब्राह्मणं** ॥७॥ **अथभाष्यार्थः** ॥ सर्वविद्यासिद्ध्यंगभूतसरस्वतीविषयांविद्यामाह ॥**वाचमितिब्राह्मणेन** ॥ अत्रवाग्धेनुत्वमविद्यमानमेवोपासनार्थमुच्यतइतिप्रतीतिनिरासायब्राह्मणंप्रमाणेन व्याचष्टे ॥ **सरस्वतीति** ॥ **स्तनानेवेति** ॥ स्वाहाकारादिषुचतुर्षुसरस्वतीस्तनसन्निधानादित्यर्थः । तस्याःप्राणऋषभइतिवा

भा०। विद्युत्सर्वस्यवेदनात्। यएनंवेदवेत्तारंसर्वस्यपरमेश्वरं। पापेभ्योमोचयित्वैनंस्वात्मानंवेदयेद्धरिरितिमाहात्म्ये ॥ **इतिसप्तमब्राह्मणं** ७

उप० । विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युत्विद्यत्येनंपाप्मनोयएवंवेदविद्युद्ब्रह्मेतिविद्युद्ध्येवब्रह्म ॥ **इतिसप्तमब्राह्मणं** ॥ ७ ॥

भा० । सरस्वतीतुगोरूपातस्यादेवादयोखिलाः । स्तनानेवोपजीवंति

क्यंव्याचष्टे ॥ तस्याइति ॥ मनोवत्सइत्यस्यार्थमाह ॥ वत्सइति ॥ ८ ॥ ततश्चायंखंडार्थः ॥ धेनुंगोरूपांवाचंवागभिमानिनींसरस्वतीमुपासीत । किमित्युपासनीयमित्यतोदेवाद्युपजीव्यस्तनवत्त्वेनेतिवक्तुमाह ॥ तस्याइति ॥ तस्याःगोरूपायाःसरस्वत्याश्चत्वारःस्तनाः । केतइत्यतआह ॥ स्वाहाकारइति ॥ स्वाहाकाराभिमानीत्यादिव्याख्येयं । तस्यैतस्याः द्यौस्तनौदेवाउपजीवंति कौताविलयतआह ॥ स्वाहाकारमिति ॥ मनुष्याःपितरउपजीवंतीतिसंबंधः । तस्याःगोरूपायाःवाचः प्राणोमुख्यवायुः ऋषभःपतिः मनो मनोभिमानीरुद्रो वत्सइत्युपासीतेतिसंबंधः ॥ इत्यष्टमब्राह्मणं ॥ ८ ॥ अथभाष्यार्थः ॥ भगवद्विषयंविद्यांतरमाह ॥ अयमग्निरिति ॥ अग्निर्वैश्वानरइतिवैश्वानरशब्दस्यप्रसिद्धाग्निशब्दसामानाधिकरण्येनब्राह्मणमग्निपरमितिप्रतीतिनिरासायप्रमाणेनव्याचष्टे ॥ अग्निनामात्विति ॥ कुतइत्यतआह ॥ अग्नौप्रतिष्ठितइति ॥ योयमंतःपुरुषइत्यादिवाक्यानुरोधादौदर्येत्यग्निविशेषणं । वैश्वानरशब्दार्थमाह ॥ विश्वैरिति ॥ विश्वगुणसंबंधित्वाद्विश्वः आसम्यक्नरीयतइत्यानरःवैश्वश्चासावानरश्चेतिवैश्वानरइत्यर्थः । आनरइत्यस्यार्थोऽनंतत्वादिति । अग्निनामातुभगवानित्युक्तं । तत्राग्निशब्दंनिर्वक्ति

---

भा० । तस्यावायुःपतिःप्रभुः । वत्सोमनोभिमान्यस्याःसरस्वत्याःसदाशिवइतिप्रभंजने ॥ इत्यष्टमब्राह्मणं ॥ ८ ॥

उप० । वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंतकारःस्वधाकारस्तस्यैद्वौस्तनौदेवाउपजीवंतिस्वाहाकारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्तस्याःप्राणऋषभोमनोवत्सः ॥ इत्यष्टमब्राह्मणं ॥ ८ ॥

भा० । अग्निनामातुभगवानौदर्याग्नौप्रतिष्ठितः । विश्वैःगुणैःसमेतत्वादनंतत्वाच्चसप्रभुः । वैश्वानरइतिप्रोक्तः

वदमानाब्रह्मजग्मुरितिवाक्यंव्याचष्टे ॥ **विवदंतइति** ॥ अहंश्रेयानहंश्रेयानितिविवदंतइतिसंबंधः । तद्धोवाचयस्मिन्वउत्क्रांतइदंशरीरंपापीयोमन्यतेसवोवसिष्ठइतिवाक्यंतात्पर्यतोव्याचष्टे ॥ **उक्तमिति** ॥ त्यक्ते देहइतिशेषः । सवोवसिष्ठइत्यनंतरंवक्तव्यमाह ॥ **इत्युक्ताइति** ॥ वाग्घोच्चक्रामचक्षुर्होच्चक्रामेत्यादीनिवाक्यानिव्याचष्टे ॥ **उत्क्रांताश्चेति** ॥ तद्विज्ञप्त्यैभगवदुक्तपरीक्षार्थंसासंवत्सरंप्रोष्याऽगत्योवाचेत्यादि एवमजीविष्मेत्यंतानिवाक्यानिअत्रवागादिशब्दैःप्रसिद्धवागादिकमुच्यतइत्यन्यथाप्रतीतिनिरासायतात्पर्यतोव्याचष्टे ॥ **सुपर्णेति** ॥ अत्रसुपर्णशेषरुद्राःमनोभिमानिनः इंद्रःश्रोत्राभिमानी सूर्यश्चक्षुरभिमानी आदिपदेनवागभिमान्यग्नीरेतोभिमानीवरुणश्चग्राह्यः । यथोक्तमन्यत्र । अग्निरेवतु उपचारतोवसिष्ठःस्यात्प्रतिष्ठैवंरविस्तथा । संपदिंद्रस्तथैवोक्तोरुद्रआयतनंतथेति वरुणोवीर्यदेवतेतिच । नन्वेकस्योत्क्रांतत्वात्कथंशरीरंनपपातेत्यतआह ॥**ऋतइति**॥ अनेनयथाऽकलाअवदंतोवाचाप्राणंतःप्राणेनपश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेणविद्वांसोमनसाप्रजायमानारेतसेत्यादीनिवाक्यानिव्याख्यातानि । अथहप्राणउत्क्रमिष्यन्नित्यादि नवैशक्ष्यामस्त्वदृतेजीवितुमितीत्यंतवाक्यस्यतात्पर्यमाह ॥ **प्राणइति** ॥ एतदेवकैमुत्येनसाधयति ॥ **प्राणंविनेति** ॥ यदाप्राणंविनाब्रह्मापिस्थातुंनैवशक्तस्ततस्तदाऽन्येस्थातुंनशक्ताइतिकुतःकिमुइतिसंबंधः ।

भा० । विवदंतोखिलादेवाययुर्नारायणंप्रभुं । अहंश्रेयानहंश्रेयानितिवायुपुरःसराः । उक्तंभगवतातेनयेनत्यक्तोखिलाअपि । स्थातुंनशक्ताःसश्रेयानित्युक्ताःपुनरागताः । उत्क्रांताश्चपुनःसर्वेतद्विज्ञप्त्यैपृथक्पृथक् । सुपर्णशेषरुद्रेंद्रसूर्यादिषुपृथक्पृथक् । उत्क्रांतेपुत्रब्रह्मदेहाच्छरीरंनपपातह । ऋतउत्क्रांतमेकंतुतदन्येनिवसंतिच । प्राणउच्चिक्रमिषतिस्थातुंनाशकुवन्परे । प्राणंविनानचब्रह्मा

यद्वायदायस्माद्ब्रह्माप्यसमर्थःततस्तस्मादन्येकुतःकारणाच्छक्ताइत्यर्थः । तर्ह्येवंप्राणोनन्यापेक्षःकिंनेत्याह ॥ तंविनेति ॥ तं ब्रह्माणंविनाप्राणोपिस्थातुंनैवशक्तइत्यर्थः । प्राणब्रह्माणौपरस्परानाश्रयेणस्थातुमशक्तौचेत्कथंतिष्ठतइत्यतआह ॥ अन्योन्येति ॥ नन्वेवंसति उदासीनवदास्तांतौकेशवश्चाब्जसंभवः । तेषांवलपरीक्षार्थमिति हरेर्विरिंचस्यतुमध्यसंस्थितेस्तदन्यदेवाधिपतिःसमारुतइतिवचनेनविरोधःस्यादितिचेन्न । अत्रापिप्राणकलहेब्रह्मणोप्रवेशात् श्रुतौतथानुक्तत्वात् प्राणंविनेतिवचनंतुप्राणब्रह्मणोःस्वस्वशरीरेस्थातुंपरस्परंसापेक्षावेवसमर्थौनतुनिरपेक्षौ । वायुंविनाब्रह्मणोपिशरीरंपूतिमेष्यति । वायुश्चशोपमायातिविनाब्रह्माणमित्युक्तत्वात् । सतिचैवंयदावायुव्यतिरेकेणब्रह्मास्वशरीरस्थितावसमर्थः किम्वन्यइत्येवंपरं । ननुयस्माच्छरीराद्देवानामुत्क्रमणमासीत्सोपिब्रह्मदेहःतथाचकथंविष्णुंब्रह्माणंविना वायुमात्रेणतद्देहावस्थानमितिचेत् न । तयोस्तत्रोदासीनमात्रत्वेन नियमेनव्यतिरेकाभावादितिज्ञेयं । तेहोचुर्माभगवन्नु(उ)त्क्रामीर्नवैशक्ष्यामस्त्वदृतेजीवितुमितिवाक्यफलितमाह ॥तस्मादिति॥ तथाचश्रुत्यंतरं तंहाभिसमेत्योचुर्भगवन्नेधित्वंनःश्रेयोऽसिमोत्क्रामीरिति ॥ १ ॥ ततश्चायंखंडार्थः ॥ प्राणज्ञानमवश्यंसंपाद्यमितिभावेनतज्ज्ञानिनःफलमाह ॥ योहवाइति ॥ योऽधिकारी अखिलदेवानांवयसाज्येष्ठं गुणतःश्रेष्ठंचवेद सइहैवस्वानांम

---

भा० । तंविनाप्राणएवच । अन्योन्यापाश्रयाच्छक्तौस्थातुमन्येकुतस्ततः । तस्मात्प्राणोवरोदेवेष्विति सर्वेपिमेनिरइतिपवमाने ॥ प्रथमब्राह्मणं ॥ १ ॥

उप० । योहवैज्येष्ठंचश्रेष्ठंचवेदज्येष्ठश्चश्रेष्ठश्चस्वानांभवति ।

ध्येज्येष्ठश्चश्रेष्ठश्चभवति ज्येष्ठश्चश्रेष्ठश्चकइत्यतआह ॥ **प्राणइति** ॥ नकेवलंप्राणस्यज्येष्ठत्वश्रेष्ठत्ववेत्तुरुक्तंफलमैहिकमात्रंज्ञाय ते किंतुमौक्तंचेतिभावेनफलांतरमाह ॥ **ज्येष्ठश्चेति** ॥ यएवंवेदसः नकेवलममुक्तौस्वानांमध्यएव अपिचअपितुमुक्तावपिये षांमध्येज्येष्ठश्चश्रेष्ठश्चबुभूषतिभवितुमिच्छति तेषांमध्येज्येष्ठःश्रेष्ठश्चभवतीत्यर्थः । यथोक्तं यःश्रेष्ठंज्येष्ठमखिलंदेवानांवायुमंज सा । वेदसःस्वसमानानांज्येष्ठःश्रेष्ठोविमुक्तिगइति ॥ १ ॥ योहवैवसिष्ठांवसतामुत्तमांवेद सइहैवस्वानांस्वकीयानांवसिष्ठोवस तामुत्तमोभवति । कावसिष्ठेत्यतआह ॥ **वाग्वाइति** ॥ वागभिमान्यग्निरित्यर्थः । यथोक्तं अग्निरेवतु । उपचारतोवसिष्ठःस्या दिति । नकेवलंवाचोवसिष्ठात्ववेत्तुरुक्तमैहिकमात्रफलं किंतुमौक्तंचेतिभावेनफलांतरमाह ॥ **वसिष्ठइति** ॥ यथोक्तं समीपे वसतांश्रेष्ठोवसिष्ठस्यैववेदनादिति ॥ २ ॥ योहवैप्रतिष्ठांवेदसज्ञानी यदिएतल्लोकेस्थितीच्छुः तदासमेसर्वप्राप्यतयासर्वसाधा रणेअस्मिन्लोकेप्रतितिष्ठति । यदिस्वर्गादिलोकेस्थितीच्छुः तदादुर्गेगंतुमशक्येअमुष्मिन्स्वर्गादिलोकेप्रतितिष्ठति । तथाचश्रुत्यं तरं । योहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिँल्लोकेमुष्मिंश्चेति।काप्रतिष्ठेत्यतआह ॥ **चक्षुर्वैप्रतिष्ठेति** ॥ चक्षुःसूर्यः यथोक्तंप्रतिष्ठैवं रविस्तथेति । तदुपपादयति ॥ **चक्षुषाहीति** ॥ नकेवलंसूर्यस्यप्रतिष्ठात्ववेत्तुरुक्तंफलमैहिकमात्रं किंतुमौक्तंचेतिभावेनाह ॥



---

उप० । प्राणोवैज्येष्ठश्चश्रेष्ठश्चज्येष्ठश्चश्रेष्ठश्चस्वानांभवत्यपिचयेषांबुभूपतियएवंवेद ॥ १ ॥ योहवैवसिष्ठांवेदवसिष्ठःस्वानांभवतिवाग्वैव सिष्ठावसिष्ठःस्वानांभवत्यपिचयेषांबुभूषतियएवंवेद ॥ २ ॥ योहवैप्रतिष्ठांवेदप्रतितिष्ठतिसमेप्रतितिष्ठतिदुर्गेचक्षुर्वैप्रतिष्ठाचक्षुषाहिसमेचदुर्गेच

प्रतितिष्ठतीति ॥ यएवंवेद सज्ञानी यदिसांतानिकलोकस्थितीच्छुस्तदा समेसर्वयोग्यसाधारणे अस्मिन्सांतानिकलोके प्रति
तिष्ठति । यदिविष्णुलोकेस्थितीच्छुस्तदादुर्गेऽन्यैर्गंतुमशक्येविष्णुलोकेप्रतितिष्ठतीत्यर्थः । यथोक्तं एकस्थानेस्थितिस्तुस्यात्प्रति
ष्ठाज्ञस्यचेच्छतइति ॥ ३ ॥ योहवैसंपदंवेद सः इहयंकामंकामयते सोस्मैज्ञानिनेसंपद्यतेह कासंपदित्यतआह ॥ श्रोत्रमिति ॥
श्रोत्राभिमानिनीइंद्रः । यथोक्तं संपदिंद्रस्तथैवोक्तइति । तदुपपादयति ॥ श्रोत्रंहीति ॥ तज्ज्ञानिनोमौक्तंचोक्तंफलमाह ॥
समिति ॥ यथोक्तं संपद्धेतुःसंपदःस्युरिति ॥ ४ ॥ योहवाआयतनंवेद सस्वानांस्वकीयानामायतनंगृहमाश्रयोभवति । नके
वलंस्वानामेव किंत्वन्येषामपिजनानामायतनंभवति । किमायतनमित्यतआह ॥ मनइति ॥ मनोभिमानिनःशेषसुपर्णरुद्राः ।
यथोक्तं रुद्रआयतनंतथेति । तत्रसुपर्णशेषरुद्रेत्येतद्भाष्यानुसारेणरुद्रशब्दोऽन्योपलक्षकः । तज्ज्ञानिनोमौक्तंचोक्तंफलमाह ॥
आयतनमिति ॥ यथोक्तं गृहंचायतनंविदुरिति ॥ ५ ॥ योहवैप्रजापतिंवेद सप्रजयापशुभिश्च प्रजायतेप्रकृष्टोजायते कःप्र
जापतिरित्यतआह ॥ रेतइति ॥ रेतोभिमानीवरुणः मौक्तंचफलमाह ॥ प्रजायतइति ॥ ६ ॥ प्राणस्यज्येष्ठत्वंश्रेष्ठत्वंचोक्तं

---

उप० । प्रतितिष्ठतितिष्ठतिसमेप्रतितिष्ठतिदुर्गेयएवंवेद ॥ ३ ॥ योहवैसंपदंवेदसꣳहास्मैपद्यतेयंकामंकामयतेश्रोत्रंवैसंपच्छ्रोत्रेहीमेसर्वेवे
दाअभिसंपन्नाःसꣳहास्मैपद्यतेतंकामंकामयतेयएवंवेद ॥ ४ ॥ योहवाआयतनंवेदायतनंस्वानांभवत्यायतनंजनानांमनोवाआयतनमायतनꣳस्वा
नांभवत्यायतनंजनानांयएवंवेद ॥ ५ ॥ योहवैप्रजापतिंवेदप्रजायतेहप्रजयापशुभीरेतोवैप्रजापतिःप्रजायतेहप्रजयापशुभिर्यएवंवेद ॥ ६ ॥

तत्कुतइत्यतोमीमांसयासमर्थितत्वादितिभावेनाख्यायिकामाह ॥ तेहेमइति ॥ तइमेपूर्वोक्ताःप्राणाःवायुपुरःसराःदेवाः अहं श्रेयसेअहंश्रेयानित्यर्थे विवदमानाः ब्रह्मनारायणाख्यंप्रति जग्मुर्हे । तत्रगत्वादेवास्तन्नारायणाख्यंब्रह्मप्रत्यूचुः किमिति नो स्माकंमध्ये कोवसिष्ठःश्रेष्ठइति । एवमुक्तंतद्ब्रह्म देवान्प्रत्युवाच किमिति वोयुष्माकंमध्ये यस्मिन्नुत्क्रांतेअस्माच्छरीरान्निर्गते सति इदंशरीरंब्रह्मशरीरं पापीयःपापिष्ठं मन्यतेलोकः सवोयुष्माकंमध्ये वसिष्ठःश्रेष्ठइति यस्मिन्नुत्क्रांतेसत्यन्येस्थातुमशक्ताः सःश्रेयानितिभावः ॥ ७ ॥ एवमुक्तेसतितत्परीक्षणायतेषांमध्येवागुच्चक्रामह तदुत्क्रमणेपिशरीरंनपपातेतिग्राह्यं । सोत्क्रांतावाक् संवत्सरंसंवत्सरपर्यंतं प्रोष्यान्यत्रस्थित्वा पुनर्ब्रह्मदेहस्थान्देवान्प्रत्यागत्योवाच । किमिति यूयं मदृतेमांविना जीवितुंस्थातुं कथमशकतेति । एवमुक्तास्तेदेवाः ऊचुर्ह यथाअकलामूकाः वाचावागिंद्रियेणावदंतोपि प्राणेनप्राणंतः चक्षुषापश्यंतः श्रोत्रेण शृण्वंतो मनसाविद्वांसो रेतसाप्रजायमानाःप्रजामुत्पादयंतोजीवंति एवमजीविष्मेति । एवमुक्तावाक्नाहंवसिष्ठेतिनिश्चित्यत स्मिन्शरीरेप्रविवेशह ॥ ८ ॥ एवंचक्षुर्होच्चक्रामेत्यादिव्याख्येयं ॥ ९ ॥ १० ॥ यथामुग्धाःषण्मासाःबालाः मनसाऽविद्वांसः ।

---

उप० । तेहेमेप्राणाअहꣳश्रेयसेविवदमानाब्रह्मजग्मुस्तद्धोचुःकोनोवसिष्ठइतितद्धोवाचयस्मिन्वउत्क्रांतइदꣳशरीरंपापीयोमन्यतेसवोवसिष्ठइति ॥ ७ ॥ वाग्घोच्चक्राम सासंवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति । तेहोचुर्यथाऽकलाअवदंतोवाचा प्राणंतःप्राणेन पश्यंतश्चक्षुषा शृण्वंतःश्रोत्रेण विद्वाꣳसोमनसा प्रजायमानारेतसै वमजीविष्मेति प्रविवेशहवाक् ॥ ८ ॥ चक्षुर्होच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति । तेहोचुर्यथाअंधाअपश्यंतश्चक्षुषा प्राणंतःप्राणेन वदंतोवाचा शृण्वंतःश्रोत्रेण विद्वांसोमनसा प्रजायमानारेतसै व

यथोक्तं षण्मासात्पूर्ववालानांकेवलंप्राणतोभवेत् । व्यापार्यमनसासर्वमतःपश्चादपस्मृतिरिति ॥ ११ ॥ १२ ॥ अथह यथालोकेमहासुहयःमहांश्चासौसुहयश्चेतिमहासुहयःपरिमाणतोमहान्सुशोभनलक्षणोपेतोहयः सैंधवःसिंधुदेशभवः अश्वपरीक्षार्थं पुरुषेणारूढःकशावेत्रादिनाताडितश्च पट्वीशशंकून्पटनशीलाःपटवस्तेषांसंहतिःपट्वी तस्याःईशानियामकाःपट्वीशाः पट्वीशाश्चते शंकवश्चेतितथोक्तास्तान् । यद्वापटुभूतस्यहयस्येशानियामकाबंधकाइतियावत् । पट्वीशाःतेचतेशंकवश्चेतितथोक्तास्तान्संवृहेदुन्मूलयेदेवमेवप्राणोमुख्यप्राणउत्क्रमिष्यन्इमान्प्राणान्वागादीन्संववर्ह स्वस्वस्थानाद्भ्रंशितवान्ह । एतावताकिंसिद्धमित्यतआह ॥ तेहेति ॥ तेइमेप्राणाऊचुर्ह किमिति हेभगवोभगवन् अस्माच्छरीरात् मोत्क्रमीःउत्क्रमणंमाकुरु । कुतः यस्मात्व

---

उप० । मजीविष्मेतिप्रविवेशहचक्षुः ॥ ९ ॥ श्रोत्रंहोच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति तेहोचुर्यथावधिराअशृण्वंतःश्रोत्रेण प्राणंतःप्राणेन वदंतोवाचा पश्यंतश्चक्षुषा विद्वांसोमनसा प्रजायमानारेतसै वमजीविष्मेतिप्रविवेशहश्रोत्रं ॥ १० ॥ मनोहोच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति तेहोचुर्यथामुग्धाअविद्वाँसोमनसा प्राणंतःप्राणेन वदंतोवाचा पश्यंतश्चक्षुषा शृण्वंतःश्रोत्रेण प्रजायमानारेतसै वमजीविष्मेतिप्रविवेशहमनः ॥ ११ ॥ रेतोहोच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति तेहोचुर्यथाक्लीवाअप्रजायमानारेतसा प्राणंतःप्राणेन वदंतोवाचा पश्यंतश्चक्षुषा शृण्वंतःश्रोत्रेण विद्वांसोमनसैवमजीविष्मेतिप्रविवेशहरेतः ॥ १२ ॥ अथहप्राणउत्क्रमिष्यन्यथामहासुहयःसैंधवःपट्वीशशंकून्संवृहेदेवँहैवेमान्प्राणान्संबबर्हतेहोचुर्माभगवउत्क्रमीर्न

यं त्वदृतेजीवितुंनवैशक्ष्यामःनैवशक्नुमइति । यद्येवंमच्छ्रेष्ठताभगवद्भिर्ज्ञाता तर्हि तस्यउभवतांश्रेष्ठत्वेनावधृतस्य मे यूयंबलिं जांकुरुतेतिप्राणेनोक्तादेवास्तथेतिपूजांकुर्मइत्यूचुः ॥ १३ ॥ तत्प्रकारंदर्शयति ॥ सेति ॥ सापूर्वोक्तावागुवाच हेप्राणाहंवसिष्ठास्मिवसतामुत्तमोस्मीतियत्त्वंतद्वसिष्ठासिवै त्वमेवमयिस्थित्वामदीयवसिष्ठात्वनियामकइत्यर्थः । एवमुत्तरत्रापि । इतिचक्षुरुवाचेतिसंबंधः । यथोक्तं ज्येष्ठःश्रेष्ठोवसिष्ठश्चसंपदायतनंतथा । वायुरेवमहानिति सर्वेंद्रियाणांव्यापारान्प्राणएवकरोत्ययं । इंद्रियस्थःपृथक्चासौशक्तोपिस्वयमेवत्विति च । एवमुक्तःप्राणस्तस्योमेकिमन्नंकिंवासइतिदेवान्प्रत्युवाच । एवमुक्तादेवाऊचुः आश्वभ्यआकृमिभ्यःआकीटपतंगेभ्यश्चकृमिकीटपतंगपर्यंतप्राणिभिर्यदिदंकिंचान्नमद्यतेतत्तेन्नं आपस्तैःपीयमानावासइति । तवसर्वप्राणिस्थत्वात्तदद्यमेवतवान्नंतत्पेयमेवतववासइत्यर्थः । नन्वेतदन्नंवासश्चप्राणस्यपूर्वमेवसिद्धंकथंदेवैर्दत्तमितिचेत् सिद्धस्यैवदेवैःस्वार्थसमर्पणात् । यथोक्तं सिद्धमेवान्नवस्त्राद्यंविष्णोःस्वातंत्र्यतस्तदा । स्वार्थसमर्पयेद्विष्णोर्यथाप्राणेसुराःपुरेति । सर्वाद्यस्यप्राणान्नत्ववेत्तुःफलमाह ॥ नहवाइति ॥ यएवमुक्तप्रकारेण एतत्सर्वप्राणिभिरद्यमानंसर्वं अनस्यसर्वप्राणिषुस्थित्वा चेष्टकस्यमुख्यप्राणस्यान्नंवेद अस्यप्राणान्नविदः कदाचिदभक्ष्यभक्षणेपि अनन्नमभक्ष्यंजग्धंभक्षितंनैवभवतिह । तथायद्यप्ययम

उप० । वैशक्ष्यामस्त्वदृतेजीवितुमितितस्योमेबलिंकुरुतेतितथेति ॥ १३ ॥ साहवागुवाचयद्वाअहंवसिष्ठास्मित्वंतद्वसिष्ठोसीति यद्वाअहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठोऽसीतिचक्षु यद्वाअहꣳसंपदस्मित्वंतत्संपदसीतिश्रोत्रं यद्वाअहमायतनमस्मि त्वंतदायतनमसीतिमनो यद्वाअहंप्रजातिरस्मित्वंतत्प्रजातिरसीतिरेतः तस्योमेकिमन्नंकिंवासइति यदिदंकिंच आश्वभ्यआकृमिभ्यआकीटपतंगेभ्यस्तत्तेऽन्नमापोवासइति नहवाअस्यानन्नंजग्धंभवति

प्रतिग्राह्यंप्रतिगृह्णाति तथाप्यनन्नमप्रतिग्राह्यंनैवपरिगृहीतंभवति । प्रामादिकाभक्ष्यभक्षणाप्रतिग्राह्यप्रतिग्रहकृतदोषेणनलिप्यत इतिभावः । नेदंसर्वाद्यस्यप्राणान्नविदःफलं किंतुस्तुत्यर्थमेवोच्यते । फलंचप्राणात्मभावएवेतिवदतोमायावादिनःश्रुतहानिरश्रुतपरिग्रहश्च । यस्मादापोवासस्तत्तस्माद्विद्वांसः श्रोत्रियाअधीतच्छंदसोब्राह्मणाः अशिष्यंतोभोक्ष्यमाणाभोजनात्प्राक्अपआचामंति । अशित्वाभुक्त्वाचाचामंति । केनाभिप्रायेणेत्यतआह ॥ **एतमेवेति** ॥ एतमेवानंचेष्टकंमुख्यप्राणं तत्तेनभोजनोभयतअपांभक्षणेन अनग्नंवस्त्राच्छादितंकुर्वंतोमन्यंते यस्मादेवंपूर्वेविद्वांसःकुर्वंति । तस्मादधुनाप्येवंविद्वानशिष्यन्नाचामेदशित्वाचाचामेत् । एवंकुर्वतःफलं प्राणस्यवस्त्रबुद्ध्यातुभोजनोभयतःपिबन् । स्वर्गेमुक्तौतथादिव्यवस्त्रलाभीभवत्यलमितिवचनादवगंतव्यं ॥ १४ ॥ **प्रथमब्राह्मणं** ॥ १ ॥ पंचाग्निविद्यामाख्यायिकापूर्वमाह ॥ **श्वेतकेतुर्हवाइतिब्राह्मणेन** ॥ तत्रतेयएवमेतद्विदुरितिपंचाग्निस्वरूपवेत्तॄणामर्चिरादिद्वाराब्रह्मलोकंप्राप्तानांनपुनरावृत्तिरितिपुनरावृत्तिशून्यत्वमुच्यते ॥ तदयुक्तं । ब्रह्मज्ञानेनैवपुनरावृत्तिशून्यलोकप्राप्तेःप्रमाणसिद्धत्वात् । पंचाग्निविद्यायाश्चाऽब्रह्मविद्यात्वादित्यतःतामपिब्रह्मपरतयाप्रमाणेनव्या

---

उप० । नानन्नंपरिगृहीतंयएवमेतदनस्यान्नंवेद तद्विद्वांसःश्रोत्रियाअशिष्यंतआचामंत्याशित्वाचाचामंत्येतमेवतदनमनग्नंकुर्वंतोमन्यंतेतस्मादेवंविद्वानशिष्यन्नाचामेदशित्वाचाचामेत् ॥ १४ ॥ इतिप्रथमब्राह्मणं ॥ १ ॥

चष्टे ॥ द्युपर्जन्येति ॥ पंचाग्निविद्यावेत्तुरैहिकंचफलमाह ॥ नास्येति ॥ इदानीमभावेपिकालांतरेस्यादित्यतआह ॥ कदाच नेति ॥ यद्यप्यस्यांश्रुतौइदंफलंनोक्तं तथापिच्छंदोगश्रुतौअथयएतानेवंपंचाग्नीन्वेद नसहतैरप्याचरन्पाप्मनालिप्यतइतिहि रण्यस्तेनादिपंचमहापातकिभिःसहचरतोपितत्संसर्गदोषोनास्तीत्युक्तत्वादत्रापितद्ग्राह्यमितिभावेनाचार्यैरुक्तं उत्तरब्राह्मणेसयः कामयतेमहत्प्राप्नुयामितीत्यत्रमहच्छब्दोभावप्रधानःमहत्त्वंचनकेवलमैहिकंकिंतुआमुष्मिकंचेत्याह ॥ दृष्टादृष्टेति ॥ यथोक्तं। ज्येष्ठश्रेष्ठादिकैर्हुत्वाप्राणायात्रपरत्रच। ज्येष्ठःश्रेष्ठःसमानेभ्योभवेन्नात्रविचारणेति । एषांभूतानांपृथिवीरसइतिचतुर्थब्राह्मणे पुत्र प्रजातिकर्मोच्यते तत्किमर्थंवक्तव्यमित्यतआह ॥ अनेनेति ॥ अत्रप्रमाणमाह ॥ यथेति ॥ उपनिषदुक्तप्रकारमनतिक्रम्येत्य र्थः । उपनिषदुक्तकर्मानुष्ठानमात्रेणजातःपुत्रःकथमपवर्गयोग्यइत्यतस्तत्रविशेषमाह ॥ यदीति ॥ संयोगावसरइतिशेषः । पि त्रोःमातापित्रोः ननूपनिषदुक्तप्रकारेणकर्मानुष्ठानाभावेपियदासंयोगावसरेपित्रोर्मनोविष्णुगंतदाजातःपुत्रःकीदृशइत्यतआह ॥ नकुर्यादिति ॥ यदिपित्रोस्तुमनःस्थिरंविष्णुगमितिसंबंधः । स्थिरमितिक्रियाविशेषणं तदाजातःपुत्रइतिशेषः मोक्षयोग्यः भ

भा० । द्युपर्जन्यधरापुंस्त्रीसंस्थितंपंचरूपिणं । नारायणंवासुदेवंतथासंकर्षणंप्रभुं । प्रद्युम्नंचानिरुद्धंचक्रमाद्ध्यायंस्तुसर्वदा । पंचाग्निवि न्नामभवेत्सयातिपरमंपदं । नास्यसंसर्गदोषोपिकदाचनभविष्यतीतित्रैविद्ये । दृष्टादृष्टमहत्वं । अनेनोपनिषदुक्तविधानेनजातःपुत्रःप्रायःस्वर्गापव र्गयोग्योभवतीतिप्रजातिकर्मवचनं । यथोपनिषदंजातोयोग्यःस्वर्गापवर्गयोः । भवेद्यदिमनःपित्रोर्विष्णोर्नान्यत्रगच्छति । नकुर्याद्यदिकर्मैतन्मनःपि त्रोस्तुविष्णुगं । दृष्टसामर्थ्यहीनश्चमोक्षयोग्यःस्थिरंयदि ।

वेदित्यनुवर्तते । ननूपनिषदुक्तकर्माकरणेपिजातःपुत्रोदृष्टसामर्थ्यवान्क्वचिद्दृष्टोऽतः कथमेवमुच्यतइत्यतआह ॥ दृष्टेति ॥ आज्ञाद्यैर्महतामितिशेषः । आद्यशब्दाद्वरादिग्रहणं आज्ञादिरूपविशेषकारणाभावे । यथोक्तं उपनिषदुक्तकर्मानुष्ठानाभावेपि जातःपुत्रोदृष्टसामर्थ्यहीनइत्युक्तं अन्यथानभवेदित्यर्थः । द्युपर्जन्यधरापुंस्त्रीसंस्थितमितिद्युपर्जन्यादिषुनारायणादिपंचरूपोहरिस्तिष्ठतीतिसएवद्युपर्जन्यादिशब्दाभिधेयइत्युक्तं । इदानींद्युपर्जन्यादिशब्दांस्तासुमूर्तिषुनिर्वक्ति ॥ नारायणइत्यादिना ॥ द्युतिहेतुतोज्ञानहेतुत्वात् । यद्यपिश्रुतावसौवैलोकइत्येवश्रूयते नतुद्युशब्दः तथापितस्यद्युलोकपरत्वमभ्युपेत्यद्युशब्दोव्याख्यातः । यथाश्रुतस्यतुव्याख्यानंअसौलोकःप्रकाशत्वात्प्राणस्थत्वाच्चकेशवइत्यन्यत्रकृतमनुसंधेयं । परमुत्तमंचतुर्मुखं परमस्यसकाशाज्जन्यमितिपर्जन्यइत्यर्थः । प्रथितत्वाद्देवेषुप्रसिद्धत्वात् अयंवैलोकइत्यस्यपृथिवीपरत्वमभ्युपेत्येदंव्याख्यानं यद्वापृथिवीवावगौतमाग्निरितिच्छांदोग्येऽभिधानात्पृथिवीशब्दव्याख्यानं तस्यपृथिव्येवसमिदितिपृथिवीशब्दोप्येवमेवव्याख्यातव्यः । नचास्यैवपृथिवीशब्दस्येदंव्याख्यानमितियुक्तं तस्यपृथिवीशब्दस्यनारायणपरत्वेनसंकर्षणपरत्वाभावात् ॥ पूरयेदिति ॥ पॄपालनपूरणयोरितिधातुः । सहितःस्थितः तथाचस्त्रीत्यत्रसकारःसहितत्वार्थकइतिभावः । केषुत्रिषुस्थितोनिरुद्धइत्यतआह ॥ अनि

भा० । दृष्टसामर्थ्यवांश्चस्यादाज्ञाद्यैःकारणैःक्वचित् । विशेषकारणाभावेयथोक्तंनान्यथाभवेदितिच । नारायणोद्युशब्दोक्तःसर्वदाद्युतिहेतुतः । वासुदेवस्तुपर्जन्यःपरंसजनयेद्यतः । संकर्षणस्तुपृथिवीप्रथितत्वात्सदैवहि । प्रद्युम्नःपुरुषेत्युक्तःपूरयेत्सजगद्यतः । स्त्रीशब्दोक्तोऽनिरुद्धःस्यात्सहितस्त्रिषुयत्सदा ।

रुद्धोहीति ॥ यद्यपिश्रुतौयोषावाअग्निरितियोषाशब्दोस्ति तथापितात्पर्यायस्त्रीशब्दोत्रनिरुक्तः । यथाश्रुतस्यतु योषाज्योष्यो
यतोखिलैरितिव्याख्यानंद्रष्टव्यं । ननुयद्येवंद्युपर्जन्यादिशब्दाःपरमात्मपरास्तर्हिप्रसिद्धद्युपर्जन्यादिषुतद्व्यवहारोनस्यात् । नच
ब्रह्मवाचकाअपिशब्दाः ह्यनादिव्यवहारसिद्ध्यर्थंज्ञानिभिरन्यत्रव्यवह्रियंतेअन्यैस्त्वज्ञानादेवेतिवाच्यं । तथासत्यवाचकत्वावि
शेषेणघटादिशब्दानांपटादौव्यवहारप्रसंगात्इत्यतआह ॥ द्युवादिष्विति ॥ द्युपर्जन्याद्यंतर्गतभगवतएवद्युपर्जन्यादिशब्द
मुख्याभिधेयत्वात्तत्संबंधात्प्रसिद्धेषुद्युपर्जन्यादिषुद्युपर्जन्यादिशब्दवृत्तिरित्यर्थः । पंचसुस्थलेषुस्थितानामग्न्यंगारार्चिर्विष्फुलिं
गसमिच्छब्दानांप्रसिद्धार्थत्वप्रतीतिनिरासायाभिधेयमाह ॥ तथाग्न्यादिरिति ॥ यथाद्युपर्जन्यादिशब्दवाच्यःपरमस्तथाग्न्या
दिशब्दवाच्यश्चेत्यर्थः । कथमित्यतस्तांच्छब्दांस्तत्रनिर्वक्ति ॥ अदनादिति ॥ सर्वस्यसंहारादित्यर्थः । अग्निर्भवेदितिसंबंधः ।
अर्च्यत्वात्पूज्यत्वात् विष्वक्त्वाद्विविधस्फुरणादित्यर्थः । यथोक्तं विविधंस्फुरणाच्चैवविष्फुलिंगइतीरितइति यद्वाविष्वक्त्वात्
विष्वक्देशस्थत्वादित्यर्थः । समेधनात्सम्यग्वर्धनात्सर्वोत्तमत्वादितियावत् । अग्न्यादिशब्दपंचकवाच्यभगवतःस्थलविशेषमाह
॥ तत्रतत्रेति ॥ यद्वानारायणादेर्द्युपर्जन्यादिशब्दवाच्यत्वेनिमित्तांतरमाह ॥ तत्रतत्रेति ॥ नन्वेवंतर्हिद्युवादिशब्दानामन्य
त्रव्यवहारोनस्यात् नचद्युवादिषुप्रसिद्धेषुतत्संबंधात्द्युवादिकः शब्दोभवेदित्युक्तमितिवाच्यं तथात्वेद्युपर्जन्यादिशब्दानांप्रसि

भा० । अनिरुद्धोहिदेवेपुसर्वदात्रिषुसंस्थितः । द्युवादिषुप्रसिद्धेषुतत्संबंधाद्द्युवादिकः । शब्दोभवेत्तथाग्न्यादिरदनात्परमोभवेत् । अं
गत्वेनार्यतेयस्मादंगारस्तेनकीर्तितः । अर्च्यत्वादर्चिरुद्दिष्टोविष्वक्त्वाद्विष्फुलिंगकः । समेधनाच्चसमिधस्तत्रतत्रस्थितोहरिः । तत्तच्छब्दैःसदावाच्य

द्ध्युपर्जन्यादिषुलक्षणेतरवृत्त्यभावापत्तेःइतिचेन्न । परमात्मसंबंधेनान्येषामपिवाच्यत्वांगीकारादित्यतआह ॥ इतरेत्विति ॥ वचनव्यत्ययेनवाच्याइत्यनुवर्तते।इदानींआदित्यएवसमित्रश्मयोधूमइत्युक्तादित्यरश्म्यहरादिशब्दाभिधेयमाह ॥ आदित्य इति ॥ अवस्थिताः हराविितिशेषः । द्युपर्जन्यधरापुंस्त्रीरूपपंचाग्निषुनारायणादीनिपंचरूपाणितिष्ठंतीत्युक्तं तत्रपंचानामप्यग्नीनांसमिद्धूमार्चिरंगारविष्फुलिंगभेदेनयेपंचभेदाउक्तास्तेष्वपिभगवांस्तिष्ठतीत्युक्तं तन्मूर्तिविशेषमाह ॥ एकैकस्मिन्निति ॥ यथापंचस्वग्निषुनारायणादिभेदेनपंचभेदाःप्रतिपादिताइत्यर्थः । अयमत्रविवेकः । द्युस्थोद्युशब्दोक्तोनारायणःपुनर्नारायणाद्यात्मनापंचविधः तत्रनारायणःसमित् वासुदेवोधूमः संकर्षणोर्चिः प्रद्युम्नोंगारः । अनिरुद्धोविष्फुलिंगइत्यादि । पूर्वंधूमशब्दस्याव्याख्यातत्वात्व्याचष्टे ॥ धूत्काराददिति ॥ धूञ्कंपनइतिधातोः अर्च्यत्वादर्चिरित्युक्तं तन्नसर्वसाधारण्येनेत्यतआह ॥ अर्चिरिति ॥ ननुअंगत्वेनार्यतेयस्मादंगारस्तेनकीर्तितइत्यनुपपन्नं । विष्णोरन्यांगत्वेऽन्यस्यैवप्राधान्यापत्तेरित्याशंकांपरिहरन्नंगारशब्दंनिर्वक्ति ॥ स्वांगइति ॥ स्वयंस्वांगत्वेनार्यतेइत्यंगारउदीर्यतइत्यर्थः । ननुस्वस्यांगित्वात्कथमंगत्वमित्यतआह ॥ अंगित्वेनेति ॥ प्राचीनवचनमप्येवमेवव्याख्येयं । अत्रवंशब्राह्मणेअंभृण्यादित्यादितिअंभृण्याआदित्याद्विद्याश्रवणमुच्यते।

---

भा० । इतरेतुतदन्वयात् । आदित्योरश्मिरित्याद्याःशब्दाश्चैवसवस्थिताः । एकैकस्मिन्पंचभेदाअर्चिरादिविभागतः । नारायणादिभेदेन तथैवप्रतिपादिताइतिप्रवृत्ते । धूत्काराद्धूमउद्दिष्टःशत्रूणांपुरुषोत्तमः । अर्चिरर्च्यतमत्वाच्चस्वांगोंगारइतीर्यते । अंगित्वेनांगरूपेणयतएकोव्यवस्थितइत्यादित्रैविद्ये ।

तदयुक्तं तस्यारमात्मकत्वेनादित्याद्विद्याश्रवणायोगादित्यतआह ॥ **नीचादपीति** ॥ ज्ञायतेअनेनेतिज्ञानंशास्त्रमित्यर्थः । तर्हिकिमाधिक्यज्ञापकमित्यतआह ॥ **यस्येति** ॥ पूर्वंआदित्योरश्मिरित्याद्याःशब्दाश्चैवमवस्थिताइत्यादित्यशब्दाभिधेयोभगवानित्युक्तंइदानींतांच्छब्दांस्तत्रनिर्वक्ति॥ **आदानादिति**॥ हविरादीनामितिशेषः । रमणात्‌रतिरूपत्वादित्यर्थः । शामनादन्येषांसुखकरणादित्यर्थः ॥ **अहीनत्वादिति** ॥ कस्यापिअपेक्षयानीचत्वाभावादित्यर्थः । चंद्रमाअंगारइत्युक्तचंद्रशब्दंनिर्वक्ति ॥ **चंदनादिति** ॥ आह्लादनादित्यर्थः । नक्षत्राणिविष्फुलिंगाइत्युक्तनक्षत्रशब्दंव्याचष्टे ॥ **अस्येति** ॥ क्षत्रंरक्षकं विष्णोरेकत्वान्नक्षत्राणीतिवहुवचनंकथमित्यतआह ॥ **बहुरूपत्वादिति** ॥ नक्षत्राणांवहुत्वेनतदंतर्गतस्यापिवहुरूपत्वादित्यर्थः । अयंन्यायोन्यत्राप्यनुसंधेयः ॥ **ज्ञानादिति**॥ वातेर्गत्यर्थत्वाद्गत्यर्थस्यचज्ञानार्थत्वादित्यर्थः । आयुष्वादायुःप्रदत्वादित्यर्थः । यद्यप्यस्यामुपनिषदिवायुपदंनश्रूयते तथापिपर्जन्योवागौतमाग्निस्तस्यवायुरेवसमिदितिच्छांदोग्ये अयंवैलोकोग्निर्गौतमास्यपृथिव्येवसमिद्वायुर्धूमइतिमाध्यंदिनायनशाखायांचाभिहितत्वाद्वायुशब्दोव्याख्यातः । सर्वविद्यानिर्णायकपूर्णप्रज्ञेनतस्याअपिविद्यायानिर्णेयत्वात्‌ अभ्राणिधूमोविद्युदर्चिरशनिरंगाराह्रादुनयोविष्फुलिंगाइत्युक्ताभ्रादिशब्दचतुष्टयंनिर्वक्ति ॥ **अन्यैरित्यादिना** ॥

भा० । नीचादप्युत्तमाज्ज्ञानंशृणुयुर्लीलयाक्वचित्‌ । श्रोतृवक्तृविभेदोयंनाधिक्यज्ञापकस्ततः । यस्याधिक्यंतुवेदोक्तंपंचरात्रेथवाभवेत्‌ । इतिहासपुराणेवान्योधिकोनेतरःक्वचिदितिब्रह्मतर्के । आदानादादित्यः रमणाच्छामनाच्चरश्मयः अहीनत्वादहः चंदनाच्चंद्रः अस्यक्षत्रमन्यन्नास्ती
वृ॰ भा॰ ६० तिनक्षत्रं वहुरूपत्वाद्वहुवचनं । ज्ञानादायुष्वाच्चवायुः अन्यैरभरणीयत्वादभ्रं विद्योतनाद्विद्युत्‌ अशनादशनिः निर्ह्रादनाद्ध्रादुनिः ।

अशनात्सर्वस्यसंहारात् निर्ह्रादनान्नितरांहर्षणादित्यर्थः ॥ आसमंतादिति ॥ यद्यप्यस्यांश्रुतावाकाशशब्दोनश्रूयते तथापिपृथिवीवावगौतमाग्निस्तस्याःसंवत्सरएवसमिदाकाशोधूमइतिच्छांदोग्येश्रवणादाकाशशब्दोव्याख्यातः । तस्यसंवत्सरएवसमिदित्युक्तंसंवत्सरशब्दंव्याचष्टे ॥ सम्यगिति ॥ वत्सान्भक्तानित्यर्थः । दिशोंगाराअवांतरदिशोविष्फुलिंगाइत्युक्तदिगवांतरदिक्शब्दौव्याचष्टे ॥ आदेशनादित्यादिना ॥ प्रधानस्यपरमात्मस्वरूपस्यादेशनादित्यर्थः । रात्रिरर्चिरित्युक्तरात्रिशब्दंव्याचष्टे ॥ रतिकरत्वादिति ॥ प्राणोधूमोवागर्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगाइत्युक्तवाक्प्राणचक्षुःश्रोत्रशब्दान्निर्वक्ति ॥ वचनादिति ॥ जहातीति ॥ जुहुइत्यस्यार्थोजहातीति वाइत्यस्यार्थोगमयतीति स्वभक्तानांपापंजहातिपरित्याजयतिमोक्षंप्रतिचगमयतीत्यर्थः । यद्यप्यस्यांश्रुतौअयंशब्दोनश्रूयते तथापिच्छांदोग्येजिह्वाऽर्चिरितिश्रवणात्तच्छब्दोव्याख्यातः । उपस्थएवसमिदित्युक्तोपस्थशब्दंव्याचष्टे ॥ उपस्थितत्वादिति ॥ सर्वजीवानांहृदयस्थितत्वेनसमीपेस्थितत्वादित्यर्थः । योनिरर्चिरित्युक्तयोनिशब्दंव्याचष्टे ॥ यापयतीति ॥ ग्रामादिकंयापयतिसत्कर्मणिनयतीत्यर्थः । सज्जनान्मोक्षंप्रतियापयतिदुर्जनांस्तमःप्रतिनयतीतिवार्थः। अभिनंदाविष्फुलिंगाइत्युक्ताभिनंदशब्दंनिर्वक्ति ॥ अभीति ॥ यदुपमंत्रयतेसधूमइतिच्छांदोग्योक्तस्योपमंत्रण

भा० । आसमंतात्काशनादाकाशः सम्यग्वत्सान्नमयतीतिसंवत्सरः आदेशनाद्दिशः अवांतरमादिशतीत्यवांतरदिशः रतिकरत्वाद्रात्रिः वचनाद्वाक् प्रणयनात्प्राणः जहातिगमयतीतिजिह्वा चष्टइतिचक्षुः शृणोतीतिश्रोत्रं उपस्थितत्वादुपस्थः यापयतिनयतिचेतियोनिः । अभिनंदयतीत्यभिनंदः ।

स्ययदंतःकरोतितेअंगाराइत्यत्रोक्तस्यांतःकरणस्यचपुरुषकर्तृकत्वप्रतीतिनिरासायतद्व्याचष्टे ॥ उपमंत्रणमिति ॥ यद्यप्यादा नादादित्यइत्यादिभाष्यंनैतदुपनिषदुक्तक्रमेण नापिच्छांदोग्योक्तक्रमेण तत्रप्रथमाग्नौआदित्यएवसमित्रश्मयोधूमोरात्रिरर्चिश्चं द्रमाअंगारानक्षत्राणिविष्फुलिंगाइत्युक्तत्वात् रात्रिशब्दस्यचात्रांतेव्याख्यातत्वात् । नापिमाध्यंदिनशाखोक्तक्रमेण तत्रप्रथमा ग्नौतस्यादित्यएवसमिद्रश्मयोधूमोहरर्चिश्चंद्रमाअंगारानक्षत्राणिविष्फुलिंगाइत्युक्तत्वेपिद्वितीयाग्नौतस्यसंवत्सरएवसमिदित्युक्त त्वात् । अत्रचनक्षत्रशब्दव्याख्यानानंतरंवायुशब्दव्याख्यानात् । तथापिप्रथमाग्नौमाध्यंदिनशाखोक्तक्रममनुसृत्यादित्यादिश ब्दपंचकव्याख्यानंद्वितीयतृतीयचतुर्थपंचमाग्नौतुच्छांदोग्योक्तक्रममनुसृत्यवायुशब्दादिविंशतिशब्दव्याख्यानं । तथाहि च्छां दोग्येद्वितीयाग्नौतस्यवायुरेवसमिदभ्रंधूमोविद्युदर्चिरशनिरंगाराह्रादुनयोविष्फुलिंगाइत्युक्तत्वात् । अत्रापिवाय्वादिशब्दपंचक स्यव्याख्यानात् । तृतीयाग्नौयद्यपितस्याःसंवत्सरएवसमिदाकाशोधूमोऽहरर्चिर्दिशोंगाराअवांतरदिशोविष्फुलिंगाइत्युक्तं तथा पिसंवत्सराकाशशब्दयोर्व्यत्यासमात्रेणव्याख्यानं । अहःशब्दस्यमाध्यंदिनशाखायांप्रथमाग्नावेवसत्वेनतत्रतदुक्तक्रममनुसरता प्रागेवव्याख्यातत्वादत्रसनव्याख्यातः । च्छांदोग्येप्रथमाग्नौरात्रिरर्चिरित्युक्तत्वेनोर्वरितःसरात्रिशब्दोऽत्रव्याख्यातः । नचोर्व रितस्यांतेव्याख्यानंस्यादितिवाच्यं काण्वमाध्यंदिनशाखयोःतृतीयाग्नौरात्रिरर्चिरित्युक्तत्वेनात्रैवतस्यव्याख्येयत्वात् । चतुर्था ग्नौतस्यवागेवसमित्प्राणोधूमोजिह्वार्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगाइत्युक्तत्वादत्रापिवागादिशब्दपंचकस्यव्याख्यानात् । पंच

भा० । उपमंत्रणमंतःकरणंचसएवकरोति ।

माग्नावपितस्याउपस्थएवसमित्यदुपमंत्रयतेसधूमोयोनिरर्चिर्यदंतःकरोतितेअंगाराअभिनंदाविष्फुलिंगाइत्युक्तत्वात् । अत्राप्यु
पस्थादिशव्दपंचकस्यव्याख्यानादितिमंतव्यं । उभयशाखोक्तक्रमानुसरणंत्वस्यभाष्यस्यतदुभयशाखानिर्णायकत्वमप्यस्तीति
ज्ञापनार्थं । अतएवच्छांदोग्यभाष्येप्यभिहितं । आदित्यःसतथादानात्रश्मीरतिशरूपतः । तमसाहननीयत्वादहश्चंद्रःपरंसुखं ।
अनन्यराजोनक्षत्रंवायुर्ज्ञानायुरूपतः । अभ्रमभ्भरणाद्विष्णुर्विद्युत्विद्योतनादपि । अशनादशनिश्चैवनिर्ह्रादात्ह्रादुनिस्तथा ।
संवत्सरोवासनाच्चसआकाशःप्रकाशनात् । रात्रिश्चरतिदानात्सदिशतीतिदिशःस्मृतः । अवांतरंदिशेद्यस्मादवांतरदिगुच्यते ।
वचनाद्वाक्तथाप्राणस्त्वननाच्चक्षुरुच्यते । दर्शनाच्छ्रवणाच्छ्रोत्रंजिह्वावैहोमतःस्मृतः । उपस्थितेरुपस्थःसउपमंत्रकृदेवसः ।
योनिर्युनक्तियस्मात्ससर्वातःकृच्चनंदनइति । यद्वाविवक्षितश्रुतिक्रममनुसृत्यप्रवृत्तमुदाहृतवचनमनुसृत्यैवप्रायस्तदुक्तक्रमेणैवा
दित्यादिशव्दव्याख्यानमितिद्रष्टव्यं । एवंद्युपर्जन्यादिशव्दप्रवृत्तिनिमित्ताधिकरणत्वेनविष्णुर्द्युपर्जन्यादिशव्दाभिधेयइत्युक्तं ।
इदानींप्रसिद्धद्युपर्जन्यादिगतद्युपर्जन्यादिशव्दप्रवृत्तिनिमित्तस्यभगवदधीनत्वाच्चतच्छव्दवाच्यत्वमितिभावेनाह ॥ **तदधीन
मिति** ॥ यथाभृत्यगतजयस्यराजाधीनत्वेनराजाजयीत्युच्यतेतथेत्यर्थः । नचान्यगतशव्दप्रवृत्तिनिमित्तप्रेरकेशव्दप्रवृत्तिरमु
ख्यास्यादितिवाच्यं । राजनिविजयिशव्दस्यबहुलप्रयोगात् । बहुलप्रयोगसिद्धस्यैवचमुख्यत्वादितिभावेनमुख्याभिधेयइत्युक्तं ।
नन्वेवंसत्यन्यत्रव्यवहारोनस्यात् । तत्संबंधादन्यत्रशव्दवृत्त्यंगीकारेलक्षणामात्रांगीकारापत्तेः । नचान्यत्रापिवचनवृत्तिरंगीक्रि

भा० । तदधीनंयतःसर्वंसर्वशव्दैस्ततोहरिः । मुख्याभिधेयस्तु

यतइतिवाच्यं तथासत्युभयोरपिमुख्यवाच्यत्वापातात् । परमात्मसंवंधेनान्यत्रशब्दवृत्तिरित्यपिन वैपरीत्यस्यापिवकुंशक्यत्वा दित्यतआह ॥ **अन्यानीति** ॥ उपचारतोभिधेयानीतिसंवंधः । तद्धीनंयतःसर्वमित्येतदत्रापिसंबध्यते । यतःसर्वंतदधीनमतः स्वतंत्रपरमात्मसंबंधेनैवान्यानिउपचारतोभिधेयानि । नत्वन्यसंबंधेनपरमात्मोपचारतोऽभिधेयो नवोभयोर्मुख्याभिधेयत्वमि तिभावः । तदुक्तं एवमेवहिशब्दानांप्रसिद्धिरपिलौकिकी । वाचकत्वंप्रधानस्यत्वितरस्यतदन्वयादिति । अन्यगतशब्दप्रवृत्ति निमित्तस्यभगवदधीनत्वेनभगवानेवान्यवाचकत्वेनप्रसिद्धशब्दमुख्यार्थइत्यत्रसूत्रमुदाहरति ॥ **तदधीनत्वादिति** ॥ सर्वस्य तदधीनत्वात्तस्मिन्नेवसर्वशब्दजातमर्थवदित्यर्थः । नन्वेवंसर्वेषांशब्दानांपरमात्मपरत्वेकथमन्यत्रव्यवहारः । तत्संबंधादन्य त्रशब्दप्रवृत्तौलक्षणामात्रस्वीकारापत्तेः । नचान्यत्रापियोगरूढ्यादिवृत्त्यंगीकारान्नदोषः । तथासत्युभयोर्मुख्यवाच्यत्वापातात् । योगरूढ्योरेवमुख्यवृत्तित्वात् । नह्यक्षादिशब्दानांरूढ्यादिनैवानेकार्थवाचिनां क्वचिन्मुख्यत्वंक्वचिन्नेत्यस्तीत्याशंकापरिहाराय सूत्रंपठति ॥ **समाकर्षादिति** ॥ नपरमात्मनःसर्वशब्दवाच्यत्वांगीकारेअन्यत्रव्यवहारलोपप्रसंगः । अन्यत्ररूढ्यादेरभ्युपग मात् । तथासत्युभयोर्मुख्यवाच्यत्वंप्राप्तमितिचेन्न । भवेदेतद्यद्यक्षादिशब्दवदुभयत्रान्योन्यनिरपेक्षाशब्दवृत्तिःस्यात् । नचैवं किंतुस्वतःपरममुख्ययावृत्त्यापरमात्मैकवाचिनांशब्दानांव्यवहारसिध्यर्थंततःसमाकृष्यान्यत्ररूढत्वेनसंकेतितत्वात् । अल्पप्रवृ त्तिनिमित्तानांचतदधीनत्वादितिसूत्राभिप्रायः । एवंपंचाग्निविद्याभगवत्परतयाव्याख्याता नकेवलमेतावत् किंत्वयमध्यायःस

---

भा० । अन्यानितत्संगादुपचारतइतिब्रह्मतर्के । तदधीनत्वादर्थवदितिभगवद्वचनं । समाकर्षादितिच ।

वोंपिभगवत्परइतिभावेनैतदध्यायस्यभगवत्परत्वेप्रमाणमाह ॥ **पंचाग्निविद्ययेति** ॥ एवकारत्रयस्यप्रत्येकंपुरुषोत्तमइत्यनेनसंबंधः । तेनविद्यानांप्रसिद्धार्थकत्वंव्यवच्छिनत्ति । चशब्दौतथाशब्दौचपरस्परसमुच्चये । ज्ञानप्रदानतोयआचार्यस्तेषांवंशज्ञानादित्यर्थः । यद्वाज्ञानप्रदानेनयोयमाचार्यवंशस्तद्विज्ञानादित्यर्थः। ज्ञानप्रदानतइतिआचार्यपुत्रपौत्रादिपरंपराव्युदासः । ननुपंचाग्निविद्यायाउक्तप्रकारेणभगवत्परत्वेपिप्राणादिविद्यायाःकथंभगवत्परत्वं तत्रस्पष्टंप्राणादेरेवप्रतिपाद्यत्वप्रतीतेरित्यतःसर्वत्रयुक्तिमाह ॥ **सर्वांतर्यामिकइति** ॥ तथाचप्राणाद्यंतर्यामिणएवप्राणादिविद्याप्रतिपाद्यत्वमितिभावः ॥ २ ॥ **तथाचायंब्राह्मणचतुष्टयस्याक्षरार्थः** ॥ श्वेतकेतुर्नामतः अरुणस्यापत्यंआरुणिस्तस्यापत्यमारुणेयोह पित्राऽनुशिष्टःस्वपांडित्यख्यापनायपांचालानांपरिषदंसभामाजगाम। तत्रागत्यजिविलस्यापत्यंजैवलिं प्रवाहणंनामतः परिचारयमाणंस्वभृत्यैःपरिचर्यमाणं प्रत्याजगाम । सप्रवाहणस्तमागतंश्वेतकेतुमुदीक्ष्यगर्वेणागतोयमित्युत्प्रेक्ष्यतद्गर्वशांत्यर्थं हेकुमारा३इत्यभ्युवादाभ्युक्तवान् । कुमार३इतिप्लुतिर्भर्त्सनार्था । सश्वेतकेतुरपिक्रोधाद्भोइतिप्रतिशुश्रावप्रतिश्रावितवान् । एवंप्रतिश्रावितःप्रवाहणआह त्वंपित्रानुशिष्टोसि

---

भा० । पंचाग्निविद्ययाचैवतथैवप्राणविद्यया । प्रजातिकर्मणाचैवतथाज्ञानप्रदानतः । आचार्यवंशविज्ञानाद्यःपूज्यःपुरुषोत्तमः । सर्वांतर्यामिकोनित्योनमस्तस्मैपरात्मनइतिसद्भावे ।

उप० । श्वेतकेतुर्हवाआरुणेयःपांचालानांपरिषदमाजगाम सआजगामजैवलिंप्रवाहणंपरिचारयमाणं तमुदीक्ष्याभ्युवादकुमारा३इतिसभो३इतिप्रतिशुश्रावानुशिष्टोन्वसिपित्रेत्योमितिहोवाच ॥ १ ॥

नुकिमिति एवमुक्तः श्वेतकेतुरोमितिहोवाच ॥ १ ॥ तत्रप्रवाहणःपृच्छति ॥ वेत्थेत्यादिना ॥ इमाःप्रजाःप्रयत्योलोकांतरंगच्छंत्यो यथाविप्रतिपद्यंता३यिति येनमार्गेणविशिष्टस्थानंब्रह्मलोकंचंद्रलोकंवाप्राप्नुवंतितंमार्गत्वंवेत्थकिमिति । विप्रतिपद्यंता३यितिप्लुतिर्विचारणार्था । एवंपृष्टःश्वेतकेतुर्नेति नवेद्मीतिहोवाच । द्वितीयंपृच्छति ॥ वेत्थेति ॥ पुनरावृत्तिमत् चंद्रलोकरूपविशिष्टस्थानंगताइमाःप्रजायथायेनमार्गेणेमंलोकंपुनरापद्यंता३यितिवेत्थकिमिति किंगतेनैवमार्गेणपुनरागमनंउतमार्गांतरेणेतिभावः । एवंपृष्टःश्वेतकेतुर्नेतिहोवाच । तृतीयंपृच्छति ॥ वेत्थेति ॥ एवंप्रसिद्धजरादिनिमित्तेनपुनःपुनःप्रयद्भिर्गच्छद्भिर्बहुभिरप्यसौलोकः परलोकोयथायेनहेतुनानसंपूर्यतेतंप्रकारंवेत्थकिमितिपृष्टोनेतिहोवाच । चतुर्थंपृच्छति ॥ वेत्थेति ॥ यतिथ्यांयत्संख्याकायामाहुत्यांहुतायामापःजीवसंपरिष्वक्ताःजीवलब्धदेहाकारपरिणताः पुरुषइतिवाक्यासांताःपुरुषवाचःपुरुषशब्दवाच्याभूत्वासमुत्थायवदंति वदनादिव्यापारंकुर्वंति तामाहुतिंवेत्थकिमितिपृष्टोनेतिहोवाच । अत्रापःपुरुषवाचोभूत्वेतिवचनबलेनमरणकालेभूतानिजीवेनसहगच्छंतीतिप्रष्टुरभिप्रेतमित्यवगम्यते । अन्यथाऽऽपइत्यनुवादायोगात् मरणएवभूतानांनिवृत्तौभूतनिवृत्तेरेवमोक्षत्वेनप्रसिद्धमरणएवमोक्षसंभवेतदर्थंवैराग्यादिसाधनानुष्ठानविधानायोगाच्च । तर्ह्यत्रापइतिविशेषोक्तेःक

उप० । वेत्थयथेमाःप्रजाःप्रयत्योविप्रतिपद्यंता३यिति नेतिहोवाच वेत्थोयथेमंलोकंपुनरापद्यंता३यिति नेतिहैवोवाच वेत्थोयथासौलोकएवंबहुभिःपुनःपुनःप्रयद्भिर्नसंपूर्यता३यिति नेतिहैवोवाच वेत्थोयतिथ्यामाहुत्याꣳहुतायामापःपुरुषवाचोभूत्वासमुत्थायवदंती३इति नेतिहैवोवाच ।

थंसर्वाणिभूतानिजीवेनसहगच्छंतीत्यवगंतुंशक्यमितिचेन्न । अपांक्षितिसलिलानलात्मकत्वेनतद्ग्रहणेऽन्यभूतानामपिप्राप्तेः । नन्वपांभूतत्रयात्मकत्वेकथंतर्हितत्राप्शब्दइतिचेन्न। मिश्रत्वेपितत्तद्भूतस्याधिक्येनतत्तद्व्यवहारोपपत्तेः । तदुक्तं त्र्यात्मकत्वात्तुभूयस्त्वादिति । ननुयदिमरणकालेभूतानिजीवेनसहगच्छंतितर्हितस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतीत्युत्तरत्रोत्क्रांतस्यश्रद्धयेष्टवतः श्रद्धासहितस्यैवद्युवाख्यप्रथमाग्नौहोमश्रवणंनस्यात् । भूतानामपिसहगतौतथोक्तिप्रसंगादितिचेन्न । तत्रश्रद्धाशब्दस्याऽजहल्लक्षणयाश्रद्धयाऽद्भिश्चविशिष्टस्यजीवस्यप्रतिपादकत्वात् यथोक्तंसूत्रकृता प्रथमेश्रवणादितिचेन्नताएवह्युपपत्तेरिति । पंचमंपृच्छति ॥ वेत्थेति ॥ देवयानस्यवापथःपितृयाणस्यवापथःप्रतिपदंवेत्थउवेत्थकिं किंतत्प्रतिपदमित्यतआह ॥ यदिति ॥ यत्कर्मकृत्वादेवयानंवापंथानंपितृयाणंवापंथानंप्रतिपद्यंते तत्प्रतिपदंसाधनंवेत्थकिमित्यर्थः । ननुदेवयानपितृयाणरूपमार्गद्वयमेवनास्ति । तत्सद्भावेप्रमाणाभावात् । अतःकथमयंप्रश्नइत्यतआह ॥ अपिहीति ॥ हियस्मात् नःअस्माभिर्मार्गद्वयप्रकाशकं ऋषेर्वचोपिश्रुतंअतोमार्गद्वयमस्तीत्यर्थः । तद्वचनमुदाहरति ॥ द्वेइति ॥ मर्त्यानांमरणशीलानां द्वेएवसृतीमार्गौअहमश्रृणवं । केते देवानांचपितृणांचसंबंधिन्यौदेवयानपितृयाणलक्षणेइतियावत् । यदिमर्त्यानांद्वेएवसृतीतर्हितमःप्रभृत्यधोगतिःकेषांचिन्न स्यादित्यतआह ॥ ताभ्यामिति ॥ एजत्प्रत्यवायाद्बिभ्यत् वेदोक्तप्रवृत्तनिवृत्तकर्मादिसाधनसंपूर्तिमदितियावत् । इदंविश्वं

उप० । वेत्थोदेवयानस्यवापथःप्रतिपदंपितृयाणस्यवायत्कृत्वादेवयानंवापंथानंप्रतिपद्यंतेपितृयाणंवापिहिनऋषेर्वचःश्रुतं द्वेसृतीअश्रृणवंपितृणामहंदेवानामुतमर्त्यानां । ताभ्यामिदंविश्वमेजत्समेति

जीवजातं ताभ्यांसृतिभ्यां ब्रह्मस्वर्गंचसमेति एजदिति वैदिकानुष्ठानवतउक्तेर्नाधोगतिविरोधः तन्मार्गद्वयंक्वास्तीत्यतउक्तं ॥ यदिति ॥ द्यौर्नःपितापृथिवीमातेतिश्रुतेःपितरंमातरंचांतराद्यावापृथिव्योःमध्येयत् यःप्रदेशस्तत्रवर्ततइति यद्वाद्यावापृथिव्यो र्मध्येवर्तमानंयदेजदिदंविश्वंजीवजातमितिसंबंधः इतिशब्दोमंत्रसमाप्तिद्योतकः । एवमुक्तःश्वेतकेतुरहमेतेषुत्वत्कृतप्रश्नेषु एकंच नैकमपिनवेदेतिहोवाच ॥ २ ॥ अथस्वकृतप्रश्नोत्तरदानासामर्थ्यनिर्णयानंतरं एनंश्वेतकेतुं वसत्यावसतिप्रयोजनेनस्वसमीपवा सायेतियावत् उपमंत्रयांचक्रेआज्ञांदत्तवान् । सकुमारः श्वेतकेतुः वसतिमनादृत्यप्रदुद्राव गतवान् । अथवाएतद्गर्वशांत्यनं तरं । एनंवसत्याउपमंत्रयांचक्रे इहवसतुभवान्अर्घ्यपाद्यादिकंग्रहाणेत्युपमंत्रणंकृतवान् सकुमारस्तांवसतिमनादृत्यगतवानिति। सकुमारःस्वपितरंप्रत्याजगाम आगत्यतंपितरंप्रत्युवाच हेपितस्त्वं इतिवावकिलैवंप्रकारेणवै पुरापूर्वं नःअस्माननुशिष्टानवोचइ तिसम्यक्विद्यामनुक्त्वैवानुशिष्टानवोचइतिभावः । एवंसाक्षेपंपुत्रवचःश्रुत्वापिताऽह ॥ **कथमिति** ॥ हेसुमेधःकथंत्वंनानुशि ष्टोसीति । तत्कारणंपुत्रआह ॥ **पंचेति** ॥ राजन्यबंधुःक्षत्रियाभासः । राजन्याराजपुत्राएवबंधवोयस्यासौराजन्यबंधूराजश्रे ष्ठोवा मामां पंचप्रश्नान्प्रष्टव्यार्थान्नप्राक्षीत् ततस्तेषुप्रश्नेषु एकंचनैकमप्यहंनवेदेति । एवमुक्तःपितातेप्रश्नाःकतमाइत्याह । पु

---

उप० । यदंतरापितरंमातरंचेति । नाहमतएकंचनवेदेतिहोवाच ॥ २ ॥ अथैनंवसत्योपमंत्रयांचक्रेऽनादृत्यवसतिंकुमारःप्रदुद्रावसआ जगामपितरंतंहोवाचेतिवावकिलनोभवान्पुरानुशिष्टानवोचइति कथंसुमेधइतिपंचमाप्रश्नात्राजन्यबंधुरप्राक्षीत्ततोनैकंचनवेदेतिकत

718 ?

त्रइमेतेप्रश्नाःइतिप्रतीकानिप्रश्नवाक्यप्रतीकान्युदाजहारोदाहृतवान् ॥ ३ ॥ एवंप्रश्नवाक्यानिश्रुत्वासपितापुत्रक्रोधमुपशमयन्नु
वाच । हेतातवत्स यथायेनप्रकारेण यत्किंचनयत्किंचिद्विद्याजातमहंवेद तत्सर्वं तथातेनप्रकारेणाहंतुभ्यमवोचमित्येवंत्वंनोऽ
स्मान्जानीथाइति त्वत्तःकोऽन्योममप्रियतरोऽस्ति यदर्थमहंरक्षिष्येराजपृष्टांविद्यां अहंनजानामीतिभावः । तामपिविद्यांचेद
वाप्तुमिच्छसि तर्हिप्रेहिआगच्छ तत्रराजसमीपं प्रतीत्यगत्वातु आवांविद्यार्थंब्रह्मचर्यंवत्स्यावइतिपित्रोक्तेपुत्रआह । भवानेवग
च्छत्विति इत्युक्तःसगौतमोगौतमगोत्रोत्पन्नः तत्राजगाम कुत्र यत्र प्रवाहणस्यजैवलेरितिषष्ठीद्वयंप्रथमार्थे जैवलिः प्रवाहणना
माराजाआस आगतंब्राह्मणंदृष्ट्वा स राजा तस्मैगौतमाय अनुरूपमासनमाहृत्य । अर्घ्यपाद्यादिसिद्ध्येउदकंभृत्यैः । आहरयां
चकार । अथउदकहरणानंतरं । अस्मैगौतमाय । अर्घ्यंतदुपलक्षितांपूजांचकार। पूजांकृत्वातंगौतमंप्रतिगौतमायभवतेवरंदद्मइ
त्युवाच ह ॥ ४ ॥ एवमुक्तःसगौतमउवाच । हेराजन्वरंदद्मइतित्वयाप्रतिज्ञातोवरोमेएषः कः कुमारस्यमत्पुत्रस्य अंतेसमीपे
यांवाचंप्रश्नरूपां अभापथास्तांमेब्रूहीति ॥ ५ ॥ एवंप्रार्थितःसराजोवाच हेगौतमतत्त्वयाप्रार्थितं दैवेषुवरेषुवै अतस्तस्यरहस्य

---

उप० । मेतइतीमइतिहप्रतीकान्युदाजहार ॥ ३ ॥ सहोवाचतथानस्त्वंतातजानीथाययथायदहंकिंचन वेदसर्वमहंतत्तुभ्यमवोचंप्रेहितुतत्र
प्रतीत्यब्रह्मचर्यंवत्स्यावइतिभवानेवगच्छत्वितिसआजगामगौतमोयत्रप्रवाहणस्यजैवलेरासस्तस्माआसनमाहृत्योदकमाहरयांचकाराथहास्माअर्घ्यं
चकारतंहोवाचवरंभवतेगौतमायदद्मइति ॥ ४ ॥ सहोवाचप्रतिज्ञातोमएषवरोयांतुकुमारस्यांतेवाचमभापथास्तांमेब्रूहीति ॥ ५ ॥ सहोवाच
दैवेषुवैगौतमतद्वरेषु

त्वात्तन्नप्रार्थनीयं किंतुमानुषाणांहिरण्यादीनांमध्येकिमपेक्षितंब्रूहीति ॥६॥ एवमुक्तःसगौतमउवाच । ममहिरण्यस्यबहुतरस्यापात्तंप्राप्तिरस्तीतित्वयाविज्ञायते नकेवलंहिरण्यमात्रस्य किंतुगोअश्वानांदासीनांगवामश्वानांदासीनां प्रवाराणांपरिवाराणांदासानामितियावत् परिधानस्यपरिधानयोग्यस्यक्षौमादेरप्यपात्तं प्राप्तिरस्तीतित्वयाविज्ञायतेह अतोनमानुषोवरोमयाप्रार्थ्यते किंतुदैवएव सचत्वयादेयएवेतिभावेनाह ॥ मानोभवानिति ॥ नोऽस्माकं भवान् वहोःप्रभूतस्यानंतस्यानंतफलहेतुभूतस्यापर्यंतस्यअपरिसमाप्तिकस्यपुत्रपौत्रादिगामिकस्यदैववित्तस्याभ्यावदान्योऽदातामाभूदिति अवश्यंदैवंवित्तंत्वयादेयमेवेतिभावः । वहोर्बहुगुणस्यानंतस्यनाशरहितस्य । अपर्यंतस्येयत्तारहितस्यभगवतस्तद्विद्यायाअभ्यवदान्योमाभूदितिवार्थः । एवंप्रार्थितवरं प्रति सराजा हेगौतम तीर्थेनोपसदनशास्त्रेणतदुक्तप्रकारेण । विद्यामिच्छसिइच्छस्वेत्याह । अन्यथाऽदेयत्वात् । एवंराज्ञास्मारितशास्त्रार्थोगौतमआह । अहंभवंतमुपैमिशिष्यत्वेनोपगच्छामीति । नन्वेवंक्षत्रियेब्राह्मणेनशिष्यवृत्तिकरणेशास्त्रविरोधःस्यादित्यतःश्रुतिःस्वयमाह ॥ वाचेति ॥ पूर्वेहिकिलब्राह्मणाः क्षत्रियान्विद्यामर्थयमानाःसंतः क्षत्रियान्शिष्यवृत्त्यावाचैवोपयंतिउपगच्छंति । नोपायनशुश्रूषणादिभिः । अतःसगौतम उपायनकीर्त्योपायनकथनमात्रेणोवास ॥ ७ ॥ सराजातंब्राह्मणंपुत्र 719

उप० । मानुषाणांब्रूहीति ॥ ६ ॥ सहोवाचविज्ञायतेहास्तिहिरण्यस्योपात्तंगोअश्वानांदासीनांप्रवाराणांपरिधानस्यमानोभवान्बहोरनंतस्यापर्यंतस्याभ्यवदान्योऽभूदितिसवैगौतमतीर्थेनेच्छसी३इत्युपैम्यहंभवंतमितिवाचाहस्मैपूर्वउपयंतिसहोपायनकीर्त्योवास ॥ ७ ॥

तिरस्कारेणक्रुद्धंमत्वाक्षमापयन्नुवाच । हेगौतमयथातवपितामहाःअस्मत्पितामहेषुअपराधंक्षमंते तथात्वंनोऽस्मान्मापराध्यास्त्व त्पुत्रस्तिरस्कृतइत्यपराधिनोनकुरु । तमपराधंक्षमस्वेतिभावः । यद्वात्वंनःअस्मान्मापराध्यःअपराधिनोनकुरु तथातवपिताम हाश्चनोमापराध्यःअपराधिनोनकुर्वंतु त्वत्पुत्रतिरस्कारेणममापराधंत्वंत्वत्पितामहाश्चसर्वेक्षमंतामित्यर्थः । नन्वयमपराधःकुतः क्षंतव्यइत्यतोमयाअपूर्वविद्याप्रदानादितिभावेनवक्ष्यमाणविद्यांस्तौति ॥ यथेति ॥ इयंवक्ष्यमाणाविद्येतःपूर्वंकस्मिंश्चनब्राह्मणे यथा यथावन्नोवास क्षत्रियाणामेवासाधारणविद्येतिभावः । तांतुतादृशीमपि अहंतुभ्यंवक्ष्यामियतोऽतोस्मदपराधःक्षंतव्यः । किमेवमपूर्वविद्यांदत्वाऽपराधक्षमापनेन अपूर्वत्वाद्धिद्यैवनोच्यतइति कुतोनोच्यतइत्यतआह ॥ कोहीति ॥ एवंब्रुवंतमहंतव शिष्योस्मीतिब्रुवंतंप्रत्याख्यातुंविद्यांनदास्यामीतिनिषेद्धुंकोऽर्हतीत्युवाचेतिसंबंधः ॥ ८ ॥ इतरप्रश्नोत्तराणांचतुर्थप्रश्नोत्तरसापे क्षत्वात्चतुर्थप्रश्नोत्तरंवदन्पंचाग्निविद्यामाह ॥ असावित्यादिना ॥ हेगौतम असौमुख्यप्राणस्थितः लोकःप्रकाशरूपोद्युलो कस्थितोनारायणःअग्निरदनादग्निनामकः । नन्वस्याग्नित्वेतस्यसमिदादिकंवक्तव्यमित्यतआह ॥ तस्येति ॥ अयंनारायणःपुन र्नारायणाद्यात्मकत्वेनपंचरूपः तस्यद्युलोकस्थितनारायणाग्नेः समित्समित्स्थानीयःसमेधनात्समिच्छब्दवाच्यःसमित्स्थःनारा यणः आदित्यएवआदानादादित्यनामकस्तदंतर्गतएव धूमोधूमस्थानीयोधूत्काराद्धूमनामकोधूमस्थवासुदेवः रश्मयः रमणाच्छा

उप० । सहोवाचतथानस्त्वंगौतममापराध्यस्तवचपितामहायथेयंविद्येतःपूर्वंनकस्मिंश्चनब्राह्मणउवासतांत्वहंतुभ्यंवक्ष्यामिकोहित्वैवंब्रुवंत मर्हतिप्रत्याख्यातुमिति ॥ ८ ॥ असौवैलोकोग्निर्गौतमतस्यादित्यएवसमिद्रश्मयोधूमो

सनाच्चरद्दिननामकःरश्मिस्थः बहुरूपत्वाद्बहुवचनं अर्चिरर्चिःस्थानीयःअर्च्यत्वादर्चिर्नामकोर्चिःस्थःसंकर्षणःअहः अहीनत्वाद हर्नामकोहःस्थश्च अंगाराःअंगारस्थानीयाःस्वांगत्वेनार्यतेइत्यंगारनामकाअंगारस्थाःप्रद्युम्नरूपविशेषाः दिशआदेशनात्दिङ्नामकाःदिक्स्थाश्च विष्फुलिंगाःविष्फुलिंगस्थानीयाः विविधस्फुरणाद्विष्फुलिंगनामकाःविष्फुलिंगस्थाअनिरुद्धरूपविशेषाः अवांतरमादिशंतीत्यवांतरदिशस्तत्स्थाश्च तस्मिन्नेतस्मिन्द्युस्थेनारायणाख्येऽग्नौ देवाःश्रद्धांश्रद्धयेष्टवंतंअद्भिश्चविशिष्टमुत्क्रांतंजीवं जुह्वति एवंद्युलोकनिक्षिप्तोजीवः तस्याआहुत्याइतिचतुर्थीपंचम्यर्थे तस्याआहुतेःसोमोराजासंभवतिसोमांतर्गतोभवतीत्यर्थः ॥९॥ हेगौतम पर्जन्यःपरमस्यसकाशाज्जन्यइतिपर्जन्यनामकोमेघचक्रस्थोवासुदेवोऽग्निर्वैवासुदेवोपिनारायणाद्यात्मनापंचरूपः तस्य पर्जन्यस्थवासुदेवाख्याग्नेः समित्तदंतर्गतोनारायणः संवत्सरएवसम्यग्वत्सान्रमयतीतिसंवत्सरनामकःसंवत्सरस्थएव धूमस्तत्स्थोवासुदेवः। अभ्राण्यन्यैरभरणीयत्वादभ्रनामकान्यभ्रस्थानिच अर्चिरर्चिस्थःसंकर्षणो विद्युत्विद्योतनाद्विद्युन्नामकोविद्युत्स्थश्च अंगारास्तत्स्थःप्रद्युम्नोशनिरशनादशनिनामकस्तत्स्थश्च। विष्फुलिंगाःतत्स्थानिरुद्धरूपविशेषाः ह्रादुनयःनिर्ह्रादनात्ह्रादुनिनामकाःगर्जनस्थाश्च तस्मिन्नेतस्मिन्पर्जन्याख्याग्नौ सोमंराजानंसोमराजांतर्गतंजीवंजुह्वति एवंपर्जन्याग्नौहुतोजीवस्तस्याआहु

---

उप०। ऽहरर्चि दिशोंगारा अवांतरदिशोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतितस्याआहुत्यैसोमोराजासंभवति ॥ ९ ॥ पर्जन्योवाअग्निर्गौतमतस्यसंवत्सरएवसमि दभ्राणिधूमो विद्युदर्चि रशनिरंगारा ह्रादुनयोविष्फुलिंगा स्तस्मिन्नेतस्मिन्नग्नौदेवाःसोमंराजानंजुह्वति तस्याआहुत्यै

तेर्वृष्टिःसंभवतिवृष्ट्यंतर्गतोभवतीत्यर्थः ॥ १०॥ अयंवैलोकःपृथिवीलोकस्थःपृथिवीनामकःसंकर्षणोग्निर्वै सोपिनारायणाद्यात्मनापं चरूपः तस्यपृथिवीलोकस्यसंकर्षणाख्याग्नेः समित्तत्स्थोनारायणःपृथिव्येवप्रथितत्वात्पृथिवीनामकःपृथिवीस्थएव धूमस्थोवासु देवोऽग्निरदनादग्निनामकोग्निश्च । अर्चिस्थःसंकर्षणोरात्रीरतिकरत्वाद्रात्रिनामकस्तत्स्थश्च अंगारस्थःप्रद्युम्नश्चंद्रमाश्चंदनाच्चंद्रमा नामकस्तत्स्थश्च विष्फुलिंगस्थानिरुद्धरूपविशेषाः नक्षत्राणि अस्यक्षत्रमन्यन्नास्तीतिनक्षत्रनामकास्तत्स्थाश्च तस्मिन्नेतस्मिँल्लोकाग्नौ देवावृष्टिंतदंतर्गतंजीवंजुह्वति एवंलोकाग्नौहुतोजीवस्तस्याआहुतेरन्नंसंभवतिअन्नांतर्गतोभवति॥ ११॥ पुरुषोजगत्पूरणात्पुरुषनामा पुरुषस्थःप्रद्युम्नोऽग्निर्वै सोपिपूर्ववत्पंचविधः । तस्याग्नेःसमित्स्थोनारायणोव्यात्तमेवव्यात्तनामकःआस्योत्पाटनगः धूमस्थःवासुदे वःप्राणःप्रणयनात्प्राणनामकः तत्स्थश्च अर्चिस्थःसंकर्षणोवाग्वचनात्वाङ्नामातत्स्थश्च अंगारस्थःप्रद्युम्नः चक्षुश्चष्टृत्वाच्चक्षु र्नामकस्तत्स्थश्च विष्फुलिंगस्थोनिरुद्धःश्रोत्रंश्रवणाच्छ्रोत्रनामकस्तत्स्थश्च तस्मिन्नेतस्मिन्नग्नौदेवाअन्नमन्नांतर्गतंजीवंजुह्वति एवं पुरुषाग्नौहुतोजीवस्तस्याआहुतेरेतःपुरुषरेतोंऽतर्गतःसंभवति ॥ १२ ॥ योषाअखिलैर्जोष्यत्वाद्योषानामकःस्त्रीस्थोनिरुद्धोग्निर्वै सोप्युक्तरीत्यापंचविधः तस्याग्नेःसमित्तदंतस्थोनारायणः । उपस्थएवोपस्थितत्वादुपस्थनामकस्तदंतर्गतश्च । धूमस्थोवासुदेवो

उप० । वृष्टिःसंभवति ॥ १० ॥ अयंवैलोकोग्निर्गौतम तस्यपृथिव्येवसमि द्ग्निर्धूमो रात्रिरर्चि श्चंद्रमाअंगाराः नक्षत्राणिविस्फुलिंगा स्तस्मिन्नेतस्मिन्नग्नौदेवावृष्टिंजुह्वतितस्याआहुत्याअन्नंसंभवति ॥ ११ ॥ पुरुषोवाअग्निर्गौतमतस्यव्यात्तमेवसमि त्प्राणोधूमो वागर्चि श्चक्षुरंगाराः श्रोत्रंविस्फुलिंगा स्तस्मिन्नेतस्मिन्नग्नौअन्नंजुह्वतितस्याआहुत्यैरेतःसंभवति ॥ १२ ॥ योषावाअग्नि गौतमतस्याउपस्थएवसमि ल्लोमानिधूमो

लोमानिलोपकत्वाल्लोमनामकोलोमस्थश्च अर्चिस्थःसंकर्षणोयोनिर्यापयतिनयतिचेतियोनिनामकस्तदंतस्थश्च । अंगारस्थाःप्रद्यु न्नरूपविशेषाः यदंतःकरोतितेते विष्फुलिंगस्थानिरुद्धरूपविशेषाः । अभिनंदाअभिनंदयतीत्यभिनंदनामकाःस्त्रीपुंसयोगजाभि नंदस्थाश्च तस्मिन्नेतस्मिन्नग्नौदेवारेतःपुरुषरेतोंतर्गतंजीवंजुह्वति । एवंयोषाग्नौहुतोजीवस्तस्याआहुतेःपुरुषःसंभवति स्वसहगता वादिभूतारब्धदेहवान्भवतीत्यर्थः । अनेनयतिथ्यामाहुत्यामितिचतुर्थप्रश्नस्यपंचम्यामाहुत्यांहुतायामापःपुरुषवचसोभवंतीत्यु त्तरमुक्तं । एवमुत्पन्नस्यव्यापारमाह ॥ सइति ॥ सएवंदेहविशिष्टोजीवोजीवति कियंतंकालमित्यतआह ॥ यावज्जीवतीति ॥ यावत्कालपर्यंतंजीवतिजीवनहेतुभूतंकर्मतिष्ठतीत्यर्थः ॥ १३ ॥ अथजीवनहेतुभूतकर्मसमाप्त्यनंतरमयंपुरुषोयदाम्रियते । अथ तदेनंपुरुषमग्नयेहरंति । तदेवविशदयति ॥ तस्याग्निरेवेति ॥ प्रसिद्धाग्निस्थोभगवानित्यर्थः । पुरुषोभास्वरवर्णःसंभवति नि षेकादिभिरंत्येष्ट्यंतैःकर्मभिःसंस्कृतत्वात् ॥ १४ ॥ अथप्रथमपंचमप्रश्नोत्तरमाह ॥ तेयएवमिति ॥ येएवमुक्तप्रकारेणैतत्पंचा ग्निस्थंभगवत्स्वरूपंविदुस्ते येचामीअरण्येमनोहरप्रदेशेश्रद्धांश्रद्धापूर्वकंसत्यंसद्गुणंभगवंतमुपासतेतेच विशिष्टोत्क्रांत्येमंदेहंपरि

उप० । योनिरर्चि यदंतःकरोतितेंगारा अभिनंदाविष्फुलिंगा स्तस्मिन्नेतस्मिन्नग्नौदेवारेतोजुह्वतितस्याआहुत्यैपुरुषःसंभवतिसजीवतिया वज्जीवति ॥ १३ ॥ अथयदाम्रियतेअथैनमग्नयेहरंतितस्याग्निरेवाग्निर्भवतिसमित्समिद्धूमोऽर्चिरर्चिरंगाराअंगाराविष्फुलिंगाविष्फुलिंगास्तस्मिन्ने तस्मिन्नग्नौदेवाःपुरुषंजुह्वतितस्याआहुत्यैपुरुषोभास्वरवर्णःसंभवति ॥ १४ ॥ तेयएवमेतद्विदुर्येचामीअरण्येश्रद्धांसत्यमुपासतेते

स 723 धूम.

त्यज्यार्चिरभिसंभवतिअर्चिर्लोकंप्राप्नुवंति । अर्चिषोवायुलोकंगत्वाहर्नामकदेवतालोकंप्राप्नुवंति अह्नआपूर्यमाणपक्षंशुक्लपक्षाभि मानिदेवतालोकंप्राप्नुवंति । आपूर्यमाणपक्षात्यान्षण्मासान्आदित्यउदङ्ङुत्तरतःएति । तान्षण्मासान्उत्तरायणसंज्ञकान् तदभिमानिदेवतालोकंप्राप्नुवंति । मासेभ्यःसंवत्सरतदिद्वरुणप्राप्तिद्वारादेवलोकंप्रजापतिलोकंप्राप्नुवंति देवानांसंवत्सरतदितिव् रुणप्रजापतीनांलोकमितिवार्थः । देवलोकादादित्यंसूर्यलोकंप्राप्नुवंति । आदित्यात्सोमवैश्वानरेंद्रध्रुवद्वारावैद्युतंविद्युन्नामक भारत्यधिष्ठितलोकंप्राप्नुवंति । मानवःमनुअवबोधनइतिधातोर्मनुर्ज्ञानरूपःपरमात्मा तदतिप्रेमास्पदत्वेनतत्संबंधीमानवः पुरु षोवायुस्तान्वैद्युतान्विद्युल्लोकप्राप्तान्जीवानेत्यब्रह्मलोकान्चतुर्मुखलोकान्विष्णुलोकान्वाप्रतिगमयति । अत्रवायोरन्यस्यापि ब्रह्मलोकगमकत्वशंकापरिहारायमानवइत्युक्तं । नहिलोकेराजानंयःकश्चित्प्रापयतिकृतमतिप्रियंचाऽपहायेतिभावः । तथाच श्रुतिः । वायुरेवब्रह्मगमयतितस्यह्येषाशक्तिःनह्यन्योब्रह्मगमयतिप्रियोह्येनद्गमयतिनह्यन्यःप्रियोब्रह्मणइति । तेब्रह्मलोकंगताः पराउत्तमास्तेषुब्रह्मलोकेषुपरावतःपरंब्रह्मायुःतद्वंतःतावत्संख्याकान्संवत्सरान्वसंति । तेषांतल्लोकगतानांनपुनरावृत्तिः ॥ १५ ॥ एवंदेवयानमार्गससाधनमुक्त्वापितृयाणमार्गससाधनमाह ॥ अथेति ॥ अथयेयज्ञेन ज्योतिष्टोमादिना । दानेन सत्पात्रेद्र व्यत्यागेन । तपसा कृच्छ्रचांद्रायणादिना । कामनयाकृतेन लोकान्चंद्रलोकान्जयंतिप्राप्नुवंति । तत्कथमित्यतआह ॥ तेधूम

उप० । र्चिरभिसंभवंति अर्चिषोहरह्नआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्यएति मासेभ्योदेवलोकं देवलोकादादित्य मादित्याद्वैद्युतं तान्वैद्युतान्पुरुषोमानवएत्यब्रह्मलोकानगमयतितेतेषुब्रह्मलोकेषुपराःपरावतोवसंतितेषांनपुनरावृत्तिः ॥ १५ ॥ अथयेयज्ञेनदानेन

मिति ॥ तेप्रथमंधूमंधूमाभिमानिदेवतालोकंअभिसंभवंतिप्राप्नुवंति धूमाद्रात्रिंरात्र्यभिमानिदेवतालोकंअभिसंभवंतीतिप्रत्येकं संबंधः । रात्रेरपक्षीयमाणपक्षंकृष्णपक्षाभिमानिदेवतालोकंप्राप्नुवंति । अपक्षीयमाणपक्षात् यान्षण्मासानादित्योदक्षिणादक्षिणतएति तान्षण्मासान्दक्षिणायनसंज्ञकान्तदभिमानिदेवतालोकंप्राप्नुवंति । मासेभ्यःपितृलोकं पितृलोकाच्चंद्रंप्राप्नुवंति । ते चंद्रंप्राप्यान्नंभवंतिदेवानांभोग्याभवंतीत्यर्थः । तद्विशदयति ॥ तांस्तत्रेति ॥ देवास्तांश्चंद्रलोकंप्राप्तान्भोग्यान्कर्मिणःपुरुषान् तत्रचंद्रलोकेभक्षयंति तैःसेवांकारयंतीत्यर्थः । तत्रदृष्टांतमाह ॥ यथेति ॥ यथायज्ञेऋत्विजःसोमंराजानंतदभिमन्यमानलताविशेषमाप्यायस्वाप्यायनंकुर्विंतिपुनरपक्षीयस्वापक्षयंकुर्विंति कंचित्प्रत्युक्त्वातदानींयभक्षयंति एवमेनान्कर्मिणः तत्रदेवलोकेत्वंस्वात्मानमाप्यायस्वानेनकर्मफलेनआत्मनआप्यायनंकुरु । अपक्षीयस्वतादृशकर्मफलेनात्मनोपक्षयंकुर्वित्यर्थः । एवंतेयएवमेतद्विदुर्येचामीअरण्येश्रद्धांसत्यमुपासते अथयेयज्ञेनदानेनेत्यादिनादेवयानपितृयाणमार्गसाधनोक्त्यापंचमप्रश्नस्यतेर्चिरभिसंभवंतितेधूममित्यादिनाप्रथमप्रश्नस्यचोत्तरमुक्त्वा इदानीमेतल्लोकप्राप्तिप्रकारदर्शनेनद्वितीयप्रश्नोत्तरमाह ॥ तेषामिति ॥ तेषांचंद्रलोकप्राप्तानांकर्मिणां तत्कर्मार्जितमदृष्टं यदापर्यवैतिगच्छति । अथतदा तेइममेवाकाशमाकाशलोकमभिनिष्पद्यंते । आ

उप० । तपसालोकान्जयंतितेधूममभिसंभवंतिधूमाद्रात्रिंरात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्यएतिमासेभ्यः पितृलोकंपितृलोकाच्चंद्रंतेचंद्रंप्राप्यान्नंभवंतितांस्तत्रदेवायथासोमंराजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्रभक्षयंतितेषाँयदातत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यंत

काशाद्वायुं वायोर्वृष्टिं वृष्टेःपृथिवीमभिनिष्पद्यंतइतिप्रत्येकंसंबंधः । तेपृथिवींप्राप्यान्नमन्नगताभवंति । पुनःपुरुषाग्नौहूयंते । ततोयोषाग्नेःजायंते तेकर्मकृत्वालोकान्पुनरावृत्तिलोकान्प्रत्युत्थायिनोगमनशीलाभवंति । तेलोकंप्रतिगताः एवमेवपूर्वोक्तप्रकारेणैवाऽनुस्वकर्मार्जितादृष्टसमाप्त्यनंतरं परिवर्ततेपुनरागच्छंति । तेएवमेवानुपरिवर्ततेपरिभ्रमंतीत्यर्थः । तृतीयप्रश्नोत्तरमाह ॥ अथेति ॥ अथयेएतौपंथानौविद्याकर्ममार्गौनविदुस्तेकीटाःपतंगाभवंति यदिदंदंदशूकंदशनशीलंसर्पादिकंतच्चभवंतीत्यर्थः । यथोक्तं "विद्यापथःकर्मपथोद्वौपंथानौप्रकीर्तितौ । तद्वर्जितास्त्रिधायांतितिर्यग्वानरकंतम" इति । सर्वेषांपरलोकगमनाभावादसौलोकोनसंपूर्यतइतिभावः ॥ १ ॥ द्वितीयब्राह्मणं ॥ २ ॥ योधिकारीदृष्टादृष्टमहत्त्वमिच्छेत्तस्यकर्तव्यविशेषमाह ॥ **सयइत्यादिनाब्राह्मणेन** ॥ योधिकारी अहंमहत् महत्त्वंदृष्टादृष्टमहत्त्वंप्राप्नुयामिति कामयेत सउदगयनेउत्तरायणे आपूर्यमाणपक्षस्यशुक्लपक्षस्य पुण्याहेपुण्यदिवसे पुंसानक्षत्रेणहस्तस्वात्यादिपुंनक्षत्रेण जुहोतिजुहुयादित्यन्वयः । तत्रेतिकर्तव्यताविशेषमाह ॥ **द्वादशाहमिति** ॥ होमदिवसात्प्राक्द्वादशाहंद्वादशदिवसपर्यंतमुपसद्व्रतीभूत्वापयोमात्रादिभक्षणेनोपवासलक्षणव्रतवान्भूत्वौदुंबरेउदुंबरवृक्षमयेचमसेचमसपात्रे । कंसेकांस्यपात्रेवा सर्वौषधंसर्वासामोषधीनांवक्ष्यमाणव्रीह्यादिधान्यानांसमुदायं

---

उप० । आकाशाद्वायुंवायोर्वृष्टिंवृष्टेःपृथिवींतेपृथिवींप्राप्यान्नंभवंतिपुनःपुरुषाग्नौहूयंतेततोयोषाग्नौततोजायंतेतेलोकान्प्रत्युत्थायिनस्तएवमेवानुपरिवर्ततेऽथयएतौपंथानौनविदुस्तेकीटाःपतंगायदिदंदंदशूकं ॥ १६ ॥ इतिद्वितीयब्राह्मणं ॥ २ ॥

उप० । सयःकामयतेमहत्प्राप्नुयामित्युदगयनंआपूर्यमाणपक्षस्यपुण्याहेद्वादशाहंउपसद्व्रतीभूत्वौदुंबरेकंसेचमसेवासर्वौषधं

फलानिअनिषिद्धानिक्रमुककदलीप्रभृतीनिफलानीत्येवमादिसंभरणीयं संभृत्यसंगृह्य परिसमूह्यभूशुद्धिंकृत्वा परिलिप्यकुंडमुपलिप्य तत्राग्निमुपसमाधायस्थापयित्वा परिस्तीर्यस्वशाखोक्तिप्रकारेणदर्भैरास्तीर्य आवृताज्यंहोमाज्यंविलापनादिनासंस्कृत्य मंथंसर्वौषधीनांपिष्टं संनीयसमीपमानीय संस्कृताज्येनजुहोति । होममंत्रान्पठंस्तावद्देवताप्रार्थनारूपंमंत्रद्वयंपठति ॥ यावंतइत्यादिना ॥ जातंसर्ववेत्तीतिजातवेदाःतस्यसंबुद्धिर्हेजातवेदःसर्वज्ञात्वयंतर्गतभगवन् त्वयिस्थितायावंतोदेवास्तिर्यंचोवक्रगतयःसंतः पुरुषस्यममकामान्घ्नंति । तेभ्योदेवेभ्यःभागधेयनाज्यभागमहंजुहोमि तेगृहीताज्यभागादेवास्तृप्ताःसंतोमामांसर्वैःकामैःस्तर्पयंतुस्वाहेतिप्रथमाहुतिमंत्रः । अहंविधरणीविघ्नकर्त्रीतियादेवतातिरश्चीवक्रगतिर्निपद्यतेज्ञायते तांसंराधनींसमस्तपुरुषार्थसाधिकां त्वात्वांअहंघृतस्यधारयायजेस्वाहेतिद्वितीयहोममंत्रः । प्रथमाहुतिद्वयमाज्यमात्रेणघृतस्यधारयेतिश्रवणात् तथाचेयंयोजना । संराधनीमहंस्वाहेतिमंत्रेणाग्नावाज्यंहुत्वा मंथेसर्वौषधीनांपिष्टे संस्रवंस्रुवसंस्पृष्टमाज्यमवनयतिसिंचेत् । एवमाज्यसंस्कृ

उप० । फलानीतिसंभृत्यपरिसमूह्यपरिलिप्याग्निमुपसमाधायपरिस्तीर्यावृताज्यंसंस्कृत्यपुंसानक्षत्रेणमंथंसन्नीयजुहोतियावंतोदेवास्त्वयिजातवेदस्तिर्यंचोघ्नंतिपुरुषस्यकामांस्तेभ्योहंभागधेयंजुहोमितेमातृप्ताःसर्वैःकामैस्तर्पयंतुस्वाहायातिरश्चीनिपद्यतेहंविधरणीइतितांत्वाघृतस्यधारयायजेसंराधनीं[illegible]स्वाहा ॥ १ ॥ ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिप्राणायस्वाहावशिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिवाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिचक्षुषेस्वाहासंपदेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिमनसेस्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिरेतसेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयति ॥ २ ॥

तंपिष्टंज्येष्ठायस्वाहाश्रेष्ठायस्वाहा तस्यैवविवरणंप्राणायस्वाहेतिमंत्रेणाग्नौजुहुयात् । एवमग्नौहुत्वापुनर्मंथेसंस्रवमवनयति । तदाज्यसंस्कृतंपिष्टंवसिष्ठायैस्वाहा । तस्यैव विवरणंवाचेस्वाहेतिजुहुयादित्यादिद्रष्टव्यं । एतेनाग्नौहुत्वामंथेसंस्रवमवनयतीत्यंतेउक्तस्याधिक्यंनेतिनतस्योपसंहारपरत्वंकल्पनीयं । यद्वाज्येष्ठायश्रेष्ठायस्वाहेतिमंत्रेणाग्नावाज्यसंस्कृतमंथंहुत्वापुनर्होम्येमंथेसंस्रवमवनयतीत्यादियथाश्रुतमेव नचांतेउक्तस्याधिक्यं होमशेषस्यमंथस्योत्तरत्रोपयोगकथनेनतत्संस्कारार्थमंतेपिमंथेसंस्रवणंकर्तव्यमितिभावेनतथोक्तत्वात् एवंहुतेदृष्टादृष्टमहत्वंलभ्यते उक्तंच "ज्येष्ठश्रेष्ठादिकैर्हुत्वाप्राणायात्रपरत्रच । ज्येष्ठःश्रेष्ठःसमानेभ्यो भवेन्नात्रविचारणे"ति ॥ १ ॥ २ ॥ ३ ॥ अथहोमानंतर मेनंहोमावशिष्टपिष्टं अभिमृशति अभिमर्शनंकुर्यात् । तन्मंत्रमाह ॥ भ्रमदसीत्यादिना ॥ अत्रमंथस्थोविष्णुःस्तूयते हेमंथस्थब्रह्मन् त्वंभ्रमदसि । जगत्सर्जनादिक्रियारूपमसि जगद्भ्रामकमसीतिवा । ज्वलदसि प्रकाशरूपमसि । गुणैःपूर्णमसि । प्रस्तब्धंनिष्क्रियमसि । अक्लिष्टकारित्वात् । एकसभमसि । एकासभाज

उप० । अग्नयेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिसोमायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभूःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयति भुवःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयति स्वःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभूर्भुवःस्वःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभूतायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिविश्वायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिसर्वायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिप्रजापतयेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयति ॥ ३ ॥ अथैनमभिमृशतिभ्रमदसिज्वलदसिपूर्णमसिप्रस्तब्धम

गद्रूपायस्यतत्त्वमेकसभमसि एकशफमितिपाठेएकशफात्मकाश्वाद्यंतर्गतमसीतिव्याख्येयं । यज्ञारंभेप्रस्तोत्रायत्हिंकृतंतत्त्वमसि त्वमेवयज्ञारंभेउच्चरितहिंकारप्रतिपाद्यमितिभावः । तेनैवयज्ञमध्येयत्हिंक्रियमाणंतत्त्वमसि तत्प्रतिपाद्यमसि । उद्गात्रायज्ञारंभेउद्गीथमसि उच्चत्वेनगीतमसि । तेनैवयज्ञमध्येउद्गीयमानमुच्चत्वेनगीयमानमसि । अध्वर्युणाश्रावितमसि । आग्नीध्रेणत्वंप्रत्याश्रावितमसि त्वमेवतदुभयोच्चारितमंत्रप्रतिपाद्यमितियावत् । आर्द्रेमेघोदरेविद्युदाद्यंतर्गतरूपेणदीप्तमसि । विभुर्व्यापकोऽसि । प्रभुःसमर्थोऽसि । अन्नमसिअद्यत्वादत्तृत्वाच्च ज्योतिर्ज्ञानरूपोसि । निधनंसर्वेषांलयस्थानमसि । संवर्गोऽसि समीचीनोवर्गोदेवतारूपोयस्यसःसंवर्गःसोऽसीति ॥ ४ ॥ अथैवमभिमर्शनानंतरं एनंमंथंसपात्रमुद्यच्छति हस्तेगृह्णाति । हस्तेगृहीत्वाजप्यमंत्रमाह ॥ आमंसीति ॥ हेमंथस्थभगवन् । तेतव महि महत्तरंरूपं त्वमेवाऽऽमंसि आसमंतात्साकल्येनजानासि वयंचतेतवमहिमहत्तरंरूपं । तेतव प्रसादात् आमं हिईपदेवजानीमइत्यर्थः । सत्वंराजेशानईशानांब्रह्मादीनांअनश्रेष्टकः । गुणाधिकःपालकश्चेत्यधिपतिरितिहप्रसिद्धस्मित्यर्थः । सराजेशानोभगवान्मामधिपतिंस्वावरस्वामिनंकरोत्वित्यर्थः । इतिशब्दः मंत्रसमाप्तिद्योतकः ॥ ५ ॥ अथैवंमंत्रजपानंतरं । एनंहस्तेगृहीतंमंथंग्रासचतुष्टयंकृत्वापृथक्संस्थाप्यप्रथमंग्रासमाचामतिभक्षय

---

उप० । स्येकशफमसिहिंकृतमसिहिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसिश्रावितमसिप्रत्याश्रावितमस्यार्द्रेसंदीप्तमसिविभुरसिप्रभुरस्यन्नमसि ज्योतिरसिनिधनमसिसंवर्गोसीति ॥ ४ ॥ अथैनमुद्यच्छत्यामᳫंस्यामᳫंहितेमहिसंहिराजेशानोधिपतिःसमाᳫंराजेशानोधिपतिंकरोत्विति ॥ ५ ॥ अथैनमाचामति

729

तिभक्षयेदित्यर्थः । तन्मंत्रमाह ॥ तत्सवितुरिति ॥ द्वितीयग्रासमंत्रमाह ॥ भर्गोदेवस्येति ॥ तृतीयग्रासमंत्रमाह ॥ धियोयोनइति ॥ चतुर्थग्रासमंत्रमाह ॥ सर्वांचेति ॥ सर्वांचसावित्रींगायत्रीं सर्वाश्चमधुमतीरुक्त्वाअनुपश्चादहमेवेदंसर्वंस्व योग्यतानुसारेणपूर्णंभूयासमितिवदेत् । ततोभूर्भुवःस्वाहेतिचतुर्थग्रासंभक्षयेत् । अंततोभक्षणांततआचम्याऽऽचमनंकृत्वा पाणीहस्तौप्रक्षाल्य शुद्धाचमनंचविधाय जघनेनाग्निंअग्नेर्जघनप्रदेशेपश्चिमेदेशे प्राक्शिरारात्रौसंविशतिशयीतेत्यर्थः ॥ ६ ॥ अयं गायत्र्यर्थः ॥ ६ ॥ यःनोऽस्माकमशेषजीवानां धियोबुद्धीःप्रचोदयात्प्रेरयेत् तस्यसवितुर्देवस्यनारायणस्य तत्गुणैस्ततं तस्मादेववरेण्यंवरणीयंभजनीयंभर्गोभारतिज्ञानरूपं धीमहिचिंतयामइति ॥ अयंमधुमत्यर्थः ॥ वातावायवो मधुनःसुखंयथा भवतितथाऋतायतेवांतिवांतु प्रार्थनप्रकरणात् । सिंधवोनद्योमधुनःसुखंयथास्यात्तथाक्षरंतिस्रवंतिस्रवंतु । ओषधीरोषधयोनोऽस्माकंमाध्वीरानंदकराःसंतु । नक्तंरात्रिरुषसउतदिवसाश्च मधुसुखमुद्दिश्यसंतु । पार्थिवंरजोमधुमत् आनंदकरमस्तु । पिताद्यौर्नो मधुसुखमुद्दिश्याऽस्तु । वनस्पतिर्नोमधुमान्सुखकरोऽस्तु । सूर्योमधुमानस्तु । गावोनोऽस्माकंमाध्वीःसुखकराःभवंत्विति । अत्र सर्वत्रवाय्वाद्यभिमानिदेवतायास्तदंतर्गतविष्णोर्वाप्रार्थनंक्रियते । पूर्णोभूतिवरोऽनंतसुखइतिव्याहृत्यर्थः । रात्रौशयित्वाप्रातःसं

---

उप० । तत्सवितुर्वरेण्यंमधुवाताऋतायतेमधुक्षरंतिसिंधवः । माध्वीर्नःसंत्वोषधीर्भूःस्वाहा भर्गोदेवस्यधीमहिमधुनक्तमुतोषसोमधुमत्पार्थिवंरजः । मधुद्यौरस्तुनःपिताभुवःस्वाहाधियोयोनःप्रचोदयात्मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः । माध्वीर्गावोभवंतुनःस्वःस्वाहेतिसर्वांचसावित्रीमन्वाहसर्वाश्चमधुमतीःसर्वाश्चव्याहृतीरहमेवेदंसर्वंभूयासंभूर्भुवःस्वःस्वाहेत्यंततआचम्यपाणीप्रक्षाल्यजघनेनाग्निंप्राक्शिराःसंविशतिप्रात

ध्यावंदनं(नादिकं)कृत्वासूर्योदयकालेआदित्यमुपतिष्ठतेआदित्यांतर्गतभगवदु(पस्थानं)पासनंकुर्यात्।तन्मंत्रमाह॥दिशामिति॥ हेआदित्यांतर्गतभगवंस्त्वंदिशांसर्वदिग्वर्तिप्राणिनामेकपुंडरीकमसिमुख्यःश्रेष्ठोसि अतस्तदुपासकोऽहंमनुष्याणामेकपुंडरीकंभूयासमित्यर्थः। पूर्वंशयनाद्यथेतंसंध्यावंदनाद्यर्थंगतं तथाएत्यगत्वाजघनेनाग्निमग्नेःपश्चिमदेशे आसीनःउपविष्टःसन्वंशमेतद्विद्योपदेशकाचार्यपरंपरालक्षणंजपतिजपेत् ॥ ६ ॥ तमेववंशमाह ॥ **तेहैतमिति** ॥ तमेतंनिर्माणक्रमसहितंमंथं अरुणस्याऽपत्यमारुणिरुद्दालकनामा वाजसनेयाययाज्ञवल्क्यायांऽतेवासिनेशिष्यायोक्त्वोवाच। किं हेयाज्ञवल्क्य योऽधिकारी एनंहोमावशिष्टमंथं। यदिशुष्केस्थाणौनिषिंचेत् तर्हितस्मिन्स्थाणौशाखाजायेरन् पलाशानिपर्णानिचप्ररोहेयुरिति । एवमुत्तरत्रापि व्याख्येयं ॥ ७ ॥ मधुकोनामतः पिंगस्याऽपत्यंपैंग्यः ॥ ८ ॥ चूलोनामतः भगवित्तेरपत्यंभागवित्तिः ॥ ९ ॥ जनकस्याऽपत्यं

---

उप० । रादित्यमुपतिष्ठतेदिशामेकपुंडरीकमसिअहंमनुष्याणामेकपुंडरीकंभूयासमितियथेतमेत्यजघनेनाग्निमासीनोवंशंजपति ॥६॥ तंहैतमुद्दालकआरुणिर्वाजसनेयाययाज्ञवल्क्यायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥ ७ ॥ एतमु हैववाजसनेयोयाज्ञवल्क्योमधुकायपैंग्यायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरन्शाखाःप्ररोहेयुःपलाशानीति॥ ८ ॥ एतमुहैव मधुकःपैंग्यश्चूलायभागवित्तयेंतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥ ९ ॥ एतमुहैवचूलोभागवित्तिर्जानकयआयस्थूणायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥ १० ॥ एतमुहैवजानकिराय

जानकिः आयस्थूणोनामतः ॥ १० ॥ सत्यकामोनामतः जबालस्यापत्यंजाबालः ॥ ११ ॥ वहुत्वात्तच्छिष्याणामंतेवासिभ्य इत्येवोक्तं एतद्विद्यासंप्रदानयोग्यानाह ॥ तमेतमिति ॥ तमेतंपूर्वोक्तमाहात्म्यविशिष्टंमंथमपुत्रायपुत्रशून्यायनब्रूयात् । अनंतेवासिनेशिष्यशून्यायचनब्रूयात् । तादृशायकथनेपरंपराविच्छेदेनबहुपुरुषार्थालाभात् । यद्वाअनंतेवासिनेऽन्यविद्यास्वशिष्यायनब्रूयात् । यथोक्तं "अन्यविद्यास्वशिष्यस्यनब्रूयात्प्रथमंक्वचिदि"ति ॥ १२ ॥ औदुंबरेकंसेचमसेइत्यादिवाक्येअपेक्षितमनुक्तंभागमाह ॥ चतुरौदुंबरइति ॥ औदुंबरःउदुंबरविकारश्चतुश्चतुस्संख्याकोभवति । तदेवाह ॥ औदुंबरःस्रुवइति ॥ उपमंथन्यावरणी । सर्वौषधंसंभृत्येत्युक्तंविवृणोति ॥ दशेति ॥ ग्राम्याणिप्रधानानिधान्यानि दशभवंतिभवेयुः । कानितानीत्यतआह ॥ व्रीहियवाइति ॥ व्रीहियवास्तिलमाषाःप्रसिद्धाः अणवःश्यामाकाः प्रियंगवोगोधूमाश्चप्रसिद्धाः मसूराःदेशांतरप्रसिद्धाः खल्वानिष्पावाः ख(ल्व)लुकुलाःकुलित्थाः तान्व्रीह्यादीन् पिष्टान्पिष्टीकृतान् दधनिमधुनिकृतेउपसिंचतितेनाक्तंकुर्यादित्यर्थः । एवमुक्तंकृत्वानंतरमाज्यस्यभागंपूर्वोक्तप्रकारेणजुहोतीति ॥ १३ ॥ तृतीयंब्राह्मणं ॥ ३ ॥ अनेनोपनिषदुक्त

---

उप० । स्थूणःसत्यकामायजाबालायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशिनीति ॥ ११ ॥ एतमुहैवसत्यकामोजाबालोंतेवासिभ्यउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीतितमेतंनापुत्रायवानंतेवासिनेवाब्रूयात् ॥ १२ ॥ चतुरौदुंबरोभवत्यौदुंबरस्स्रुवऔदुंबरश्चमसऔदुंबरइध्मऔदुंबर्याउपमंथन्यौदशग्राम्याणिधान्यानिभवंतिव्रीहियवास्तिलमाषाअणुप्रियंगवोगोधूमाश्चमसूराश्चखल्वाश्चखलकुलाश्चतान्पिष्टान्दधनिमधुनिघृतउपसिंचत्याज्यस्यजुहोति ॥ १३ ॥ इतितृतीयंब्राह्मणं ॥ ३ ॥

विधानेनजातःपुत्रःप्रायःस्वर्गापवर्गयोग्योभवतीतिप्रजातिकर्मवक्तुमिदंब्राह्मणंप्रवर्तते । तत्रादौतावत्पुत्रोत्पत्तिहेतुभूतंरेतःस्तोतुमाह ॥ **एषांभूतानामिति** ॥ एषांप्रसिद्धानां भूतानांचराचराणां पृथिवीरसःसारःसर्वगुणैर्वरा । पृथिव्याआपोवरुणोरसः अपामोषधयःतदभिमानीसोमोरसः ओषधीनांपुष्पाणितदभिमानीरसः पुष्पाणांफलानितदभिमानीरसः फलानांपुरुषःपुंस्त्वाभिमानीरुद्रः पुरुषस्यरेतःतदभिमानिनीसरस्वतीरसः । अनेनरेतसःउत्तमाभिमानिनीकत्वात्श्रैष्ठ्यमुक्तंभवति । यथोक्तं पृथिवीसर्वभूतेभ्यःसदासर्वैर्गुणैर्वरा । रसःसारोवरश्चेतिशब्दाएकार्थवाचकाः । पृथिव्यावरुणःश्रेष्ठस्तस्मादोषधिदेवता । सोमस्तस्मात्तुपुरुषोरुद्रोयत्पौंस्यदेवता । तस्मात्सरस्वतीवाग्घिश्रेष्ठेति । अत्रयद्यपिपुष्पाणांफलानांरेतसश्चाऽभिमानीनोक्तः तथापितारतम्यप्रकरणात्पुष्पाभिमानिनोदक्षबृहस्पत्यादयःफलाभिमानींद्रःकामोवाग्राह्यः । रेतोभिमानिनीचसरस्वत्येव रुद्रस्यपुंस्त्वदेवतात्वोक्तेरितिज्ञेयं ॥ १ ॥ एवंरेतसःश्रेष्ठत्वादेवसप्रजापतिर्ब्रह्मेक्षांविचारंचक्रे । कथं हंतअस्माअस्यसर्वसारभूतस्यरेतसः प्रतिष्ठामाधारंकल्पयानीति । एवंविचार्यसप्रजापतिःस्त्रियंरेतसःप्रतिष्ठाभूतांससृजेउत्पादितवान् । तांस्त्रियंसृष्ट्वाअधउपास्तमिथुनीभावाख्योपासनंकृतवान् । यस्मादेवंप्रजापतिःकृतवान् तस्मादद्यतनोपिस्त्रियमधउपासीत । सउपासकःउक्तोपासनेनएतंप्राञ्चं 733

---

उप० । एषांवैभूतानांपृथिवीरसः पृथिव्याआपो ऽपामोषधय ओषधीनांपुष्पाणि पुष्पाणांफलानि फलानांपुरुषः पुरुषस्यरेतः ॥ १ ॥

सहप्रजापतिरीक्षांचक्रे हंतास्मैप्रतिष्ठांकल्पयानीतिसस्त्रियꣳससृजे तांसृष्ट्वाऽधउपास्त तस्मात्स्त्रियमधउपासीतसएतंप्राञ्चं :

प्राकालीनं । ग्रावाणंग्रावनिभंरेतःआत्मनएवसमुदपारयत्निष्कासयेत् । तेननिष्कासितेनरेतसैनांस्वस्त्रियमभ्यसृजत् संयोजयेदित्यर्थः ॥ २ ॥ नन्ववश्यंभाविन्यर्थेकथमयंविधिरितिचेत् न । मिथुनीभावस्यापियज्ञत्वभावनायाविधानादितिभावेनप्रसिद्धवाजपेयादियज्ञवदत्रापिवेद्यादिकमाह ॥ तस्याइति ॥ तस्यास्त्रियः उपस्थोवेदिः तत्साम्यात् लोमानितद्वृत्तीनिबर्हिः तद्वृत्तिचर्मैवचर्मकृष्णाजिनस्थानीयं यौमध्यतोमध्यप्रदेशेविद्यमानौमुष्कौवृषणौ तावधिषवणेसोमाभिषवफलकेइत्यन्वयः । मध्यतोयोनिमध्यप्रदेशः समिद्धोदीप्तोग्निः तस्मिन्नग्नौरेतोजुहुयादितिभावः । उक्तप्रकारेणमिथुनीभावस्ययज्ञभावनाकर्तुःफलमाह ॥ सइति ॥ वाजपेयेनयजमानस्य सम्प्रसिद्धो यावाँल्लोकोभवति तावाँल्लोकः अस्योक्तप्रकारेणमिथुनीभावोपासकस्यभवति । वाजपेयेनयजमानस्यपरलोकेयावत्सुखंतावत्सुखमपिस्यादितिभावः । फलांतरमाह ॥ यएवमिति ॥ यःपुरुषःएवमुक्तप्रकारेण मिथुनीभावस्ययज्ञत्वंविद्वानधोपहासंस्त्रीसंगंचरति सआसांस्त्रीणांसुकृतंवृंक्तेच्छेदयति स्त्रीभिःकृतंसर्वंसुकृतंस्वयमादायतासां यथासुकृतंनास्तितथाकरोतीत्यर्थः । मिथुनीभावस्ययज्ञत्वमविज्ञायैवतदनुष्ठातुरनर्थमाह ॥ अथेति ॥ अथपुनर्यःपुरुषइदंमिथुनीभावस्ययज्ञत्वमविद्वानधोपहासंचरति अस्यपुरुषस्यसुकृतंस्त्रियआवृंजतेच्छेदयंतीत्यर्थः ॥ ३ ॥ मिथुनीभावस्ययज्ञत्वम

उप० । ग्रावाणमात्मनएवसमुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्यावेदिरुपस्थो लोमानिबर्हिश्चर्माधिषवणे समिद्धोमध्यतस्तौमुष्कौ सयावान्हवैवाजपेयेनयजमानस्यलोकोभवतितावानस्यलोकोभवति यएवंविद्वानधोपहासंचरत्यासां(स्त्रीणां)सुकृतंवृंक्तेऽथयइदमविद्वानधोपहासं चरत्यस्यस्त्रियःसुकृतंवृंजते ॥ ३ ॥

ननुसंधायतदनुष्ठातुरनर्थफलंभवतीत्येतदनेकाचार्यसंमतमित्याह ॥ एतद्धस्मेति ॥ तत्मिथुनीभावस्ययत्नत्वं विद्वानुद्दालक
नाम्ना अरुणस्यापत्यमारुणिः एतद्वक्ष्यमाणमाह । हस्मवाइतिनिपातत्रयंप्रसिद्धिद्योतकं । एवमुत्तरत्र । नाकोनामतः मुद्गलस्या
पत्यंमौद्गल्यः कुमारोनामतः हरीतस्यापत्यंहारीतः उद्दालकादयःकिमाहुरित्यतआह ॥ बहवोमर्याइति ॥ येइदंमिथुनीभाव
स्ययत्नत्वमविद्वांसःअधोपहासंचरंति तेबहवोमर्याःमरणशीलाः ब्राह्मणायनाब्राह्मणाभासाः निरिंद्रियाविनष्टेंद्रियाः विसुकृतो
विसुकृतपुण्याःसंतोऽस्माल्लोकात्प्रयंतिनरकादिकंप्रतिगच्छंतीत्यर्थः । इतिशब्दस्येत्याहेतिप्रत्येकंसंबंधः । उक्तप्रकारेणोपहासच
रणंश्रेयस्साधनमित्युक्त्वा इदानीमुपहासंविनारेतःस्कंदनेप्रायश्चित्तमाह ॥ बह्विति ॥ सुप्तस्यवाजाग्रतोवापुरुषस्ययदीदंरेतो
बहु वाशब्दादल्पंच स्कंदतिनिःसरति ॥ ४ ॥ तदातत्स्कन्नंरेतोहस्तेनाऽभिमृशेत् अनुपश्चात् मंत्रयेतवा मंत्रयेच्च । तंमंत्रमा
ह ॥ यदिति ॥ मेममअद्याप्राप्तकाले यद्रेतः पृथिवींप्रति अस्कांत्सीत्स्कन्नमासीत् यदोषधीःप्रतिवाऽसरदगमत् यदपःप्रति
वाऽसरत् तदिदंरेतः अहमाददेगृह्णामीतिमंत्रेणानामिकांगुष्ठाभ्यामादायरेतोरूपेणवहिर्निर्गतमिंद्रियंपुनर्मांप्रत्येतु तेजःकांतिः
पुनरेतु भगऐश्वर्यंज्ञानंवा पुनरेतु धिष्ण्या(धिष्ण्यो)होमस्थानभूतोऽग्निःपुनर्मामेतु आगतानींद्रियादीनियथास्थानंकल्पंतांतिष्ठं

उप० । एतद्धस्मवैतद्विद्वानुद्दालकआरुणिराहैतद्धस्मवैतद्विद्वान्नाकोमौद्गल्यआहैतद्धस्मवैतद्विद्वान्कुमारहारीतआहबहवोमर्याब्राह्मणायना
निरिंद्रियाविसुकृतोस्माल्लोकात्प्रयंति यइदमविद्वाꣳसोधोऽपहासंचरंतीतिबहुवाइदंसुप्तस्यवाजाग्रतोवारेतःस्कंदति ॥ ४ ॥ तदभिमृशेदनुवामं
त्रयेत यन्मेद्यरेतःपृथिवीमस्कांत्सीद्यदोषधीरप्यसरद्यदपइदमहंतद्रेतआददे पुनर्मामैत्विंद्रियंपुनस्तेजःपुनर्भगःपुनरग्निर्धिष्ण्यायथास्थानंकल्पंतां

तुइतिमंत्रेणस्तनौभ्रुवौवांऽतरेणस्तनयोर्भ्रुवोर्वामध्येनिमृज्यात्लेपयेत् ॥ ५ ॥ प्रायश्चित्तप्रसंगादन्यस्यापितदाह ॥ अथेति ॥ यद्वायस्मिन्नुदकेरेतस्सेकस्तस्मिन्नेवोदकेस्वात्मदर्शनेप्रायश्चित्तमाह ॥ अथेति ॥ यद्युदकेसाधारणेरेतःसिक्तेवा आत्मानंपरिपश्येत्तदातदुदकंमंत्रयीत । तंमंत्रमाह ॥ मयीति ॥ उदकेस्वात्मपरिदर्शनेनगतंतेजः इंद्रियंयशोद्रविणंदैवंमानुषंच सुकृतंपुण्यंच मय्यस्त्वित्यर्थः । यस्यांपुत्रोजनयितव्यस्तांस्त्रियंस्तुवन्नुपहासेइत्थंभावमाह ॥ श्रीरिति ॥ यद्यस्मात्कारणात् स्त्रीणांमध्येमलोद्वासाउद्गतमलवद्वस्त्रा कृतरजस्वलास्नानेतियावत् । एषापत्नी श्रीर्यशस्विनी पुत्रोत्पत्तिहेतुत्वात् हवाइतिप्रसिद्धिद्योतकं तस्मान्मलोद्वाससंयशस्विनींकीर्तिमतींप्रत्यभिक्रम्यगत्वोपमंत्रयेतविशिष्टपुत्रोत्पादनंकर्तव्यमितिविचारंकुर्यात् ॥ ६ ॥ साचेदस्मैनदद्यात् मिथुनीभावानुकूलानस्यात् तर्हिएनांस्वभार्यां कामंयथाभिलषितभोगादिभिरवक्रीणीयात्वशंकुर्यात् । एवमपिसा चेदमस्मैनैवदद्यात्तदाकामंस्वेच्छानुसारेणैतांस्त्रियंयष्ट्यादंडेनवापाणिनाहस्तेनवोपहत्यताडयित्वाऽतिक्रमेत् । अतिक्रम्यगच्छेत् गमनकालेवक्तव्यमाह ॥ इंद्रियेणेति ॥ यशसायशोहेतुभूतेनेंद्रियेणगुह्येंद्रियेण तेतव यशोयशोहेतुभूतपुत्रोत्पत्तिकरंरेतः आददेगृह्णामीतिवदेत् । एवमुक्तासास्त्रीअयशाएवयशोहेतुभूतपुत्रशून्यैवभवति ॥ ७ ॥ साचेदस्मैतदाददद्यात् । तदायशसाइं

---

उप० । मिलनामिकांगुष्टाभ्यामादायांतरेणस्तनौवाभ्रुवौवानिमृज्यात् ॥ ५ ॥ अथयद्युदकआत्मानंपरिपश्येत्तदभिमंत्रयेतमयितेजइंद्रियंयशोद्रविणंसुकृतमिति श्रीर्हवाएषास्त्रीणांयन्मलोद्वासास्तस्मान्मलोद्वाससंयशस्विनीमभिक्रम्योपमंत्रयेत ॥ ६ ॥ साचेदस्मैनदद्यात्काममेनामवक्रीणीयात्साचेदस्मैनैवदद्यात्काममेनांयष्ट्यावापाणिनावोपहत्यातिक्रामेदिंद्रियेणतेयशसायशआददइत्ययशाएवभवति ॥ ७ ॥ साचेदस्मैदद्यादिं

द्रियेणतेयशआदधानिप्रापयामीतिवदेत् । तदातौस्त्रीपुरुषौयशस्विनावेवभवतः ॥ ८ ॥ अथयाभर्तुर्द्वेषिणीभवति तस्यास्त द्विषयेप्रीतिसंपत्त्युपायंवदन्उपहासेइत्थंभावांतरमाह ॥ सयामिति ॥ सपूर्वोक्तकामी इयं मामां कामयेतेतियांस्वभार्यामिच्छेत् तस्यांतदीययोनौ अर्थंगुह्येंद्रियं निष्ठायनिक्षिप्य स्त्रीमुखेनसहमुखंसंधायमेलयित्वा अस्याउपस्थमभिमृश्यमंत्रंजपेत् । तन्मंत्रमाह ॥ अंगादिति ॥ हेरेतस्तदंतर्गतभगवन् त्वं अंगादंगात्सर्वस्मादंगात्संभवसिसमुत्पद्यसे विशेषतश्चहृदयात्तत्स्थनाडीद्वारेणाधिजायसेप्रकटीभवसि सत्वमंग कषायोसिअंगानांरसोसि अतोदिग्धविद्धामिवौषधलिप्तांस्त्रीमिवेमाममूंमद्भार्यां मयिविषये मादय हर्षयुक्तांकुरु । मद्वशांकुर्वित्यर्थः ॥ ९ ॥ अथयांस्वभार्यांयौवनादिभ्रंशभयात्गर्भंनदधीत नधारयीतेतीच्छेत् तस्यामित्यादिपूर्ववत् । अभिप्राण्य श्वासंमुक्त्वा अपान्यात् तंगृह्णीयात् । एवंश्वासनिरोधंकृत्वाजप्यमंत्रमाह ॥ इंद्रियेणेति ॥ मदीयेनरेतसारेतःकारणीभूतेंद्रियेण गर्भोत्पत्तिकरंरेतआददेइतिजपेत् । एवंकर्तुःफलमाह ॥ अरेताएवेति ॥ पुत्रोत्पत्तिहेतुभूतरेतःशून्यैवभवतीत्यर्थः ॥ १० ॥ अथयांस्वभार्यांगर्भंदधीतेतीच्छेत् अपान्यश्वासमादाय अभिप्राण्यात्श्वासंमुंचेत् ततो

उप० । द्रियेणतेयशसायशआदधामीतियशस्विनावेवभवतः ॥ ८ ॥ सयामिच्छेत्कामयेतमेतितस्यामर्थंनिष्टायमुखेनमुखꣳसंधायोपस्थमस्याअभिमृश्यजपेत् अंगादंगात्संभवसिहृदयादधिजायसे सत्वमंगकषायोसिदिग्धविद्धामिवमादयेमाममूंमयीति ॥ ९ ॥ अथयामिच्छेन्नगर्भंदधीतेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायाभिप्राण्यापान्यादिंद्रियेणतेरेतसारेतआददइत्यरेताएवभवति ॥ १० ॥ अथयामिच्छेद्गर्भंधीतेतितस्यामर्थंनिष्ठायमुखेनमुखꣳसंधायापान्याभिप्राण्या

जप्यंमंत्रमाह ॥ इंद्रियेणेति ॥ मदीयेनरेतसेंद्रियेण तेत्वयिरेतआदधामीतिजपेत् सतिचैवंसागर्भिण्येवभवति ॥ ११ ॥ एवं
स्वभार्ययैवोपहासःकर्तव्यइत्युक्तं इदानींस्त्व्यंतरेणोपहासकरणेअभिचारमाह ॥ अथेति ॥ यस्यपुरुषस्यजायायैजायायाजारउ
पपतिःस्यात् तमुपपतिंचेद्द्विष्यात्निजपतिः सआमपात्रेअपक्वमृण्मयभाजने अग्निमुपसमाधाय प्रतिलोमंपश्चिमाग्रंदक्षिणाग्रं
वायथास्यात्तथाशरमयंबर्हिस्तीर्त्वाआस्तीर्य तस्मिन्नग्नौ एताःशरभृष्टीःबाणैषिकाः प्रतिलोमाःविपरीताग्राः सर्पिषाक्ताघृताक्ता
जुहुयात् । तन्मंत्रमाह ॥ ममेति ॥ मममदीये समिद्धेयौवनादिनासमिद्धेयोषाग्नौ अहौषीःरेतोहुतवानसि । अतस्तेतवप्राणा
पा नावाददइतिमंत्रमुच्चार्यप्रथमाहुतिंजुहुयात् । अनंतरमसावितिशत्रोर्नामगृह्णीयात् । एवमुत्तरत्रापि । पुत्रंपशूनित्युपलक्षणं इ
ष्टासुकृतेइष्टंयजनजनितंपुण्यंसुकृतंतदतिरिक्तकर्मजन्यं आशेच्छा पराकाशउत्तमतेजश्चेत्याशापराकाशौ एवंहुतेकिंस्यादित्यत
आह ॥ सवाइति ॥ एवंविद्वानभिचारकर्मविद्ब्राह्मणोयंजायोपपतिंशपति सएवजारोनिरिंद्रियोविसुकृतःगतसुकृतः । अ
स्माल्लोकात्प्रैतिमृतोभवतीत्यर्थः । तस्मादेवंवित्परदारगमनेउक्ताऽनिष्टवित् श्रोत्रियस्यदारेणदारैःसहनोपहासमिच्छेत् नकुर्या

.उप० । दिंद्रियेणतेरेतसारेतआदधामीतिगर्भिण्येवभवति ॥ ११ ॥ अथयस्यजायायैजारःस्यात्तंचेद्द्विष्यादामपात्रेग्निमुपसमाधायप्रति
लोमंशरबर्हिस्तीर्त्वातस्मिन्नेताःशर(बृ)भृष्टीःप्रतिलोमाःसर्पिषाक्ताजुहुयान्ममसमिद्धेऽहौषीःप्राणापानौतआददेऽसाविति ममसमिद्धेऽहौषीःपुत्रंपशूं
स्तआददेऽसाविति ममसमिद्धेऽहौषीरिष्टासुकृतेतआददेसाविति ममसमिद्धेऽहौषीराशापराकाशौतआददेसाविति सवाएषनिरिंद्रियोविसुकृतो
स्माल्लोकात्प्रैति यमेवंविद्वान्ब्राह्मणःशपति तस्मादेवंविच्छ्रोत्रियस्यदारेणनोपहासमिच्छे

दितिकिमुवक्तव्यं । किंततइत्यतआह ॥ उतेति ॥ हियस्मात्परदारहर्तुरेवंवित् अभिचारकर्मवेत्तापरःशत्रुर्भवति उततस्मान्ने च्छेदित्यर्थः ॥ १२ ॥ स्त्रीणांऋतुकालेऽनुष्ठेयंव्रतमाह ॥ अथेति ॥ यस्यपुरुषस्य जायांभार्यामार्तवंऋतुभावोविंदेत्प्राप्नुयात्तदा तस्यभार्यातदारभ्यत्र्यहंदिवसत्रयं कंसेकांस्यपात्रे नपिबेत्नाश्नीयात् अहतवासाअधौतवासाभवेत् । एनांऋतुमतींवृषलःशूद्रो नोपहन्यान्नस्पृशेत् वृषलीशूद्रीचनस्पृशेत् । त्रिरात्रांतेचतुर्थेऽहनिप्रातःकाले आप्लुत्यस्नात्वाव्रीहीनवघातयेत् ॥ १३ ॥ इदानीं पुत्रविशेषेच्छायांकर्तव्यविशेषमाह ॥ सइति ॥ सयःपुरुषो मेममपुत्रः शुक्लःशुद्धो गौरोगौरवर्णो जायेत वेद मेकंवेद मनु ब्रवीत सर्वमायुःशतवर्षपरिमितमायुरियात्प्राप्नुयादितीच्छेत् तदाक्षीरोदनंपाचयित्वातेनहोमंकृत्वासर्पिष्मंतंतच्छेपंतौदंपती अश्नीयातां । एवंसतिजनयितवै तादृशंपुत्रंजनयितु मीश्वरौसमर्थौभवतइत्यर्थः ॥ १४ ॥ एवमुत्तरत्र कपिलोलोहितःपिंगलः पिंगलाक्षः दध्योदनंपाचयित्वादध्नाचरुंश्रपयित्वा ॥ १५ ॥ उदौदनंउदकेनौदनंपाचयित्वेतिक्षीरादिव्यावृत्त्यर्थं ॥ १६ ॥ दुहि

---

उप० । दुतह्येवंवित्परोभवति ॥ १२ ॥ अथयस्यजाया(आर्त)मार्तवंविंदेत्र्यहंकंऽसेनपिबेदहतवासानैनांवृषलोनवृषल्युपहन्यात्रिरात्रांत आप्लुत्यव्रीहीनवघातयेत् ॥ १३ ॥ सयइच्छेत्पुत्रोमेशुक्लोगौरोजायेतवेदमनुब्रवीतसर्वमायुरियादिति क्षीरौदनंपाचयित्वासर्पिष्मंतमश्नीयातामी श्वरौजनयितवै ॥ १४ ॥ अथयइच्छेत्पुत्रोमेकपिलःपिंगलोजायेतद्वौवेदावनुब्रवीतसर्वमायुरियादिति दध्योदनंपाचयित्वासर्पिष्मंतमश्नीयातामी श्वरौजनयितवै ॥ १५ ॥ अथयइच्छेत्पुत्रोमेश्यामोलोहिताक्षोजायेतत्रीन्वेदाननुब्रवीतसर्वमायुरियादित्युदौदनंपाचयित्वासर्पिष्मंतमश्नीयातामी श्वरौजनयितवै ॥ १६ ॥

ताकन्यापंडिता स्वयोग्यतानुसारेणागमजज्ञानवती ॥ १७ ॥ विजिगीथोजयशीलः सामांतिंगमोविद्वत्सभाप्रवेष्टा शुश्रूषिता श्रोतुमीप्सितां । मांसमिश्रितौदनंमांसौदनं तन्मांसंकिमीयमित्यतआह ॥ औक्षेणेति ॥ उक्षागोवृषःतत्संबंध्यौक्षं वृषभोवली वर्दःतत्संबंधिवार्षभंतेनमांसेनयुक्तमोदनमित्यन्वयः ॥ १८ ॥ क्षीरौदनंपाचयित्वासर्पिष्मंतमश्नीयातामित्युक्तं तत्कदेत्यतोवक्ष्य माणहोमानंतरमेवेतिभावेन सत्पुत्रोत्पत्त्युपयुक्तंहोममाह ॥ अथेति ॥ अथत्रिरात्रांतेआप्लुतयास्त्रियाव्रीह्यवहननकरणानंतरं चतुर्थेह्नि प्रातरेव स्थालीपाकावृताज्यंस्थालीपाकंचावृताज्यंचहोमाज्यंचेतिस्थालीपाकावृताज्यंतत् । अभिवेष्टित्वासम्यक्कृत्वा स्थालीपाकस्याज्यसंस्कृतस्योपघातंभागंजुहोतिजुहुयात् तन्मंत्रमाह ॥ अग्नयेस्वाहेति ॥ अत्राग्न्यनुमतिसवितृशब्दास्तदंतर्गतविष्णुपराः तस्यैवसकलयज्ञभोक्तृत्वात् । देवायक्रीडादिगुणसंपन्नाय । सवितृशब्दार्थमाह ॥ सत्यप्रसवायेति ॥ सत्यभूत जगत्कारणायेत्यर्थः । सत्पुत्रप्रसवकारणायेतिवा । इत्यनेनमंत्रेणहुत्वा स्थालीपाकस्थंचरुशेषमुद्धृत्य प्राश्नातिभक्षयेत् । स्वयं प्राश्यइतरस्याःभार्यायाः तदेवप्रयच्छतिदद्यात् । ततःपाणीप्रक्षाल्योदपात्रंपूरयित्वातेनोदकेनैनांभार्यांत्रिरभ्युक्षतित्रिवारम

उप० । अथयइच्छेद्दुहितामेपंडिताजायेतसर्वमायुरियादिति तिलौदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवै ॥ १७ ॥ अथय इच्छेत्पुत्रोमेपंडितोविजिगीथःसमितिंगमःशुश्रूषितांवाचंभाषिताजायेतसर्वान्वेदाननुब्रुवीतसर्वमायुरियादितिमांसौदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवैऔक्षेणवार्षभेणवा ॥ १८ ॥ अथाभिप्रातरेवस्थालीपाकावृताज्यंवेष्टित्वास्थालीपाकस्योपघातंजुहोत्यग्नयेस्वाहानुमतयेस्वाहादेवायसवित्रेसत्यप्रसवायस्वाहेतिहुत्वोद्धृत्यप्राश्नातिप्राश्येतरस्याःप्रयच्छतिप्रक्षाल्यपाणीउदपात्रंपूरयित्वातेनैनांत्रिरभ्युक्ष-

भ्युक्षणंकुर्यात् तन्मंत्रमाह ॥ उत्तिष्ठेति ॥ हेविश्वावसोगंधर्व अतोमद्भार्यातः उत्तिष्ठ त्वमन्यांप्रभव्र्यांपीवरींतरुणीमितिया वत् इच्छ इमांजायांतु पत्यामयासह संसृजसंयोजयेत्यर्थः ॥ १९ ॥ अथैवंगंधर्वोच्चाटनानंतरं यथाकामंक्षीरोदनादिभोजनानंतरं एनांस्वभार्यामभिपद्यतेप्राप्नुयात् । तदावक्तव्यमाह ॥ अमोहमिति ॥ अहंमदंतर्यामिश्रीमन्नारायणः अमोनिर्दोषत्वात्अमइतिनामकोस्मि त्वंत्वदंतर्गताश्रीर्लक्ष्मीः सारत्वात्सेतिनामिका सात्वमसिअमोहमित्यभ्यासस्तात्पर्यार्थः । एवमुभयोर्मिलितत्वात्सामशब्दवाच्यत्वमुक्तं इदानींऋक्सामशब्दवाच्यत्वमाह ॥ सामेति ॥ अहंमदंतर्यामीनारायणःसामास्मिसामवेदप्रतिपाद्यत्वात्सामनामकइत्यर्थः । त्वंत्वदंतर्गताश्रीर्लक्ष्मीःऋक्ऋग्वेदाभिमानिनीत्यर्थः । अहंमदंतर्यामिनारायणोद्योतनात्द्युशब्दवाच्यः त्वंत्वदंतर्गतालक्ष्मीःप्रथितत्वात्पृथिवीनामिकेत्यर्थः । हेभार्येत्वमेहिआगच्छ । तौलक्ष्मीनारायणाधिष्ठितावावांसंरभावहैसंरंभंकुर्वः । कोसौसंरंभः सहमिलित्वारेतोदधावहैरेतोमिलितंकुर्वइतियावत् । किमर्थमयमारंभइत्यतउक्तं ॥ पुंसइति ॥ चतुर्थीषष्ठ्यर्थे पुंस्त्वविशिष्टस्य पुत्रस्यपूतःछिद्रकर्मणस्त्राणनसमर्थस्य वित्तयेलाभायेत्यर्थः ॥ २० ॥ अथैवंवचनानंतरं अस्यास्त्रियः ऊरूविहापयतिविश्लेषयेत् । तन्मंत्रमाह ॥ विजिहाथामिति ॥ हेद्यावापृथिवीतत्स्थानीयेऊरू विजिहाथांविश्लिष्टेभ

---

उप० । त्युत्तिष्ठातोविश्वावसोन्यामिच्छप्रभव्र्यांसंजायांपत्यासृजेति ॥ १९ ॥ अथैनामभिपद्यतेऽमोहमस्मिसात्वंसात्वमस्यमोहंसामाहमस्मिऋक्त्वंद्यौरहंपृथिवीत्वंतावेहिसंरभावहैसहरेतोदधावहैपुंसेपुत्रायवित्तयइति ॥ २० ॥ अथास्याऊरूविहापयतिविजिहाथांद्यावापृथिवी

वेतामितिमंत्रेणविहापयतीतिसंबंधः । अनंतरंतस्यामर्थंनिष्ठायमुखेनमुखंसंधाय एनाभार्यामनुलोमांमूर्धानमारभ्यपादांतमिति यावत् । त्रिस्त्रिवारमनुमार्ष्टिमार्जनंकुर्यात् । तन्मंत्रमाह ॥ विष्णुरिति ॥ व्याप्तोविष्णुनामकोवासुदेवो योनिंकल्पयतुपुत्रोत्पत्तिसमर्थांकरोतु योनिशुद्धिंकरोतुवा । त्वष्टात्वेपातूत्वष्टृनामकःसंकर्षणो रूपाणिगर्भस्थपुत्रस्थांगानिपिंशतुकरोतु । प्रजापातनात्प्रजापतिनामकःप्रद्युम्नः आसिंचतुआसेकंकरोतुगर्भात्प्रजापातनंकरोतु धारणकर्तृत्वाद्धाताभगवाननिरुद्धस्तेगर्भंदधातु धारयत्वित्यर्थः । यथोक्तं योनिक्लृप्तिर्वासुदेवाद्रूपंसंकर्षणाद्भवेत् । आसेककर्मप्रद्युम्नात्अनिरुद्धाच्चधारणमिति । व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टात्वेषात्द्वितीयकः । प्रजापतिःप्रजापातान्निषेकःपातनंततः । प्रजापतिस्तुप्रद्युम्नोधाताधारणकर्मतः । अनिरुद्धइतिप्रोक्तइतिच । हेसिनीवालिचतुर्दशीमिश्रितामावास्यादेवतेतदंतर्गतभगवन् गर्भंधेहिधारय । हेपृथुष्टुकेगर्भंधेहि । अत्रपृथुष्टुकाशब्देनपृथुविस्तीर्णास्तुतिर्यस्याःसापृथुष्टुकेतिसरस्वत्युच्यते । गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वतीतिशाखांतरपाठात् । पुष्करस्रजौपद्ममालावंतौ देवौक्रीडादिगुणसंपन्नावश्विनावाशुगतीकृष्णरामौ तेगर्भमाधत्तां । कृष्णरामौतथाश्विनावितिवचनात् ॥ २१ ॥ आवांहिरण्मयीअरणी याभ्यामरणीस्थानीयाभ्यामावाभ्यामश्विनौकृष्णरामौनिर्मंथतांमथनंकृतवंतौ तंमथनोत्पन्नं

---

उप० । इतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायत्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु। आसिंचतुप्रजापतिर्धातागर्भंदधातुते । गर्भंधेहिसिनीवालिगर्भंधेहिपृथुष्टुके । गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ २१ ॥ हिरण्मयीअरणीयाभ्यांनिर्मंथतामश्विनौ । तंतेगर्भंहवामहे

गर्भंतेत्वयिहवामहे । दशमेमासिसूतवेप्रसवार्थमित्यर्थः । प्रकृतंगर्भंस्तौति ॥ यथेति ॥ यथापृथिवीअग्निगर्भा यथाद्यौर्द्युलोक इंद्रेणतत्पालकेनगर्भिणी यथावायुर्दिशांगर्भः एवंतादृशगर्भंतेत्वयिदधामि । असावितिस्वात्मनोगर्भेजायमानस्यवानामगृह्णा ति ॥ २२ ॥ प्रसवावसरेकर्तव्यमाह ॥ सोष्यंतीमिति ॥ सोष्यंतींप्रसविष्यंतींभार्यामद्भिरभ्युक्षति तन्मंत्रमाह ॥ यथेति ॥ यथावायुःपुष्करणींसर्वतःसमिंजयति स्वरूपोपघातमकृत्वाचालयति । एवाएवमेव तेगर्भःसूचिकावायुनाप्रेरितएजतुस्थानाच्च लतु । तदनंतरंजरायुणोल्बेनसहावैतुनिर्गच्छतु उत्तरत्रेंद्रंप्रार्थयितुंतत्रादौहेतुमाह ॥ इंद्रस्येति ॥ इंद्रस्येंद्रेणपरमैश्वर्यसंपन्नेन भगवता । सार्गलःअर्गलयावायुनिरोधेनसहितः । सपरिश्रयःपरिश्रयेणपरिवेष्टनेनजरायुणासहितः । अयंगर्भः । व्रजःआश्र यः । कृतः । गर्भमाश्रित्यतद्रक्षकतयाभगवान्वर्ततइतियावत् । किंततइत्यतआह ॥ तमिति ॥ हेइंद्रपरमैश्वर्यसंपन्न सा वरमावरणसहितं तंगर्भं नि(र्ग)र्जहिनिर्गमय निर्गम्यमानेनगर्भेणसहतन्नियामकतयात्वमपिनि(र्ग)र्जहि निर्गच्छेतिमंत्रेणाभ्युक्ष तीतिसंबंधः ॥ २३ ॥ प्रसवानंतरंकर्तव्यमाह ॥ जातइति ॥ पुत्रेजातेसति तमंकेआधायाग्निमुपसमाधाय कंसेकांस्यपात्रे पृ षदाज्यंसंस्कृताज्यं संन्नीयसंपाद्य पृषदाज्यस्योपघातंभागंजुहोति।होममंत्रमाह॥ अस्मिन्निति॥ हिअद्यंतर्गतभगवन्नहमस्मिन्

---

उप० । दशमेमासिसूतवे । यथाग्निगर्भापृथिवीयथाद्यौरिंद्रेणगर्भिणी । वायुर्दिशांयथागर्भएवंगर्भंदधामितेसाविति ॥ २२ ॥ सोष्यंतीमद्भिरभ्युक्षति यथावायुःपुष्करणींसमिंजयतिसर्वतः । एवंतेगर्भएजतुसहावैतुजरायुणा । इंद्रस्यायंव्रजःकृतःसार्गलःसपरिश्रयस्तमिंद्रनि(र्ग)र्जहि गर्भेणसावरंसहेति ॥ २३ ॥ जातेग्निमुपसमाधायांकआधायकंसेपृषदाज्यंसन्नीयपृषदाज्यस्योपघातंजुहोति अस्मिन्सहस्रं

स्वेगृहेसहस्रंपुष्यासं । एधमानोवर्धमानश्चभूयासमित्यर्थः । अस्मिन्पुत्रेनिमित्तेसतीतिवा । अस्यपुत्रस्योपसद्यांसंततिं प्रजया पशुभिश्चसहमाच्छैत्सीःविच्छिन्नांमाकुरु । मयिस्थितान्प्राणान्मनसासहत्वयिजुहोमित्वद्विषयान्करोमि । इहकर्तव्यकर्मविषये कर्मणा यदत्यरीरिचमधिकमभवमधिकंकर्मकृतवानस्मीतियावत् यद्वान्यूनमकरमकरवं तत्सर्वंस्विष्टकृत्स्वभक्तिज्ञानादिपूर्वक मिष्टंन्यूनाधिकमपिसम्यक्करोतीतिस्विष्टकृन्नामा विद्वान्सर्वज्ञोऽग्निस्तदंतर्गतोभगवान् स्विष्टंसुहुतंकरोत्वित्यर्थः ॥ २४ ॥ एत द्धोमानंतरंकर्तव्यमाह ॥ अथेति ॥ अथस्विष्टकृद्धोमानंतरमस्यशिशोर्दक्षिणकर्णमभिनिधायपितास्वाभिमुखंनिधाय त्रयील क्षणावाक्त्वयिप्रविशत्वित्यभिप्रायवान्वाग्वागितित्रिर्जपेदितिशेषः । अथत्रिर्जपानंतरं दधिमधुघृतंसन्नीयानंतर्हितेनवस्त्राद्य नावृतेनजातरूपेणसुवर्णेन प्राशयति । अन्नप्राशनमंत्रंपठति ॥ भूरिति ॥ हेभूःतेत्वयिदधामिइत्यर्थः ॥ २५ ॥ अथपूर्वोदाहृ तैश्चतुर्मंत्रैःप्रत्येकमन्नप्राशनानंतरमस्यशिशोर्नामकरोति किमिति वेदोसिवेदइतिनामकोसीति तदेतद्वेदइतिनामास्याशिशोर्गुह्यं गोप्यमेवभवति । नतुप्रकटनीयं व्यवहारार्थंप्रसिद्धनामतुस्वाभिप्रेतदेववाचकंकर्तव्यमितिभावः ॥ २६ ॥ अथनामकरणानंतर

उप० । पुष्यासमेधमानःस्वेगृहे । अस्योपसद्यांमाच्छैत्सीःप्रजयाचपशुभिश्चस्वाहा मयिप्राणाँस्त्वयिमनसाजुहोमिस्वाहा यत्कर्मणात्य रीरिचंयद्वान्यूनमिहाकरं अग्निष्टःस्विष्टकृद्विद्वान्स्विष्टँसुहुतंकरोतुनःस्वाहेति ॥ २४ ॥ अथास्यदक्षिणंकर्णमभिनिधायवाग्वागितित्रिरथदधि मधुघृतंसंनीयानंतर्हितेनजातरूपेणप्राशयति भूस्तेदधामिभुवस्तेदधामिस्वस्तेदधामिभूर्भुवःस्वःसर्वंत्वयिदधामीति ॥ २५ ॥ अथास्यनामकरो तिवेदोसीतितदस्यतद्गुह्यमेवनामभवति ॥ २६ ॥

मेनंशिशुंतन्मात्रेप्रदायस्तनंप्रयच्छतिदापयेत् । तन्मंत्रमाह ॥ यस्तइति ॥ हेसरस्वति तेतव यस्तनः शशयःशंसुखंतस्यशयः आशयः शेसुखेशेतइतिवाशशयः योमयोभूःअवग्रहदर्शनाच्छिन्नंपदं मयःसर्वप्रधानो भूःपूर्णः योरत्नान्याभरणरूपाणिधत्तइतिरत्नधा वसुआभरणरूपमेवविंदतिप्राप्नोतीतिवसुवित् । यःसुदत्रःसम्यक्दातारक्षकश्च येनत्वदीयेनस्तनेन त्वंविश्वाविश्वानि वार्याणिवरणीयानिदेवादीनि पुष्यसि तंस्तनंइहलोके धातवेशिशोःपानार्थं अकःअकार्षीरित्यर्थः । अनेनस्त्रीस्तनेसरस्वतीस्तनसन्निधानमस्तीतिगम्यते ॥ २७ ॥ अथस्तनप्रदानानंतरमस्यशिशोर्मातरमभिमंत्रयते तन्मंत्रमाह ॥ इलासीति ॥ हेभार्ये त्वमिलासिस्तुत्यासि मैत्रावरुणीमित्रावरुणनामकभगवद्रूपाधिष्ठानभूतासि हेवीरेआरब्धांतगामिनीयाभवती वीरंपुत्रमजीजनत् सात्वंपुनर्वीरवतीपुत्रवतीभव । एवमाशीर्वादकरणनिमित्तमाह ॥ यास्मानिति ॥ याऽस्मान्वीरवतःपुत्रवतोकरत् अकरोदिति । एवमुक्तप्रकारेणशिशोःसंस्कारकरणेकिंस्यादित्यतआह ॥ तंवाए(त)नमिति ॥ एवंविदःपूर्वोक्तप्रकारेणभगवज्ज्ञानवतोब्राह्मणस्ययःपुत्रोजायते तंवाएनंजनाः हेपुत्रत्वमतिपितापितरमतिक्रांतोभूः बतेत्याश्चर्ये । नकेवलमेतावत् अतिपितामहः

---

उप० । अथैनंमात्रेप्रादायस्तनंप्रयच्छति यस्तेस्तनःशशयोयोमयोभूर्योरत्नधावसुविद्यःसुदत्रः । येनविश्वापुष्यासि(भार्या)वार्याणिसरस्वतितमिहधातवेकरिति ॥ २७ ॥ अथास्यमातरमभिमंत्रयतइलासिमैत्रावरुणीवीरेवीरमजीजनत् । सात्वंवीरवतीभवयास्मान्वीरवतोकरदिति तंवाएतमाहुरतिपितावताभूरति

पितामहमतिक्रांतोऽभूः कुतः अयंश्रियायशसाब्रह्मवर्चसेन परमांकाष्ठामवधिंप्रापवद्वैश्वर्यादिसंपन्नइत्याहुरितिसंबंधः ॥ इतिच तुर्थब्राह्मणं ॥ ४ ॥ अध्यायद्वयोक्तविद्याप्रवर्तकऋषिपरंपरामाह ॥ अथवंशइति ॥ आदित्यानिआदित्येनप्रोक्तानिइमानि शुक्लानिशुद्धानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायंतेप्रकटीक्रियंतइत्यर्थः । प्रजापतिर्ब्रह्मा ब्रह्मणःपरब्रह्मणःश्रुतवानित्यर्थः ।

उप० । पितामहोवताभूःपरमांवतकाष्ठांप्रापच्छ्रियायशसाब्रह्मवर्चसेनयएवंविदोब्राह्मणस्यपुत्रोजायतइति॥२८॥इतिचतुर्थब्राह्मणं८॥४ अथवंशःपौतिमाषीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रोगौतमीपुत्रात्गौतमीपुत्रोभारद्वाजीपुत्रात्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रऔ पस्वस्तीपुत्रात्औपस्वस्तीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रःकौशिकीपुत्रात्कौशिकीपुत्रआलंबीपुत्राच्चवैयाघ्रपदीपुत्राच्चवैयाघ्रपदीपुत्रःकाण्वीपुत्रा च्चकापीपुत्राच्चकापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवात्सी पुत्राद्वात्सीपुत्रःवार्कारुणीपुत्राद्वार्कारुणीपुत्रआर्तभागीपुत्रादार्तभागीपुत्रःशौंगीपुत्राच्छौंगीपुत्रःसांकृतीपुत्रात्सांकृतीपुत्रआलंबायनीपुत्रादालंबाय नीपुत्रआलंबिनीपुत्रादालंबिनीपुत्रोजायंतीपुत्राज्जायंतीपुत्रोमांडूकायनीपुत्रान्मांडूकायनीपुत्रोमांडूकीपुत्रान्मांडूकीपुत्रः शांडिलीपुत्राच्छांडिली पुत्रोराथीतरीपुत्राद्राथीतरीपुत्रोभालुकीपुत्राद्भालुकीपुत्रःक्रौंचिकीपुत्राभ्यांक्रौंचिकीपुत्रौवैधृतीपुत्राद्वैधृतीपुत्रः कार्षकेयीपुत्रात्कार्षकेयीपुत्रःप्राची नयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रःप्राश्नीपुत्रादासुरीवासिनःप्राश्नीपुत्राआसुरायणादासुरायणआसुरेरासुरिः ॥ २ ॥ याज्ञ वल्क्याद्याज्ञवल्क्यउद्दालकादुद्दालकोऽरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजश्रवसोवाजश्रवाजिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोसिताद्वार्ष गणादसितोवार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशिल्पात्कश्यपात्शिल्पःकश्यपःकश्यपात्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागंभिण्याअंभिण्यादि

परब्रह्मकस्माच्छ्रुतमित्यतआह ॥ **ब्रह्मस्वयंभ्विति** ॥ यद्वाप्रजापतिःरुद्रोब्रह्मणः कोवाब्रह्मवाच्यइत्यतआह ॥ **ब्रह्मस्वयंभ्विति** ॥ स्वस्मादेवस्वयंभवतीतिस्वयंभुअवतारत्रयविशिष्टोमुख्योवायुर्ब्रह्मेत्यर्थः । यद्वक्ष्यति स्वयंभुब्रह्मसंज्ञोसाविति । वेदपुरुषोपिअंते(षोंतेपि)मंगलमाचरति ॥ **ब्रह्मणेनमइति** ॥ परस्मैब्रह्मणेनमइत्यर्थः ॥ एवंसमापितभाष्योभगवानाचार्योयद्गुणविशिष्टतयाभगवंतंएतदुपनिषदर्थत्वेनप्रतिपादितवांस्तद्गुणविशिष्टभगवदुपासनमेवांतेप्याशास्ते ॥ **नित्यानंदमिति** ॥ पूर्णानंदमित्यर्थः । अपूर्णत्वस्यापिविनाशशब्दार्थत्वात् उपमैवऔपमंस्वार्थिकोण् नास्त्यौपमंयस्यासौअनौपमःतं यद्वाउपमायाअयमौपमःसोपमइतियावत् । नविद्यतेऔपमोयस्यासावनौपमस्तमिति । परंसर्वोत्तमंविलक्षणमितिवा केनापिप्रकारेणनजायतइत्यजं सर्वत्रगंप्राणादिषुवर्तमानं सुस्थिरंसुनित्यं सर्वंजानातीतिसर्वज्ञइतिज्ञानवत्त्वोक्त्याज्ञानतद्वतोर्भेदशंकांवारयति प्रतिबोधमात्रमिति । अमलंनिर्दोषं अच्युतैर्देशतःकालतोगुणतश्चच्युतिशून्यैः प्रमतिर्मोक्षसाधनीभूतज्ञानं यथार्थज्ञानंवा सतांमोक्षःसन्मोक्षः

---

उप० । त्यादादित्यानीमानिशुक्लानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायंते ॥ ३ ॥ समानःसांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यःकौत्सात्कौत्सोमाहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणःशांडिल्याच्छांडिल्योवात्स्याद्वात्स्यःकुश्रेःकुश्रिर्यज्ञवर्चसोराजस्तंबायनाद्यज्ञवर्चाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजापतिःब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥४॥ **इतिपंचमंब्राह्मणं** ॥५॥

**इतिबृहदारण्यकोपनिषदिअष्टमोध्यायः ॥ ८ ॥**

भा० । नित्यानंदमनौपमंपरमजंसर्वत्रगंसुस्थिरंसर्वज्ञंप्रतिबोधमात्रममलंपूर्णगुणैरच्युतैः ॥ विश्वोत्पत्तिलयस्थितिप्रमतिसन्मोक्षे

द्वंद्वैकवद्भावोयं कारणत्वंचनब्रह्मादीनामिवेत्याह ॥ परमिति ॥ मेसततंप्रेष्ठं नित्यंप्रियात्प्रियतममित्यन्वयः विष्णुमितिविशे ष्याध्याहारः ॥ १ ॥ स्वभाषितभाष्यस्याप्तिमूलत्वसमर्थनायश्रुतिप्रसिद्धंस्वस्यपरमाप्तत्वंदर्शयन्नाह ॥ यस्येति ॥ यस्यवायोर्दे वस्य बलित्थेत्यादिवेदवचने दिव्यानिक्रीडादिगुणयुक्तानि त्रीणिरूपाण्युदितानि तस्ययत्तृतीयकंवपुः तेनेदंभाष्यंप्रभौप्रभुवि ष्यतयाकृतंहीत्यन्वयः । कीदृशंचास्यमूलरूपंकानिचत्रीणिरूपाणिकीदृशानिचतत्राह ॥ अलमिति ॥ तस्यवायोर्मूलरूपंवद्व लात्मकं दर्शतंज्ञानंरूपंच दृशेरौणादिकोतच्प्रत्ययः । अनेनवायुशब्दोव्याख्यातः । वशब्दोबलवाची अयतिर्गत्यर्थः गत्यर्था श्चावगत्यर्थाः ततउण् वश्चासावायुश्चेतिवायुरिति । किंचभर्गःभरणगमनकर्तृ डुभृञ्भरणे गम्लृगतौ आभ्यामसुन्प्रत्ययोडिच्च इदमपिवायुशब्दव्याख्यानं । वातेर्भरणार्थादयतेश्चउण् । अनेकार्थत्वाद्धातूनांवातिर्भरणेपिवर्तते अपिचमहत्श्रेष्ठं वयश्रेष्ठइ त्यस्मादुण् तदित्थमेवरूपत्रयावताराय भगवतानिहितंप्रेरितमवतीर्णंच तत्रप्रथमकंहनुमदाख्यंवपुः रामवचोनयंरामस्यवचांसि सीतांप्रतिनीतवत् रामविषयवचांसिमूलरामायणरूपाणिशिष्येषुनीतवद्वा रामवचसियोनयोन्यायआज्ञारूपस्तद्युक्तंवा द्वितीयं भीमनामकंपृक्षः कुरुपृतनाक्षयकारि तृतीयंवपुरानंदरूपस्यहरेःप्रतिपादकशास्त्रनिर्मातृमध्वाभिधमिति । अतःपरमाप्तप्रणीतत्वा दिदंभाष्यंसकलसुजनैरादरेणांगीकार्यमितिभावः । ननुवलित्थेत्यादिवेदवचनेवायोस्त्रीणिरूपाण्युदितानीत्यसत् तस्यसूक्तस्यत्रे

भा० । परंकारणंप्रेष्ठंमेसततंप्रियात्प्रियतमंनित्यंसदोपास्महे ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंवद्बतदर्शतमित्थमेवनिहितं देवस्यभर्गोमहत् । वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहितेनप्रभौ ॥

ताग्निपरत्वादित्यतः तत्सूक्तंवायुरूपत्रयपरतयाप्रमाणेनव्याकुर्वन्यदीमुपह्वरतेसाधतेमतिरित्युक्तंमतिशब्दंतावद्व्याचष्टे ॥ **हनु**
**शब्दइति** ॥ हनहिंसागत्योरितिधातोर्गत्यर्थस्यचावगत्यर्थत्वेनहनुशब्दस्यज्ञानवाचित्वेनमतिशब्दसमानार्थत्वाद्धनुमान्मतिशब्दे
नोच्यतइत्यर्थः । हनुशब्दस्यज्ञानवाचित्वेहनुमान्मतिमच्छब्दवाच्यःस्यादितिचेत् न । ज्ञानवतोपिज्ञानस्वरूपताप्रकटनायम
तिशब्दप्रयोगात् । ऋतस्यधेनाअनयंतसस्रुतइत्येतद्व्याचष्टे ॥ **रामस्येति** ॥ ऋतस्येत्यस्यार्थःस्वृस्तरूपस्येति । सुष्ठुसर्वदासर्वत्र
चसत्यरूपस्यचेत्यर्थः । यद्वापूर्वावगतवत्सदास्थितस्येत्यर्थः । यथोक्तं । ऋगताविितिधातोस्तुपूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्त
मित्युक्तमिति । धेनाइत्यस्यार्थोवाचइति । अनयंतसीतांप्रतीतिशेषः । रामस्यवाचोरामप्रतिपादकमूलरामायणरूपास्तेनहनुम
ताशिष्यान्प्रत्यनयंतेतिवा । एवंयदीमुपह्वरतइत्यर्धर्चस्यहनुमदाख्यप्रथमावतारप्रतिपादकत्वमुक्त्वा इदानींपृक्षोवपुरित्यस्यभी
माख्यद्वितीयावतारप्रतिपादकत्वसिध्यर्थंआशयेसप्तशिवासुमातृपुइत्येतद्भीमशब्दार्थप्रतिपादकमितिभावेनतावद्भीमशब्दार्थमा
ह ॥ **भृतमइति** ॥ भृताःपूर्णाःमाःप्रमाःप्रमाणानियस्मिन्नसौतथोक्तः । अस्त्वेवंभीमशब्दार्थःकिंततइत्यतोमातृष्वित्युक्तमातृ
शब्दार्थंतावदाह ॥ **वाचइति** ॥ माःप्रमाणभूतावाचोमापकत्वान्मातरःस्मृताइत्यर्थः । सप्तशिवास्वित्युक्तसप्तशिवशब्दार्थमा
ह ॥ **ऋगाद्याइति** ॥ ऋगाद्याश्चत्वारः अस्त्वेवंमातृसप्तशिवाशब्दार्थः तथापिकिमित्यतआह ॥ **तत्रेति** ॥ यतोभृतमोभीम

भा० । हनुशब्दोज्ञानवाचीहनुमान्मतिशब्दितः । रामस्यस्वृतरूपस्यवाचस्तेनानयंतिहि । भृतमोभीमइत्युक्तोवाचोमामातरःस्मृताः ।
ऋगाद्याइतिहासश्चपुराणंपंचरात्रकं । प्रोक्ताःसप्तशिवास्तत्रशयोभीमस्ततःस्मृतः ।

इत्युक्तस्ततोभीमशब्दसमानार्थत्वात्तत्रोक्तासुसप्तशिवासुमातृषुशयोनिष्णातोभीमःस्मृतइत्यर्थः । तृतीयमस्येत्यादेरानंदतीर्थाख्यतृतीयावतारप्रतिपादकत्वसिध्यर्थंप्रदिवोमध्वआधवइत्युक्तमध्वशब्दस्यानंदतीर्थशब्दसमानार्थत्वमाह॥मध्वित्यानंदइति॥ मधुद्यौरस्तुनःपितेतिप्रयोगात् । वातेरवगत्यर्थात्करणेघञर्थेकविधानमितिकः मधुआनंदकरंवंतीर्थंशास्त्रंयस्येतिमध्वइत्यर्थः । स्वरित्यत्रेवोकारलोपः । आनंदकरंतीर्थंयस्यासावानंदतीर्थः तृतीयमस्येत्यत्रवपुरित्येतदनुवर्ततइतिभावेनोक्तं ॥ तृतीयामारुतीतनुरिति ॥ तृतीयामारुतीतनुः मध्वःआनंदतीर्थःस्यादितिसंबंधः । तात्पर्यद्योतनायैतज्ज्ञानफलमाह ॥ इतीति ॥ यदीमुपह्वरतेसाधतेमतिरित्यस्याऽर्थमाह ॥ साधकइति ॥ साधतइत्यस्यार्थोयं उपह्वरतइत्यस्यार्थस्तत्समीपगतइति । मतिशब्दार्थोहनुमानिति । पृक्षोवपुःपितुमानित्येतदपिभीमज्ञापकमितिभावेनव्याचष्टे ॥ भीमस्त्विति ॥ भीमस्तुद्वितीयोज्ञेयः पितोरन्नस्यबहुभुगित्यनेनपितुमानित्यस्यार्थःउक्तः पृतनाक्षयकारीत्यनेनपृक्षइत्यस्य वकासुरवधादौभीमेबह्वन्नभोक्तृत्वंकुरुपृतनाक्षयकारित्वंचप्रसिद्धमितिभावः । तृतीयमस्यवृषभस्यदोहसेइत्येतद्व्याचष्टे ॥ तृतीयकइति ॥ आनंदतीर्थनामातृतीयकस्तुपूर्णप्रज्ञःप्रकीर्तितइतिसंबंधः । पूर्णप्रज्ञइत्यनेनदशप्रमतिशब्दोव्याख्यातः । तदुपपादयति ॥ दशेतीति ॥ इहदशेतिशब्देनसर्वमु

---

भा० । मध्वित्यानंदउद्दिष्टोवेतितीर्थमुदाहृतं । मध्वआनंदतीर्थःस्यात्तृतीयामारुतीतनुः । इतिसूक्तगतंरूपत्रयमेतन्महात्मनः । योवेदवेदवित्सस्यात्तत्वविचत्प्रसादतः । साधकोरामकार्याणांतत्समीपगतःसदा । हनुमान्प्रथमोज्ञेयोभीमस्तुबहुभुक्पितोः । पृतनाक्षयकारीचद्वितीयस्तुतृतीयकः । पूर्णप्रज्ञस्तथानंदतीर्थनामाप्रकीर्तितः । दशेतिसर्वमुद्दिष्टं

दिष्टं दशेतिवैसर्वमितिश्रुतेः । सर्वमितिशब्देनचपूर्णमुच्यते दशसर्वपूर्णशब्दाःपर्यायाइतियावत् । ततोदशशब्दस्यपूर्णवाचित्वात्प्रमतिशब्दस्यप्रज्ञावाचित्वात् दशप्रमतिशब्देनपूर्णप्रज्ञएवोच्यतइत्यर्थः । यदीमनुप्रदिवोमध्वआधवेगुहासंतंमातरिश्वामथायतिइतिवाक्यंव्याचष्टे ॥ आसमंतादिति ॥ आधवइत्यस्यार्थोयं धवइत्यस्यभावप्रधानत्वमभ्युपेत्यपतित्वइत्युक्तं । गुहासंतमित्यस्यार्थोगूढंहरिमिति तत्रनिमित्तमाह ॥ कलियुगइति ॥ नकेवलंकालबलाद्गूढःकिंत्वित्यतआह ॥ असत्यमिति ॥ 
अनीश्वरंजीवातिरिक्तेश्वररहितं जीवेश्वरैक्यमितियावत् । ननुजगतःसत्यत्वेतदंतर्गतसर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपिसत्यत्वात्कथंजीवेश्वरैक्यमित्यतआह ॥ असत्यमिति ॥ नन्वसत्यत्वंनामनशशविषाणादीनामिवात्यंतासत्वं अपरोक्षप्रतीतिविषयत्वादित्यतस्तदेवव्याचष्टे ॥ अप्रतिष्ठमिति ॥ ज्ञानबाध्यमित्यर्थः । मातरिश्वेत्युक्तयामूलवायुपरत्वप्रतीतिनिरासायतृतीयोसुरित्युक्तं । तृतीयोसुःकलियुगेकालबलाद्गूढंतदेतज्जगदनीश्वरंवदद्भिश्चगूहितंहरिमासमंतात्सर्वप्रकारेणपतित्वेसर्वस्वामित्वेविषयेमथायतिब्रह्मसूत्रोपनिषदादिव्याख्यानेनहरेःपुरुषोत्तमत्वमाविष्करोतीत्यर्थः । निर्यदींबुध्नान्महिषस्यवर्पसईशानासःशवसाऽक्रंतसूरयइत्येतद्व्याचष्टे ॥ येनेति ॥ यदित्यस्यार्थोयेनेति तृतीयावतारेणेत्यर्थः । महिषस्येत्यस्यार्थोविष्णोरिति वर्पसइत्यस्यार्थोवर्पाख्यान्गुणानिति निराक्रंतेत्यस्यार्थोऽज्ञासिषुरिति ज्ञातवंतइत्यर्थः । ईशानासइतिबहुवचनमाद्यर्थे ईशानाद्यादेवाअ

---

भा० । सर्वपूर्णमिहोच्यते । प्रज्ञाप्रमतिरुद्दिष्टापूर्णप्रज्ञस्ततःस्मृतः । आसमंतात्पतित्वेतुगूढंकलियुगेहरिं । असत्यमप्रतिष्ठंतुजगदेतदनीश्वरं । वदद्भिर्गूहितंसंतंतृतीयोसुर्मथायति । येनविष्णोर्हिवर्पाख्यान्गुणानज्ञासिषुःपरान् । ईशानासः

न्येसूरयश्च ब्रह्मनिर्गुणमित्युक्तिभिर्निगूढान्गुणानित्यन्वयः । अवतारत्रयस्यकालभेदमाह ॥ त्रेतायामिति ॥ क्रमादेवेत्य
न्वयः । त्रयोजाताइतिशेषः । प्रयत्पितुःपरमान्नीयतइत्यस्यतात्पर्यमाह ॥ (तेषांही)एतेषामिति ॥ असौविष्णुः स्वयंभुब्रह्म
संज्ञोसावित्यनेनब्रह्मस्वयंभ्वित्येतदुपनिषदंत्यवाक्यंविष्णुपरमित्युक्तंभवति । ब्रह्मणेनमइत्यस्यब्रह्मशब्दस्यान्यपरत्वप्रतीतिनिरा
सायव्याचष्टे ॥ परस्माइति ॥ यद्वानकेवलंहनुमदादिरूपत्रयविशिष्टोवायुर्बलित्थेत्यादिश्रुतावेवप्रतिपाद्यः । किंतुप्रजापतिर्ब्र
ह्मणोब्रह्मस्वयंभ्वित्येतदुपनिषदंत्यवाक्येचेतिभावेनाह ॥ स्वयंभुब्रह्मसंज्ञोसाविति ॥ असौरूपत्रयविशिष्टोवायुःस्वस्मात्स्व
यमेवोत्पन्नत्वात्स्वयंशब्दवाच्यविष्णवाज्ञयोत्पन्नत्वाद्वास्वयंभूः । ज्ञानादिगुणपूर्णत्वाद्ब्रह्मेतिस्वयंभुब्रह्मसंज्ञइत्यर्थः । तद्धुपनिष
दिब्रह्मणेनमइत्युत्तरवाक्येब्रह्मशब्देनाऽयमेवग्राह्यःकिंनेत्याह ॥ परस्माइति ॥ ततश्चायंसूक्तार्थः । सहसःसहोरूपस्य देवस्य
क्रीडादिगुणसंपन्नस्य वायो मूलरूपंबद्बलात्मकं दर्शतंज्ञानरूपं भर्गोजगद्भरणगमनगुणं ततइत्था इत्थंभूतमेव वपुषेरूपत्रयाव
ताराय यतोयस्माद्भगवताधायिअधायि निहितंभगवताप्रेरितमित्यर्थः तस्मादजनि यद्वायतोवायोर्भगवानजनिव्यक्तोभूत्तस्मा
द्वायोरितिसंबंधः । प्रथमावतारस्वरूपमाह ॥ यदीमिति ॥ यदींयदेवमतिर्हनुमदाख्यंप्रथमंरूपमुपह्वरतेरामस्यसमीपेतिष्ठति ।
साधतेरामकार्याणिसाधयति तेनहनुमताकृतस्यसत्यरूपस्यरामस्य सस्रुतःअमृतस्रावयुक्ताः धेनावाचः अनयंतसीतांप्रतीति

भा० । सूरयश्चनिगूढान्निर्गुणोक्तिभिः । त्रेतायांद्वापरेचैवकलौचैतेक्रमात्त्रयः । एतेषांपरमोविष्णुर्नेता सर्वेश्वरेश्वरः । स्वयंभुब्रह्मसंज्ञोसौ
परस्मैब्रह्मणेनमइतिच ॥ ॐ ॥ बलित्थातद्वपुषेधायिदर्शतंदेवस्यभर्गःसहसोयतोजनि ॥ यदीमुपह्वरतेसाधतेमतिर्ऋतस्यधेनाअनयंतसस्रुतः ॥


*752

शेषः । द्वितीयावतारस्वरूपमाह ॥ पृक्षइति ॥ द्वितीयंवपुर्भीमाख्यं पृक्षःपृतनाक्षयकारी पितुमान्अन्नवान् ब्रहुभुगितिभा
वः । नित्यःनित्यं सप्तशिवासुपरममंगलरूपासु सप्तसुमातृषुप्रमाणभूतासुऋगादिषु आशयेशेतेतद्विचारयतीतिभावः । अनेन
द्वितीयावतारवाचकभीमशब्दार्थउक्तोभवति । तृतीयावतारस्वरूपमाह ॥ तृतीयमिति ॥ अस्यवृषभस्यश्रेष्ठस्यवायोः तृती
यंवपुः दोहसेज्ञानदोहाय दशप्रमतिंपूर्णप्रज्ञनामकं योषणःनार्योगुरुत्वाद्बहुवचनं जनयंतअजनयंत ॥ निर्यदीमिति ॥ बुध्ना
त्ज्ञानरूपात् यदींयस्मादेव महिषस्यमहितषड्गुणस्यहरेः वर्पसःवरणीयत्वात्पालकत्वाद्वर्पोनामकान्गुणानीशानासःरुद्राद्या
देवाः अन्येसूरयोज्ञानिनश्च शवसासुखेन निराक्रंतज्ञातवंतस्तत्तृतीयंवपुरितिपूर्वेणसंबंधः ॥ यदीमिति ॥ यदींयएव प्रदिवः
प्रकृष्टप्रकाशरूपोमध्वः आनंदतीर्थाख्योमातरिश्वावायुःगुहासंतंजीवेश्वरैक्यंवदद्भिर्गूहितंसंतंहरिंआधवेआसमंतात्पतित्वे मथा
यतिमश्नाति शास्त्रेणविचार्यनिश्चाययतीतिभावः ॥ प्रयत्पितुरिति ॥ यत्रूपत्रयं पितुःस्वोत्पादकात्परमादुत्तमाद्विष्णोः प्र
णीयतेप्रकर्षेणप्रेर्यते पृक्षुधः प्रश्नरूपान्वीरुधस्तंबादीन् दंसुदंतेषु पर्यारोहतिचर्वितवच्छकलीकरोतीत्यर्थः ॥ उभेति ॥ यत्य
स्मादस्यजनुषंजन्मावतारं उभाउभौलक्ष्मीनारायणौ इन्वतःप्रेरयतस्तस्मात्घृणाशुचिःकृपयाशुद्धः । सआदित् आभ्यांलक्ष्मी

भा० । पृक्षोवपुःपितुमान्नित्यआशयेद्वितीयमासप्तशिवासुमातृषु ॥ तृतीयमस्यवृषभस्यदोहसेदशप्रमतिंजनयंतयोषणः ॥ निर्यदींबुध्ना
न्महिषस्यवर्पसईशानासःशवसाक्रंतसूरयः ॥ यदीमनुप्रदिवोमध्वआधवेगुहासंतंमातरिश्वामथायति ॥ प्रयत्पितुःपरमान्नीयतेपर्यापृक्षुधोवीरुधो
दंसुरोहति ॥ उभायदस्यजनुषंयदिन्वतआदिद्यविष्ठोअभवद्घृणाशुचिः ॥

753

नारायणाभ्यामेवयविष्ठोवरोभवदित्यर्थः । गर्भसंबंधनिमित्तकदुःखलेशोपिनास्तीत्याह ॥ आदिति ॥ यतोवायुरादितप्रकृत लक्ष्मीनारायणप्रेरणादेवमातृराविशत् नपुनरस्यगर्भवासादिनिमित्तंविकर्मास्तीतिभावः । यासुमातृषुआसमंताच्छुचिः शुचित्वमेवाह ॥ उर्विंयेति ॥ उर्विंयोत्कृष्टयागर्भवासपीडयाअहिंस्यमानोऽबाध्यमानोविवावृधेविशेषेणाभिवृद्धोऽभूदित्यर्थः । स प्रशिवासुमातृष्वित्युक्तं तत्रविशेषमाह ॥ अन्विति ॥ सनाजुवःसदातनंभगवंतंजुषंतेप्रतिपादयंतीतिसनाजुवः पूर्वंऋगाद्याआरुहदितियत् तदनुक्रमादेवउपक्रमादेव उपक्रमादिलिंगैःक्रमेणैवऋगादिवेदचतुष्टयार्थंविचारयामासेत्यर्थः । नव्यसीषुपौरुषेयत्वेननूतनासु अवरासुत्रिषुइतिहासपुराणपंचरात्राख्यासुमातृषुनिधावतेउपक्रमादिपर्यालोचनंविनैवशीघ्रमेवार्थंविचारयतीत्यर्थः । इति परमात्मस्तवननमनाभ्यामेवग्रंथःसमापनीयोनतुस्वस्तुत्यैवेतिभावेनपुनर्भगवंतंप्रणमति ॥ पूर्णेति ॥ वेधसेसर्वज्ञायेत्यशेषमतिमंगलं ॥ श्रीमदानंदतीर्थार्यहृत्सरोजाख्यमंदिरः । इंदिराराध्यपादाब्जःप्रीयतांपुरुषोत्तमः ॥ प्रौढिप्रकाशनार्थंवानमात्सर्यादिदोषतः । कृतेयंभाष्यविवृतिःकिंतुमंदोपकारिणी ॥ बृहदारण्यभाष्यस्यविवृतिर्याकृतामया । तज्जन्यपुण्यमखिलमवाप्नोतुगुरुर्मम ॥ **इतिश्रीबृहदारण्यकभाष्यटीकायांश्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृतायांपरब्रह्मप्रकाशिकायांअष्टमोऽध्याय ॥ ८ ॥**

---

भा० । आदिन्मातृराविंशद्यास्वाशुचिरहिंस्यमानउर्वियाविवावृधे ॥ अनुयत्पूर्वाअरुहत्सनाजुवोनिनव्यसीष्ववरासुधावते ॥ पूर्णागण्यगुणोदारधाम्नेनित्यायवेधसे । अमंदानंदसांद्रायप्रेयसेविष्णवेनमः ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकोपनिषद्भाष्येऽष्टमोध्यायः ॥ ८ ॥

